न्याय-

# जागदीशीव्यधिकरणम्

## 'दीपिका' टीकोपेतम्

ता. २४-८-५९ ई.

काशी

रामेश्वरानन्द

टीकाकारः—

श्रीस्वामिरामानन्दपीठाधीश्वरयतिराजयोगीन्द्र-दर्शनकेसरी-

**स्वामि श्रीरामप्रपन्नाचार्यः**

सौराष्ट्रप्रान्तीयशृङ्गपुर ( शींगड़ा ) विश्रामद्वारिकास्थशेषमठाधीशः

प्राप्तिस्थानम्—

**चौखम्बा संस्कृत सीरिज आफिस, वाराणसी-१**

वि० सं० २०१५ ] मूल्यं ४॥) [ ई० १९५८

॥ श्रीमते रामानन्दाय नमः ॥

# अथ रामानन्दाष्टकम्

प्रयाते स्वस्थानं सतत-शुभ-दानं रघुपतौ
गता विद्या-गीता कलिभिरपनीतात्मविषया ।
समुद्धर्तुं लोकान् विगत-परिशोकान् समजनि
यती रामानन्दो मुनि-वरगयन्दो विजयताम् ॥ १ ॥

विहायाशा-भोगान् विविध-विध-रोगान् कृति-भवान्
नृणां जह्रेबोधं सदसदवरोधं सुवचसा ।
सदानन्दः शान्तो मदन-सम-कान्तोमल-यशाः
यती रामानन्दो मुनि-वर-गयन्दो विजयताम् ॥ २ ॥

यदीयं वाग्जालं बुध-जन-समालंकृतिकरम्
गुणानामाधानं सदयमभिधानं दर-गिराम् ।
शिवानां निर्देशः श्रित-मधुर-देशः प्रमुदितः
यती रामानन्दो मुनि-वर-गयन्दो विजयताम् ॥ ३ ॥

निराधाराधारः कृत-सदुपकारः क्षिति-तले
कृपा-पारावारः श्रुतिभिरित-सारः सहृदयः ।
कृतान्तो जैनानां द्विरद-यवनानां मृग-रिपुः
यती रामानन्दो मुनि-वर-गयन्दो विजयताम् ॥ ४ ॥

प्रणीयानन्दाख्यं जगति शुभ-भाष्यं दिन-करम्
तमश्चक्रे दूरं भव-विषय-पूरं दर-करम् ।
यदाश्रित्यानन्दो भवति मति-मन्दोप्यतिशयः
यती रामानन्दो मुनि-वर-गयन्दो विजयताम् ॥ ५ ॥

यदीयं वैदुष्यं सकल-गुणि-जुष्यं सुख-करम्
विपश्यन् वागीशः श्रित-दिविषदीशस्तु विमतिः।
नितान्तं सत्कर्मा निहित-निज-धर्मात्म-विरतिः
यती रामानन्दो मुनि-वर-गयन्दो विजयताम् ॥ ६ ॥

अतीवाखद्भङ्गा सकल-मल-भङ्गा नुत-पदा
तरङ्गिण्यां गङ्गा सलिल-निधि-सङ्गावविदुषाम्।
प्रधानः सम्मानो गत-हृदभिमानोप्रतिमभः
यती रामानन्दो मुनि-वर-गयन्दो विजयताम् ॥ ७ ॥

अयं रामो बालो विषय-विष-मालोनवरतम्
भवद्रूपं ध्यायँश्चरितमभिगायँश्च विमलम्।
अतोमुष्मिन् दीने निखिल-गुण-हीने शुभ-मते
कृपा-दृष्टिं स्वामिन्! सुपथ-पद्गामिन् प्रकुरुताम् ॥ ८ ॥

॥ इति श्रीरामानन्दाष्टकं समाप्तिमगात् ॥



# प्रस्तावना

अयि सरस्वतीसेवनरसिकाः !

विविधदुःखपयःपूरपूरितेऽमुष्मिन् भवाम्बुधौ निमज्जतां मानवानां समुद्धरणाय परमकारुणिकैर्महात्मभिः धर्मार्थकाममोक्षार्थेषु चतुर्विधपुरुषार्थेषु मोक्षमेव निरपायं साधनं मन्वानैर्मोक्षसाधनोपयोगि तत्तद्दर्शनं प्रणिन्ये। तेषु च 'प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्। आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता।' इति कौटिल्यार्थशास्त्रेण, 'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती। एता विद्याश्चतस्रश्च लोकसंस्थितिहेतवः।' इति नीत्या च सर्वातिशायिनी न्यायविद्यैवेति नातिरोहितं केषामपि। 'प्रत्यक्षागमाश्रितमनुमानं सा अन्वीक्षा, अथवा प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा, तया प्रवर्तते इति आन्वीक्षिकी न्यायविद्या न्यायशास्त्रमि'ति न्यायभाष्येण न्यायशास्त्रमेवान्वीक्षिकीति।

'प्रमाणैरर्थपरीक्षणं न्यायः' इति न्यायभाष्येण न्यायदर्शनस्याभिधेयमपि स्पष्टं प्रतिपादितं भवति। प्रत्यक्षानुमानोपमानशब्दभेदाच्चतुर्विधं प्रमाणम्, इतरेषामर्थापत्त्यादीनां तत्रैव यथायथमन्तर्भावात्।

'तदत्यन्तविमोक्षोऽपवर्गः' इति न्यायसूत्रेण चात्यन्तिकदुःखनिवृत्तिरेव मोक्षः। दुःखनिवृत्तौ आत्यन्तिकत्वञ्च—स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वम्, युगपदुत्पन्नसमानाधिकरणसर्वात्मविशेषगुणध्वंससमानकालीनत्वं वा। एतादृशदुःखनिवृत्तिस्तु—गृहीतजन्मविनाश-भाविजन्माभावौ विना न सम्भवति। भोगायतनशरीराभावे च व्यापकेनाप्यात्मना समं बुद्ध्यादीनां नवानां विशेषगुणानां सम्बन्धो दुरुपपाद्यः। अतएव मुक्तात्मनां निर्गुणत्वमभ्युपेयते तार्किकप्रवरैः। तथा चाभाणकः—'स्वरूपैकप्रतिष्ठानः परित्यक्तोऽखिलैर्गुणैः। ऊर्मिषट्कातिगं रूपं तदस्याहुर्मनीषिणः। संसारबन्धनाधीनदुःखक्लेशाद्यदूषितमि'ति। षडूर्मयस्तु—बुभुक्षा-पिपासा-लोभ-मोह-शीतातपाः। तत्र

बुभुक्षापिपासे प्राणस्य, लोभमोहौ मनसः, शीतातपौ शरीरस्य क्लेशदायकाविति क्लेशविशेषा एवोर्मिपदेन गृह्यन्ते। सुखाभावे च मुक्तात्मनां आनन्दोपलब्धिर्दण्डापूपायितैव। तथा च 'मुक्तात्मन आनन्दस्वरूपत्वमि'ति वेदान्तिसिद्धान्तो न विचारं सहते। 'आनन्दं ब्रह्मे'ति वाक्ये आनन्दशब्दो दुःखाभावे उपचर्य्यते, अपनीते भारे 'सुखी संवृत्तः' इति भारवाहीव। अतएव आनन्दमिति नपुंसकत्वमपि सङ्गच्छते। एतेन न्यायदर्शनस्य प्रयोजनमपि सूपपादं भवति।

गौतमेन च 'दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इति सूत्रेण मोक्षमार्गोपि प्रादर्शि। एतस्यायमाशयः—'कारणमन्तरा कार्योत्पत्तिर्न जायते' इति सिद्धान्तात् प्रतिकूलवेदनीयात्मकं दुःखं प्रति जन्म कारणम्, जन्म च आत्मनः शरीरेणाद्यक्षणसम्बन्धः शरीरधारणमिति यावत्। जन्म प्रति शुभाशुभात्मिका प्रवृत्तिः कारणम्। प्रवृत्तिं प्रति रागद्वेषात्मको दोषः कारणम्। दोषं प्रति अतस्मिंस्तद्बुद्धिरूपं मिथ्याज्ञानं कारणम्। एवञ्च दुःखबहुलं संसारं प्रति मूलभूतं कारणं मिथ्याज्ञानमेवेति सिद्धम्। 'कारणनाशेन च कार्यनाशः' इति राद्धान्तात् सर्वानर्थबीजभूतं मिथ्याज्ञानं विनाश्यम्। षोडशपदार्थानां साधर्म्यवैधर्म्याभ्यां जायमानेन तत्त्वज्ञानेन मिथ्याज्ञाननाशे रागद्वेषयोर्नाशः, तन्नाशे च शुभाशुभयोर्नाशः, तयोर्नाशे तु शरीरापायः, शरीरापाये दुःखापायरूपो मोक्षो निष्प्रत्यूह एवेति।

उद्योतकरमते तु—निःश्रेयसं द्विविधम्, परापरभेदात्। परनिःश्रेयसं विदेहमुक्तिः, अपरनिःश्रेयसं जीवन्मुक्तिः, उभयत्र तत्त्वज्ञानमेव कारणम्। इयांस्तु विशेषः—कर्म द्विविधम्, सञ्चितं प्रारब्धञ्च। तत्र तपस्यादिना सञ्चितकर्मणां विनाशेपि प्रारब्धकर्मणां भोगादेव क्षय इति सिद्धान्तः। एवञ्च 'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः। मत्वा तु सततं ध्येय एते दर्शनहेतवः।' इति स्मृत्या श्रवण-मनन-निदिध्यासनैः तत्त्वसाक्षात्कारे जातेपि प्रारब्धकर्मणि सावशेषे जीवन्मुक्तिः, निःशेषे प्रारब्धकर्मणि तु विदेहमुक्तिः। अतएव तत्त्वदर्शिनः प्रारब्धकर्मोपभोगाय कायव्यूहं रचयन्तीति।

तदेतन्न्यायदर्शनं पदार्थशास्त्रात्मकं मैथिलकुलावतंसैर्गौतमादिभिः परिपुष्टीकृतं प्राचीनन्यायपदेन व्यवह्रियते। प्रमाणशास्त्रात्मकं गङ्गेशोपज्ञेयञ्च नव्यन्यायपदेन व्यपदिश्यते। एतस्यैव महाभागस्य सर्वक्लेशापहश्चिन्तामणिरिव 'चिन्तामणि'ग्रन्थरत्नं विश्वेषां मनांसि समाह्लादयति। अयञ्च मिथिलाराज्यान्तर्गतमङ्गरौनीभुवं स्वजन्मना भूषयामासेति निर्विवादम्। नव्यन्यायजनकोयं खण्डनखण्डखाद्यकर्तुर्द्वादशशताब्द्यां वर्तमानस्य श्रीहर्षस्य मतमुपापीपदत्। पक्षधरापरपर्य्यायः श्रीजयदेवमिश्रस्तु 'आलोक'नाम्न्या टीकया चिन्तामणिमालोकयामास। जयदेवमिश्रस्य कालः त्रयोदशशताब्द्या उत्तरार्द्धः। एवञ्च चिन्तामणिकृतः कालस्त्रयोदशशताब्द्याः पूर्वार्द्धं इत्यनुमीयते।

चिन्तामणिग्रन्थरत्नस्य आलोक-प्रकाशादिटीकासु बह्वीषु विद्यमानास्वपि नैकापि रघुनाथशिरोमणिकृताया विवरणारिमकाया दीधितेर्गुणगरिमाणं भजते। बङ्गीयतार्किकेषु श्रेष्ठतमो दीधितिकारस्तु षोडशशताब्द्यां बङ्गीयभुवमलञ्चकार। एतस्य तार्किकप्रतिभामद्वितीयां विलोक्य नवद्वीप( नदिया )-वास्तव्या विपश्चिदपश्चिमा एनं 'शिरोमणी'त्युपाधिना सदकार्षुः। अयं वासुदेवसार्वभौमस्यान्यतमः शिष्यः। एतस्या दीधितेराशयं रहस्यं विदित्वा जगदीशतर्कालङ्कारो रहस्याभिधां टीकां विरचय्य स्वकीयामलौकिकीं प्रतिभां प्राकाश्यतां नियाय। तर्कालङ्कारोपि सप्तदशशताब्द्यां बङ्गभुवमेव दीपयामास। एतस्य शेमुषीजुषोपरा कीर्तिलता शब्दशक्तिप्रकाशिकाभिधाद्यापि बुधमण्डलगगनं चुम्बति। यस्या विषये 'जगदीशस्य सर्वस्वं शब्दशक्तिप्रकाशिके'ति लोकभणितिर्विदुषां रसनां भृशं स्पृशति।

एवञ्च गङ्गेशोपाध्यायस्य व्यधिकरणाभिधमेकमेव प्रकरणं रघुनाथजगदीशाभ्यां परिबृंहितं स्वतन्त्रग्रन्थरूपतां भजते।

# दीपिकाटीकाकर्तुः परिचयः

यद्यपि प्रथितयशसां महात्मनां जीवनचरित्रमतिनिगूढमेव तिष्ठति । तथापि टीकाकर्तुर्यतिप्रवरस्य चिरन्तनसम्पर्केण मया यत्किञ्चिदवेदि तदेवाधोनिर्दिश्यते । १९६२ वैक्रमाब्दे चैत्रशुक्लरामनवम्यां स्वजनुषानुगङ्गं वाराणसीक्षेत्रमलङ्कुर्वन् पित्रोरानन्दवर्धनो 'रामप्रसाद' इति कृतनामधेयो बालोयं सांसारिकविषयविषज्वालानालीढोपि गृहीतधर्मविग्रहाया अन्नपूर्णास्वरूपाया मातुः 'गुलाब'देव्याः शासनाद् गृहं त्यक्तुं न शशाक । एतस्य यतीन्द्रस्य लक्ष्मणप्रसादनामधेयोनुज एका सहोदरा चास्ताम् ।

श्रीविश्वेश्वरपादपद्मङ्गतायां मातरि सकलसुखसाधनसमवेतमपि पितुः विश्वम्भरप्रसादशर्मणः सदनं पूर्वजननसंस्कारोद्बोधेन तृणमिव परित्यज्य त्रयोदशवर्षदेशीयः श्रीरामप्रसादः परमपुरुषार्थसाधिकां करुणावरुणालय-श्रीमद्राघवपदपङ्कजभक्तिं विरक्त-दान्त-शान्तगुरुवरचरणशरणमात्रसाध्यां मन्वानस्तीर्थेषु चिरमटाट्यां कुर्वन् महामहोपाध्यायपदवीभाजो न्यायमीमांसावेदान्तादिसकलशास्त्रनिष्णातस्य श्रीमद्रामानन्दसम्प्रदायसिद्धान्तसमुन्नायकस्य श्रीरघुवराचार्यस्य शरणमाययौ । ततो गृहीतदीक्षः श्रीरामप्रपन्नाचार्यनामधेयतां प्रपन्नः समेधमानवैराग्यसम्पन्नोप्रतिमप्रतिभासमञ्चितः प्राच्य-नव्योभयन्यायप्राप्तप्रकर्षवैदुष्यो व्याकरण-वेदान्तादिदर्शननदोष्णोङ्गीकृतयोगमार्गः शरीररक्षणमात्रसाधनं टाटाम्बरं वसानः कन्दमूलपयोमात्रं भुञ्जानो मदीयसदाग्रहणेन न्यायपठनशालिनामन्तेवसतामसौविध्यं दर्शं दर्शं जागदीशीव्यधिकरणस्य कस्याश्चन टीकाया आवश्यकतामाकलय्य दीपिकाभिधां टीकां निरमात् । एतदीयत्यागिता-विरागिता-सदुपकारितादिगुणगणगरिमावर्जितमानसेन सौराष्ट्रप्रशासनेन २०।११।१९५२ तमे ईस्वीये वर्षे समर्पितं श्रीरामानन्दपीठापरनामधेयं 'शींगड़ा'मठं निर्ममो निरहङ्कारः सन् सुशासत् प्राचीनगुरुकुलनियमग्रहणग्रहिलो विजितान्तरिकरिपुः विद्वत्प्रियतापाटवो देववाणीसमुपासकः परदुःखासहिष्णुश्छात्राणां भोजनाच्छाद-

नादिसर्वविधसौविध्यप्रदानेन सुप्रसिद्धं श्रीरघुवर सं० महाविद्यालयं सञ्चालयति। यत्र चासामनेपालानेकप्रान्तीया बहुशोन्तेवसन्तः प्राचीनपरिपाट्याधीयानाः प्राचीनगुरुकुलं स्मारयन्ति। अन्तेवासिनां सौकर्यार्थं विशालः श्रीरामानन्द-पुस्तकालयो यत्र चकास्ति। 'स्थानाभावेन निराशो भूत्वा न कोपि छात्रः परावृत्तु' इति महती प्रतिज्ञा यतिप्रवरस्य।

महाविद्यालयस्य गुरुणा कार्यभारेणाक्रान्तोपि तदीयनिरुपधिस्नेहेन संशोधनकार्यं त्यक्तुं नाशकम्। अतो यथामति संशोधितयानया टीकया यदि न्याय-मधिजिगासमानानामन्तेवासिनामल्पोप्युपकारो भवेत्तदा टीकाकर्तुः स्वस्य च परिश्रमं सफलं मंस्ये।

आशासे च 'गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः। हसन्ति दुर्जनास्तत्र समादधति सज्जनाः।' इति न्यायेन सुधीजनैरत्र जातास्त्रुटयः क्षंस्यन्त इति।



# प्रकाशयित्र्याः परिचयः

अद्य मातृकल्पायाः 'सन्तोकदामजी जोशी'ति नाम्ना प्रसिद्धाया अस्य पुस्तकस्य प्रकाशयित्र्याः परिचयं ददद् अहं निजवचनं पूतीकरोमीति महान् प्रमोदावसरः।

इयञ्च सौराष्ट्रप्रदेशान्तर्गते 'वावरा'नामधेये ग्रामे औदिच्यसहस्त्रब्राह्मण-कुले १९०० ईस्वीयजनवरीमासस्य प्रथमे एव दिवसे जोशीत्युपाह्वस्य 'दामजी' नाम्नः पितुर्गृहे गङ्गास्वरूपायाः 'जवलबाई' महाभागाया अङ्कं भूषयाञ्चक्रे। एतस्या एक एवानुजन्मा सहोदरः मोम्बासानगरे मुद्रणालयाधिपतिः बी. ए. परीक्षोत्तीर्णः 'श्री माऊजीदाम जी' नामधेयः स्ववंशं दीपयते।

कुलक्रमानुसारमेतस्याः परिणयं नवमे एव वर्षे पितरौ कारयामासतुः। पूर्वजननदुरदृष्टदोषेण वर्षाभ्यन्तरे एव वैधव्यमापन्नामिमां विलोक्य भृशं शोकानलपीडितौ मातापितरौ जीवनसुयापनसाधनं शिक्षणमेव मन्वानावध्येतुं प्रोत्साहयामासतुः। पूर्वं 'राजकोट'नगरस्थिते 'फिमेल ट्रेनिंग कौलेजे' परतश्च गायकवाडमहाराजेन प्रदत्तां छात्रवृत्तिं लब्ध्वा बडौदानगरे एव गुर्जरभाषाया सीनियरपरीक्षां यावदधीतेस्म। प्रारेभे चाध्यापनकार्यं १९१७ ई० तो भूत-पूर्वबडौदाराज्यान्तर्गत-ऊंझादिनगरस्थितायां कन्यापाठशालायां विंशतिमुद्रा-मात्रवेतनेन। एतदीयरक्षणदक्षस्ततो न कदाचिदपि यावज्जीवमेतस्याः सङ्गं विजहौ। अल्पीयसा वेतनेनैव स्वीयानुजाय बी. ए. पर्यन्तमध्ययनव्ययं ददती भ्रातृजायामपि पुपोष। ऊंझानगरे एव महामहोपाध्यायपदवीभाजो वेदान्त-केसरिणः स्वामिश्रीरघुवराचार्य्यस्य सदुपदेशामृतं पिबन्ती 'अदीक्षितस्य जनस्य कर्म विफलं भवति' नारीणामपि राममन्त्रेधिकार इति ज्ञात्वा ब्रह्मभूय-प्राप्तिमार्गप्रदर्शकं ब्रह्मनिष्ठं तमेव महान्तं मन्वाना श्रीराममन्त्रदीक्षां लेभे। ततः १९२५ ईस्वीयेप्रिलमासे निजानुजेनाहूतेयं ब्रिटिश ईस्ट अफ्रिका राज्या-न्तर्गते मोम्बासानगरे 'गवर्नमेन्ट इन्डियन गर्ल्स विद्यालये'ध्यापनकार्यं

प्रारेभे । अध्यापनकार्यतो निवृत्ता भूत्वा १९५४ ईस्वीयाप्रिलमासत इहैव स्थित्वा गुरोः कीर्तिलताभूतं श्रीरघुवरमहाविद्यालयं व्यवस्थावारिणानुदिनं सिञ्चति, मातेवान्तेवसतामध्यापकानाञ्च हितकारिणी । अध्यापनतो निवृत्ति-समये ब्रिटिशप्रशासनेन पेन्शनग्रेजुटीरूपेण सप्तसहस्रमुद्राभिः पुरस्कृता साम्प्रतं प्रतिमासं भारतीयमुद्रया पेन्शनरूपेण शतत्रयं लभते । गवर्नमेन्ट इण्डियन गर्ल्स विद्यालये छात्राणां मनोरञ्जनसाधनार्थं दानरूपेण सहस्रद्वयं शिलिंगं ददौ । विद्वत्प्रकाण्डाय ब्रह्मचारिणे स्वामिश्रीभगवदाचार्याय तीर्थादि-यात्रायै पञ्चविंशतिसहस्रमदात् । अत्रत्यानामन्तेवासिनामध्ययनादावसौवि-ध्यमालोच्य पञ्चदशसहस्रमुद्राणां व्ययेन विद्युद्यन्त्रव्यवस्थां कारितवती । शींगड़ाजनताया जलाद्यसौविध्यं दृष्ट्वा जलादिव्यवस्थायै सहस्रद्वयं साहाय्यम-र्पयामास । किमधिकम्—एतस्याः सर्वोपि धनराशिः परोपकारे एव व्ययीभवति, भविष्यति च । एतस्याः पितरौ धन्यौ, ययोः कुले एतादृशी पुत्री जाता । वस्तुत एतस्याश्छत्रच्छायामुपाश्रिता वयमन्तेवासिनश्च धन्याः ।

अन्ते च परात्परश्रीरामचन्द्रप्रभोरेतस्याः स्वास्थ्यं दीर्घजीवित्वञ्च याचमानो विरमामीति ।

मकरसंक्रान्तिः २०१३
१४।१।१९५७

—ताराकान्त झा

# विषय-सूची





* श्रीमते रामानन्दाय नमः *

# जागदीशीव्यधिकरणम्

❀ चिन्तामणिः ❀

अथेदं वाच्यं ज्ञेयत्वादित्यत्र समवायितया वाच्यत्वाभावो घटे एव प्रसिद्धः, व्यधिकरणधर्मावच्छिन्नाभावस्य केवलान्वयित्वात्। न चैवं घट एव व्यभिचारः, साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वं हि व्यभिचारः, न च वाच्यत्वाभावस्तादृशो घटे इति चेत्-तर्हि तादृशसाध्याभावसामानाधिकरण्याभावो व्याप्तिः, तथा चाप्रसिद्धिः।

❀ दीपिका ❀

पितुः शास्तिं धृत्वा सुभगमपि हित्वा निजपदम्।
वनं व्यालाकीर्णं सदनमिव मत्वा सुखकरम्॥
दशास्यं हन्तारं सततमवितारं सुरजनान्।
नमामि श्रीरामं जनकतनयाभूषिततनुम्॥ १॥
चार्वाकादिसमस्तनास्तिकवचः सन्दूषणैर्भूषितम्।
रामानन्दगुरुं परं यतिवरं भाष्यादिसम्भाषिणम्॥
स्मृत्वा चापि सुधोपमामनुभवानन्दोक्तिमानन्दाम्।
ध्यायं ध्यायमनुक्षणं रघुवरं वेदान्तपञ्चाननम्॥ २॥
रामप्रपन्नयोगीन्द्रः स्मृत्वा भूयो गुरोर्वचः।
करोमि दीपिकां टीकां जानकीजानितुष्टये॥ ३॥

अथ साध्याभावादिघटितव्यभिचाराभावरूपव्याप्तौ वाच्यत्वादिसाध्यककेवलान्वयिस्थले साध्याभावस्य साध्यवदन्यत्वस्य चाप्रसिद्ध्या प्रसक्तामव्याप्तिं व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावाभ्युपगन्तृसोन्दड़मतमालम्ब्योद्धर्तुमाशङ्कते चिन्तामणिकारः-अथेति। अत्राथशब्द आशङ्कार्थकः, 'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ' इत्यभियुक्तोक्त्याऽन्यार्थमुपनीयमानोदकुम्भदर्शनवन्मङ्गलार्थकोऽपि सम्भवेदिति। परममूले-समवायितयेति। तृतीयार्थो वैशिष्ट्यम्, 'प्रकृत्यादिभ्य उपसंख्यानमि'ति कात्यायनवार्तिकेन विहितायास्तृतीयायाः सम्बन्धार्थकत्वात्। उक्तञ्च-पदवाक्यरत्नाकरे-'प्रकृत्यादिगणाज्जाता तृतीया तु तदात्मताम्। अवच्छेदकतावृत्ति प्रकारत्वादि शंसती'ति। प्रकृत्यादेराकृतिगणत्वात् समवायितयेत्यत्र तृतीया भवति। अत एव-द्रव्यत्वावच्छिन्नविषयतावान् घट इत्यन्वयबोधाभिप्रायेण 'द्रव्यत्वेन विषयो घट' इति प्रयोगे द्रव्यत्वेनेत्यत्र तृतीया सिद्ध्यति। तच्च-वैशिष्ट्यं स्वावच्छिन्नप्रतियोगिताकत्वरूपम्, तस्य वाच्यत्वाभावेऽन्वयः। तथा च समवायित्वावच्छिन्नप्रतियोगिताकवाच्यत्वाभावस्य घटादौ प्रसिद्ध्या न केवलान्वयिस्थले साध्याभावाप्रसिद्धिनिबन्धनाऽव्याप्तिरिति शङ्कितुराशयः।

ननु प्रतियोगिना साकमत्यन्ताभावस्य विरोधेन वाच्यत्वरूपप्रतियोगिमति घटादौ कथं समवायित्वावच्छिन्नप्रतियोगिताकवाच्यत्वाभावस्य प्रसिद्धिरिति चेन्न—अत्यन्ताभावस्य प्रतियोगितावच्छेदकविशिष्टप्रतियोगिना सममेव विरोधेन समवायित्वादिरूपव्यधिकरणधर्मविशिष्टवाच्यत्वादेरधिकरणाऽप्रसिद्ध्या विरोधाभावात्। व्यधिकरणधर्मावच्छिन्नेत्यादिना मैथिलकुलावतंसस्य चिन्तामणिकृतोऽप्ययमेवाशयः।

अथ किमिदं व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावत्वम्—न तावत् स्वप्रतियोग्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वम्, तदनुगमश्च-अभावविशिष्टत्वम्, वै० च-स्वतादात्म्य-स्वप्रतियोग्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वोभयसम्बन्धेन। तथा सति समनियताभावयोरैक्यमते घटत्वेन पटाभावस्य पटत्वेन घटाभावरूपतया घटत्वेन पटाभावस्य प्रतियोगी घटोऽपीति तत्र घटत्वस्य वर्तमानत्वेन प्रतियोग्यवृत्तिधर्मस्याऽप्रसिद्ध्याऽसम्भवाऽपत्तेः। न च स्वाश्रयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वन्निवेशनीयम्, तदनुगमश्च-प्रतियोगिताविशिष्टप्रतियोगिताकाभावत्वम्, वै० च-स्वतादात्म्य-स्वाश्रयवृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठाऽवच्छेदकताकप्रतियोगिताकभेदवद्धर्मावच्छिन्नत्वोभयसम्बन्धेन तथा च नोक्तदोषः, समनियताभावयोरैक्येऽपि प्रति-

योगितयोर्भेदादिति वाच्यम्—एवमपि विशिष्टसत्तया गुणो नास्तीत्यभावस्यासंग्रहाऽपत्तेः, स्वाश्रयवृत्तित्वस्यापि स्वावच्छेदकताघटकसम्बन्धेन वाच्यतया संयोगेन घटत्वेन गुणो नास्तीत्यभावस्यासंग्रहापत्तेश्च ।

अत्र केचित्—अवच्छेदकताविशिष्टप्रतियोगिताकत्व-प्रतियोगिताविशिष्टनिरवच्छिन्नाऽवच्छेदकताकप्रतियोगिताकत्व—एतदन्यतरवदभावो व्यधिकरणधर्मावच्छिन्नाभावः । प्रतियोगितायाम् अवच्छेदकतावै० च-स्वनिरूपकत्व-स्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वोभयसम्बन्धेन । प्रतियोगितावै० निरवच्छिन्नाऽवच्छेदकतायां स्वनिरूपितत्व—स्वाश्रयनिष्ठाधिकरणतात्वव्यापकभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन । भेदप्रतियोगितावच्छेदकता च स्वावच्छेदकसम्बन्धावच्छिन्नस्वाश्रयनिष्ठनिरवच्छिन्ननिरूपकतानिरूपितत्वसम्बन्धावच्छिन्ना ग्राह्या । विशिष्टसत्तया गुणाभावादिसंग्रहाय प्रथमदलोपादानम्, निरवच्छिन्नाऽवच्छेदकताकप्रतियोगिताकाभावसंग्रहाय द्वितीयदलप्रवेशः । तत्र चावच्छेदकतायां निरवच्छिन्नत्वाप्रवेशे रजतत्वत्वेन रजतत्वेन रजतत्वत्वेन रजतत्वविशिष्टावगाहिज्ञानं नास्तीत्यभावेऽतिव्याप्तेः, तज्ज्ञाननिष्ठाऽधिकरणतासामान्ये तादृशावच्छेदकताश्रयनिष्ठनिरवच्छिन्ननिरूपकतानिरूपितत्वाभावसत्त्वात् । एवं सम्बन्धघटकनिरूपकतायां निरवच्छिन्नत्वाप्रवेशे स्वरूपतो रजतत्वेन रजतत्वत्वेन रजतत्वविशिष्टावगाहिज्ञानाभावस्यासंग्रहापत्तेः, तज्ज्ञाननिष्ठाधिकरणतायां रजतत्वत्वावच्छिन्नरजतत्वनिष्ठनिरूपकतानिरूपितत्वसत्त्वादिति वदन्ति ।

वस्तुतस्तु—प्रतियोगिताविशिष्टप्रतियोगिताकाभाव एव व्यधिकरणधर्मावच्छिन्नाभावपदार्थः । प्रतियोगितायां प्रतियोगितावै० च—स्वतादात्म्य—स्वाश्रयनिष्ठाऽधिकरणतानिरूपितनिरूपकताविशिष्टाऽन्यावच्छेदकताकत्वोभयसम्बन्धेन । अवच्छेदकतायां निरूपकतावै० च-स्वावच्छेदकसम्बन्धावच्छिन्नत्व—स्वसामानाधिकरण्य—स्वानवच्छेदकानवच्छिन्नत्व—स्ववृत्तित्व—एतच्चतुष्टयसम्बन्धेन । स्ववृत्तित्वञ्च—स्वानवच्छेदकानवच्छिन्नत्वरूपेण बोध्यम् । अत्र स्वपदेनावच्छेदकता ग्राह्या । यथा—घटत्वेन पटाभावीयपटनिष्ठप्रतियोगितायां तादृशपटनिष्ठप्रतियोगितावैशिष्ट्यं वर्तते, तथा हि—पटनिष्ठप्रतियोगितायां तादृशप्रतियोगितातादात्म्यं वर्तते, एवं स्वं प्रतियोगित्वम् तदाश्रयः पटस्तन्निष्ठाऽधिकरणतानिरूपितनिरूपकता पटत्वे वर्तते, इति निरुक्तप्रसिद्धचतुष्टयसम्बन्धेन तादृशनिरूपकताविशिष्टा पटत्वनिष्ठैवावच्छेदकता, तदन्यघटत्वनिष्ठाऽवच्छेद-

कताकत्वमपि तादृशपटनिष्ठप्रतियोगितायां वर्तत इति घटत्वेन पटाभावस्य व्यधिकरणधर्मावच्छिन्नाभावत्वमिति ।

अत्र प्रसिद्धचतुष्टयसम्बन्धघटकस्वावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे कालिकेन घटत्वस्य पटेऽपि सत्त्वेन स्वाश्रयपटनिष्ठाऽधिकरणतानिरूपितघटत्वनिष्ठकालिकसम्बन्धावच्छिन्ननिरूपकतावैशिष्टयस्य स्वसामानाधिकरण्य-स्वानवच्छेदकानवच्छिन्नत्व-स्ववृत्तित्वैतत्त्रितयसम्बन्धेन समवायसम्बन्धावच्छिन्नघटत्वनिष्ठाऽवच्छेदकतायां सत्त्वेन समवायसम्बन्धावच्छिन्नघटत्वनिष्ठाऽवच्छेदकताकप्रतियोगिताकाभावस्य घटत्वेन पटाभावस्य संग्रहो न स्यादतस्तन्निवेशः । तद्दलप्रवेशे तु-तादृशघटत्वनिष्ठनिरूपकतावच्छेदक-कालिकसम्बन्धावच्छिन्नत्वं समवायसम्बन्धावच्छिन्नघटत्वनिष्ठाऽवच्छेदकतायां नास्तीति तदन्यावच्छेदकताकप्रतियोगिताकाभावस्य घटत्वेन पटाभावस्य संग्रहो भवति ।

एवं स्वसामानाधिकरण्यदलानुक्तौ स्वाश्रय-पट-निष्ठाधिकरणतानिरूपितसमवायसम्बन्धावच्छिन्नपटत्वनिष्ठनिरूपकतावैशिष्टयस्य स्वावच्छेदकसमवायसम्बन्धावच्छिन्नत्व-स्वानवच्छेदकानवच्छिन्नत्व-स्ववृत्तित्वैतत्त्रितयसम्बन्धेन घटत्वनिष्ठप्रतियोगितावच्छेदकतायां वर्तमानत्वेन घटत्वेन पटाभावस्य संग्रहो न स्यात् । स्वसामानाधिकरण्यप्रवेशे तु घटत्वनिष्ठाऽवच्छेदकतायां पटत्वनिष्ठनिरूपकतासामानाधिकरण्यविरहेण पटत्वनिष्ठनिरूपकताविशिष्टान्यत्वं घटत्वनिष्ठाऽवच्छेदकतायां वर्तते इति नासंग्रहः । स्वानवच्छेदकानवच्छिन्नत्वदलानुक्तौ तु विषयित्वसम्बन्धावच्छिन्नस्वरूपतो ( निरवच्छिन्न ) रजतत्वनिष्ठनिरूपकतानिरूपिताधिकरणताशालि-रजतत्वावगाहिज्ञानाभावस्य रजतत्वत्वावच्छिन्नविषयित्वसम्बन्धावच्छिन्नरजतत्वनिष्ठावच्छेदकताकज्ञाननिष्ठप्रतियोगिताकरूपस्य संग्रहो न स्यात्, यतो हि स्वाश्रय-रजतत्वावगाहिज्ञाननिष्ठाधिकरणतानिरूपितरजतत्वनिष्ठविषयित्वसम्बन्धावच्छिन्ननिरूपकतावैशिष्टयमेव रजतत्वत्वावच्छिन्नरजतत्वनिष्ठाऽवच्छेदकतायां स्वसामानाधिकरण्यस्वावच्छेदकविषयित्वसम्बन्धावच्छिन्नत्व-स्ववृत्तित्वैतत्त्रितयसम्बन्धेन वर्तत इति तादृशनिरूपकताविशिष्टान्यत्वं रजतत्वनिष्ठाऽवच्छेदकतायां नास्ति । तत्प्रवेशे तु नासंग्रहः, रजतत्वनिष्ठनिरूपकतायाः स्वरूपतो भानेन स्वं रजतत्वनिष्ठनिरूपकत्वम्, तदनवच्छेदकं रजतत्वत्वम्, रजतत्वनिष्ठप्रतियोगितावच्छेदकता च रजतत्वत्वावच्छिन्नेति रजतत्वनिष्ठप्रतियोगितावच्छेदकतायां स्वानवच्छेदकानवच्छिन्नत्वाभावात् । एवं स्ववृत्तित्वदलानुक्तौ स्वरूपतो-निरवच्छिन्न-रजतत्वनिष्ठाऽवच्छेदकताकस्य रजतत्वत्वावच्छिन्नविषयित्वसम्बन्धावच्छिन्न-

रजतत्वनिष्ठनिरूपकतानिरूपिताऽधिकरणताशालिज्ञानाभावस्य संग्रहो न स्यात्, यतश्च निरवच्छिन्नरजतत्वनिष्ठप्रतियोगितावच्छेदकतायां रजतत्वत्वावच्छिन्नविषयित्वसम्बन्धावच्छिन्नरजतत्वनिष्ठनिरूपकतावैशिष्ट्यमेव स्वसामानाधिकरण्य-स्वावच्छेदकविषयित्वसम्बन्धावच्छिन्नत्व-स्वानवच्छेदक-घटत्वाद्यनवच्छिन्नत्वैतत्त्रितयसम्बन्धेन वर्तते। स्ववृत्तित्वप्रवेशे तु-स्वं निरवच्छिन्नरजतत्वनिष्ठावच्छेदकत्वम्, तदनवच्छेदकं रजतत्वत्वम्, तदवच्छिन्नत्वस्यैव रजतत्वत्वावच्छिन्नरजतत्वनिष्ठनिरूपकतायां वर्तमानत्वेन स्वानवच्छेदकानवच्छिन्नत्वरूपेण स्ववृत्तित्वविरहान्न तादृशरजतत्वनिष्ठावच्छेदकतायां तादृशनिरूपकतावैशिष्ट्यमिति न दोषः।

न चैवमपि स्वानवच्छेदकत्वमित्यस्य स्वावच्छेदकभिन्नत्वमर्थः। तथा चैकत्र निरूपकताया अपरत्रावच्छेदकतायाश्च निरवच्छिन्नत्वेन स्वावच्छेदकाप्रसिद्धया तद्भिन्नत्वस्याप्यप्रसिद्धिरिति वाच्यम्, अवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वस्यैव स्वानवच्छेदकत्वपदार्थत्वात्, तथा च पूर्वत्र निरूपकताया अपरत्रावच्छेदकतायाश्चाभावोऽवच्छेदकत्वसम्बन्धेन रजतत्वत्वे वर्तत इति नाप्रसिद्धिरिति भावः।

## ❀ दीधितिः ❀

**समवायितयेति। वाच्यत्वन्न यथा समवायि तथा वक्ष्यते, घटादिसमवायितयेत्यर्थ इत्यप्याहुः।**

## ❀ जागदीशी ❀

नन्वीश्वरेच्छारूपवाच्यत्वस्य गुणत्वादिसमवायित्वात् समवायित्वं न तद्व्यधिकरणधर्म इत्यत आह—वाच्यत्वमिति। अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छाविषयत्वं पदार्थान्तरं वा वाच्यत्वम्, न तु तादृशेच्छामात्रम्, अतिप्रसक्तत्वात्, तच्च न कस्यापि समवायीति भावः। समवायितयेति मूलस्य समवायिकारणतयेत्यर्थ इत्यप्याहुः।

## ❀ दीपिका ❀

अथ पदशक्तिरेव वाच्यत्वपदार्थः, पदशक्तिश्च अस्मात् पदादयमर्थो बोद्धव्य इत्याकारिका भगवदिच्छैव, न तु पदार्थान्तरम्, अवश्यक्लृप्तपदार्थेनैव चरितार्थत्वसंभवेऽतिरिक्तपदार्थकल्पनस्यानौचित्यात्, एवञ्च समवायप्रतियोगित्वरूपस्य समवायानुयोगित्वरूपस्य वा समवायित्वस्य भगवदिच्छारूपवाच्यत्वे वर्तमान-

त्वेन समवायित्वस्य वाच्यत्वाभावीयप्रतियोगितायाः कथं व्यधिकरणधर्मत्वमित्याशङ्कते— **नन्विति । गुणत्वादीति ।** गुणत्वादिप्रतियोगिकसमवायित्वादित्यर्थः । आदिना इच्छात्वादेः परिग्रहः । **तद्व्यधिकरणेति ।** वाच्यत्वाभावीयप्रतियोगिताया व्यधिकरणधर्म इत्यर्थः । **अस्माच्छब्दादिति ।** अत्र ज्ञायमानपदस्य शाब्दबोधकरणत्वमते जन्यत्वं पञ्चम्यर्थः । पदज्ञानस्य करणत्वे ज्ञानजन्यत्वमर्थः, तस्य च बुधधात्वर्थे बोधे स्वरूपसम्बन्धेनान्वयः, बोधस्य च निरूपितत्वसम्बन्धेन तव्यप्रत्यार्थे विषयत्वे सम्बन्धः, विषयत्वस्य च स्वरूपेण प्रथमान्तार्थेऽन्वयः, विशेषणविभक्तेरभेदार्थकत्वेन इदम्पदार्थस्याभेदसम्बन्धेन शब्देऽन्वयः, तथा च एतत्पदजन्यबोधविषयतावान् अर्थ इति फलितोऽर्थः । अत्र या बोधविषत्वप्रकारतानिरूपितविशेष्यता सैव पदशक्तिः, तदेव वाच्यत्वम् । किञ्चेश्वरेच्छारूपायाः शक्तेर्वाच्यत्वपदार्थे वच्धातुनैव शक्तिरूपपदार्थलाभसंभवेन ण्यत्प्रत्ययस्य निरर्थकत्वमपि स्यादिति भावः ।

ईश्वरानभ्युपगन्तृमीमांसकमते ईश्वरेच्छाविषयत्वरूपं वाच्यत्वन्न संभवतीत्यत आह—**पदार्थान्तरं वेति ।** विषयतात्वादीनामिव वाच्यत्वस्यातिरिक्तपदार्थत्वमिति भावः । **अतिप्रसक्तत्वादिति ।** लाक्षणिकापभ्रंशादिस्थले वाचकत्वातिप्रसङ्गादित्यर्थः, ईश्वरेच्छाया अबाधितसर्वविषयकत्वेन तीरादिलक्ष्यार्थे गगरीप्रभृत्यपभ्रंशार्थे च तादृशेच्छायाः सत्त्वादिति भावः ।

अथ ईश्वरेच्छारूपवाच्यत्वमङ्गीकुर्वतां जरन्नैयायिकानां मते समवायित्वं न तद्व्यधिकरणधर्म इत्यत आह **दीधितौ—घटादिसमवायितयेत्यर्थ इति ।** तथा च घटादिसमवायित्वमित्यस्य घटादिप्रतियोगिसमवायानुयोगित्वमित्यर्थेन तस्य च कपालादावेव सत्त्वेनेश्वरेच्छारूपवाच्यत्वे नास्तीति भावः । यथाश्रुतपरतयैवोपपत्तौ समवायिपदस्य विशेषपरतया व्याख्यानमनुचितमित्याहुरित्यनेनास्वरसः सूचितः ।

ननु समवायस्यैकत्वेनेच्छायां गुणत्वसमवायसत्त्वे घटप्रतियोगिकसमवायोऽप्यस्तीत्यत आह—**समवायितयेति मूलस्येति ।** तथा च इच्छायाः समवायिकारणत्वविरहान्न दोष इति भावः ।

नन्वेवं रीत्या साध्याभावस्य प्रसिद्धावपि समवायित्वेन वाच्यत्वाभाववति घटे ज्ञेयत्वादिहेतोः सत्त्वेन साध्याभाववद्वृत्तित्वरूपव्यभिचार एवेत्याशङ्कते-परममूले— **न चैवमिति ।** एवम् = निरुक्तरूपेण साध्याभावप्रसिद्धावपि । व्यभिचाराऽऽशङ्कां निराकरोति—**साध्यतावच्छेदकेत्यादि । व्यभिचार इति ।** न तु साध्याभाव-

वदवृत्तित्वमात्रं व्यभिचार इति भावः । न चेत्यस्य नहीत्यर्थः । तादृशः = साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकः । अयमाशयः—साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाव एव व्यभिचारघटकः, समवायित्वेन वाच्यत्वाभावस्य साध्यतावच्छेदकीभूतवाच्यत्वत्वावच्छिन्नप्रतियोगिताकत्वाभावेन न व्यभिचारघटकत्वमिति ।

ननु निरुक्तदिशा व्यभिचारपदार्थवर्णनेऽपि तादृशव्यभिचाराभावस्यैव व्याप्तिपदार्थतया तावतापि व्याप्तिघटकसाध्याभावाप्रसिद्धिस्तदवस्थैवेत्याह—**तर्हीति । तादृशेति ।** साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकेत्यर्थः ।

❀ दीधितिः ❀

**प्रमेयसाध्यके च भावत्वेनाभावानामभावत्वेन भावानां वह्नित्वेन निर्वह्नौ अवृत्तिमात्रवृत्तिगगनत्वादिना विरुद्धघटत्वपटत्वोभयाभ्यां च प्रमेयमात्रस्याभावः सुलभः ।**

❀ जागदीशी ❀

ननिवदं वाच्यं ज्ञेयत्वादित्यादौ समवायितया वाच्यत्वाभावस्य प्रसिद्धावपि प्रमेयवान् वाच्यत्वादित्यादौ तदप्रसिद्धेरनुद्धारान्मूलस्य न्यूनत्वमत आह—प्रमेयेति । भावत्वेनाभावानामभावः सुलभ इत्यन्वयः । ननु भावत्वेनाभावो नास्तीति प्रतीतिरभावस्यैवाभावत्वेन भावो नास्तीति प्रतीतिर्भावस्यैव प्रतियोगित्वमवगाहते, न चैतावता प्रमेयमात्रप्रतियोगिकाभावप्रसिद्धिरित्यत आह—वह्नित्वेनेति । वह्नित्वेन निर्वह्नौ सर्वेषामभावः सुलभ इति योजना ।

❀ दीपिका ❀

अथ वाच्यत्वसाध्यकस्थले समवायित्वरूपव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकसाध्याभावस्य प्रसिद्धावपि प्रमेयत्वादिना प्रमेयसाध्यकस्थले सद्धेतौ प्रमेयस्य जगद्रूपतया प्रमेयसामान्यावृत्तिधर्मस्यैवाप्रसिद्ध्या व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यापि साध्याभावस्याप्रसिद्धेरनुद्धारान्मूले न्यूनत्वमित्याह—**नन्विदमिति । तदप्रसिद्धेरिति** । साध्याभावाप्रसिद्धेरित्यर्थः । **न्यूनत्वमिति** । तदकथनज्ञानज्ञाप्यतदज्ञानवत्पुरुषोच्चरितत्वं ग्रन्थनिष्ठन्यूनत्वम् ।

**प्रमेयसाध्यके चेति दीधितिः** । अयमाशयः—वह्निमान् धूमादित्यत्र वह्न्यभावमादाय प्रसक्ताऽव्याप्तिवारणाय 'साध्याभाववदवृत्तित्वमि' त्यत्र साध्याभाव-

पदेन साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावस्यैव ग्रहीतुं शक्यतया समनियताभावानामैक्यमते भावत्वेन अभावाभावस्य अभावत्वेन भावाभावस्य च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकतया समनियतत्वेनैक्यमिति तदीयप्रतियोगितायाः साध्यतावच्छेदकीभूतप्रमेयत्वसमनियततया नाप्रसिद्धिरिति ।

अथ साध्यतावच्छेदकसमनियतत्वञ्च-साध्यतावच्छेदकव्यापकत्वे सति साध्यतावच्छेदकव्याप्यत्वम्, तत्र साध्यतावच्छेदकव्यापकत्वं साध्यतावच्छेदकवन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपमेव निवेश्यते, तथा च साध्यतावच्छेदकीभूतप्रमेयत्वाधिकरणेऽभावेऽभावत्वेन भावाभावीयप्रतियोगितावान्नेति भेदस्य भावात्मके प्रमेयत्वाधिकरणे भावत्वेनाभावाभावीयप्रतियोगितावान्नेति भेदस्य च सत्त्वेन प्रत्येकं निरुक्ताभावीयप्रतियोगिताया निरुक्तभेदीयप्रतियोगितावच्छेदकत्वमेवेति न तादृशी काऽपि प्रतियोगिता साध्यतावच्छेदकीभूतप्रमेयत्वव्यापिकेति कथं प्रमेयवान् वाच्यत्वादित्यत्र साध्याभावस्य प्रसिद्धिरित्याशयेन शङ्कते—**ननु भावत्वेनाभावो नास्तीति । प्रमेयमात्रेति ।** साध्यतावच्छेदकीभूतप्रमेयत्वसमनियतप्रतियोगिताकाभावेत्यर्थः ।

**वह्नित्वेन निर्वह्नाविति दीधितिः ।** तथा च निर्वह्नौ वह्नित्वेन प्रमेयन्नास्तीति प्रतीतिसाक्षिकाभावीयप्रमेयनिष्ठप्रतियोगितायाः प्रमेयत्वरूपसाध्यतावच्छेदकसमनियततया प्रमेयवान् वाच्यत्वादित्यादौ न साध्याभावाप्रसिद्धिरिति भावः । निर्वह्नौ = वह्न्यभाववति जलादौ ।

## ❀ जागदीशी ❀

ननु जले वह्नित्वेन प्रमेयं नास्तीति प्रतीतिरपि प्रमेयवह्निमात्रप्रतियोगिकाभावमात्रमवगाहते, न तु प्रमेयसामान्यप्रतियोगिकाभावम्, वह्निमति तादृशप्रतीत्यनुत्पत्त्या वह्निप्रतियोगिकाभावावगाहित्वस्यावश्यकत्वादत आह—**अवृत्तीति ।** तथा च गगनत्वेन प्रमेयं नास्तीति प्रतीत्यैव प्रमेयसामान्यप्रतियोगिकाभावप्रसिद्धिः, न हि तत्रापि गगनमात्रप्रतियोगिकत्वं भासते इति वक्तुं शक्यते, विनिगमकाभावेन प्रमेयमात्रस्यैव प्रतियोगित्वावगाहने बाधकाभावात् । कालिकसम्बन्धेन गगनत्वादिविशिष्टस्य प्रमेयस्य सर्वत्र नाभावः संभवतीत्यत उक्तम्—**अवृत्तिमात्रवृत्तीति ।** तथा च यादृशसम्बन्धेन गगनत्वादेर्वृत्तिमदवृत्तित्वं तादृशसम्बन्धावच्छि-

त्राऽवच्छेदकताकप्रतियोगिताको गगनत्वादिना प्रमेयसामान्याभावो वाच्य इति भावः ।

❀ दीपिका ❀

नन्वेवमपि जलादौ वह्नित्वेन प्रमेयसामान्याभावीयप्रतियोगिता वह्निमात्रेऽभ्युपेयते, न तु प्रमेयसामान्ये, अन्यथा अत्यन्ताभावस्य प्रतियोगिना सममेव विरोधेन महानसादावपि निरुक्ताभावीयप्रतियोगिनः प्रमेयसामान्यस्यासत्त्वेन वह्नित्वेन प्रमेयन्नास्तीति प्रतीत्यापत्तिः स्यात्, अस्मन्मते तु प्रतियोगिताश्रयवह्निरूपप्रमेयस्य सत्त्वेन न तत्प्रतीतिः । एवञ्च तादृशाभावीयप्रतियोगिताया अपि साध्यतावच्छेदकीभूतप्रमेयत्वाव्यापकत्वेन कथं तत्र साध्याभावस्य प्रसिद्धिरित्याशयेनाऽशङ्कते—**ननु जले वह्नित्वेनेति । प्रमेयसामान्यप्रतियोगिकेति** । प्रमेयत्वसमनियतप्रतियोगिताकेत्यर्थः ।

ननु गगनत्वेन प्रमेयसामान्याभावीयप्रतियोगिताऽपि पूर्ववद् गगनमात्रेऽभ्युपगम्यते, तथा च तादृशाभावीयप्रतियोगिता न साध्यतावच्छेदकीभूतप्रमेयत्वव्यापिकेति चेन्न—विनिगमनाविरहेण प्रमेयसामान्येऽपि प्रतियोगितायाः स्वीकारादित्याशयेनाह—**नह्वि तत्रापीति** । गगनत्वेन प्रमेयं नास्तीति प्रतीतिसाक्षिकेऽभावे इत्यर्थः । **विनिगमकेति** । एकतरपक्षपातिनी युक्तिर्विनिगमना तस्या विरहेणेत्यर्थः । इदन्तु तत्त्वम् । महानसादौ वह्नित्वेन प्रमेयं नास्तीति प्रतीतिविरहेण तदभावीयप्रतियोगिता वह्निरूपप्रमेये एवोररीक्रियते, गगनत्वेन प्रमेयाभावस्य तु केवलान्वयितया तदीयप्रतियोगिताया गगनवृत्तित्वप्रमेयसामान्यवृत्तित्वयोरेकतरपक्षनिर्णायिकाया युक्तेर्विरहेण गगने प्रमेयसामान्ये च प्रतियोगिता स्वीक्रियते ।

अथैवमपि कालिकेन गगनत्वस्य जन्यवह्न्यादौ वर्तमानत्वेन गगनत्वेन प्रमेयसामान्याभावस्य महानसादाववृत्तितया प्रमेयत्वस्य च तत्र वृत्तितया तदीयप्रतियोगिताया अपि न साध्यतावच्छेदकीभूतप्रमेयत्वव्यापकत्वमित्याशयेनाह—**कालिकसम्बन्धेनेति । सर्वत्र नाभाव इति** । न च जन्यमात्रस्य कालोपाधित्वात् कुत्रापि नाभावः संभवतीति सर्वत्रेति पदस्यासम्बद्धत्वमिति वाच्यम्—क्रियैव काल इति मते नित्यगुणादौ गगनत्वेन प्रमेयसामान्याभावस्य सुलभतया सर्वत्रेति पदस्य सार्थक्यात् । दीधितौ **अवृत्तिमात्रवृत्तीति** । अवृत्तिमात्रवृत्तितानियामकसम्बन्धेनेत्यर्थः, कालिकसम्बन्धस्तु न तादृशः, स्वरूपसम्बन्धावच्छिन्नगगनत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभाव इति फलितम् । **यादृशसम्बन्धेनेति** । स्वरूपादिसम्बन्धेनेत्यर्थः ।

### ❀ जागदीशी ❀

ननु कालिकसम्बन्धेन प्रमेयसाध्यकस्थले कालिकसम्बन्धेनैव साध्याभावस्य प्रसिद्धिः कार्या, सा च कालिकसम्बन्धेन गगनत्वेन प्रमेयं नास्तीति प्रतीत्या न संभवति, तत्सम्बन्धेन गगनादेर्वृत्तित्वमते तादृशप्रतीतेर्गगनप्रतियोगिकत्वावगाहिताध्रौव्ये तत एवोपपत्तौ प्रमेयान्तरप्रतियोगिकत्वे मानाभावादत आह—विरुद्धेति । तथा च घटत्वपटत्वाभ्यां प्रमेयं नास्तीति प्रतीत्या निखिलप्रमेयप्रतियोगिकस्तत्राप्यभावः प्रसिद्ध इति भावः। इदमुपलक्षणम् ।संयोगादिसम्बन्धेन घटत्वादिकमपि प्रमेयावृत्तीति तत्सम्बन्धेन घटत्वावच्छिन्नप्रतियोगिताकप्रमेयसामान्याभावोऽपि बोध्यः ।

### ❀ दीपिका ❀

अथैवमपि समवायेन वह्न्यभावमादाय वह्निमान् धूमादित्यादावसंभववारणाय साध्याभावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमवश्यन्निवेशनीयम्, एवञ्च कालिकसम्बन्धेन प्रमेयसाध्यकस्थलेऽव्याप्तिः, कालिकसम्बन्धेन गगनादेर्वृत्तित्वमते कालिकसम्बन्धावच्छिन्नगगनत्वावच्छिन्नप्रमेयनिष्ठप्रतियोगिताकाभावस्य कालिकेन गगनत्वेन प्रमेयं नास्तीति प्रतीतिसिद्धस्य प्रतियोगिता गगनाऽऽत्मकप्रमेये एवाभ्युपेयत इति साध्यतावच्छेदकीभूतप्रमेयत्वव्यापकप्रतियोगिताया अप्रसिद्धेरित्याह— **ननु कालिकसम्बन्धेनेति । संयोगादिसंबन्धेनेति ।** अयमाशयः-संयोगसम्बन्धस्य घटत्वादिव्यधिकरणतया तत्सम्बन्धेन घटत्वादिजातेः कुत्राप्यसत्त्वेन संयोगसम्बन्धावच्छिन्नघटत्वनिष्ठावच्छेदकताककालिकसम्बन्धावच्छिन्नप्रमेयसामान्यनिष्ठप्रतियोगिताकाभावस्यापि साध्यतावच्छेदकीभूतप्रमेयत्वव्यापकप्रतियोगिताकतया कालिकेन प्रमेयसाध्यकस्थले न साध्याभावाप्रसिद्धिरिति ।

केचित्तु—उक्तरीत्या मूलस्य न्यूनतापरिहारसम्पादकत्वेन प्रमेयसाध्यके चेति ग्रन्थो व्याख्यातो जगदीशेन। तन्न साधु। तथा हि-साध्याभाववदवृत्तित्वलक्षणे साध्यप्रतियोगिकाभाव एव निवेश्यः। समानाधिकरणवह्निधूमयोरेव व्याप्तिः, गुणवान् द्रव्यत्वादित्यादौ च गुणत्वादिकमेव परम्परया साध्यतावच्छेदकम्, विशिष्टाभावस्तु विशेषणाद्यभावरूप एव, उभयाभावोऽपि यदभावप्रयुक्तस्तदभावरूप एवेत्यभिमानवता सोन्दडोपाध्यायेनाथेत्यादिना साध्याभावप्रसिद्धिः कृता, अग्रे च तर्हीत्यादिनाऽभिमाननिराकरणमिति साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यव्यधिकरणधर्मावच्छिन्नाभावव्यक्तिभिन्नत्वोभयाभाववानभावः, साध्यतावच्छेदकापर्य्याप्तस्वसमानाधिकरणनिष्ठाऽ-

वच्छेदकताकप्रतियोगिताभिन्नप्रतियोगिताकाभावो वा साध्याभावपदेन विवक्षित इत्याशयः। एवञ्च प्रमेयसाध्यकेऽपि समवायितया वाच्यत्वाभावमादायैव प्रसिद्धिसंभवेन मूलस्य न्यूनत्वाभावेन न्यूनतापरिहारसम्पादकतयाऽवतारणासंभवेन कूटघटितलक्षणाभिप्रायकतयैव तद्ग्रन्थव्याख्यानमुचितमित्याहुः।

❀ दीधितिः ❀

**ननु पारिभाषिकमेवाव्यभिचरितत्वम्, तथा हि—यत्समानाधिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः प्रतियोगिसमानाधिकरणास्तत्त्वम्।**

❀ जागदीशी ❀

अप्रसिद्धिदोषस्यैव सत्त्वान्मूले प्रतियोग्यवृत्तिश्चेति दोषान्तरं किमुपात्तम्, अतस्तदवतारार्थं शङ्कते—नन्विति। पारिभाषिकमेवेत्येवकारेण न व्यभिचारोऽव्यभिचार इति योगार्थो व्यवच्छिद्यते। अव्यभिचरितत्वमिति। अथेदं वाच्यं ज्ञेयत्वादित्यादिग्रन्थाभिप्रेतमिति शेषः। तथा च न चैवं घटे एवेत्यादिमूलस्य केवलान्वयिनो व्यभिचारित्वेनाऽलक्ष्यताप्रदर्शनपरत्वान्न पूर्वमूलासङ्गतिरिति ध्येयम्।

❀ दीपिका ❀

**तदवतारार्थमिति।** प्रतियोग्यवृत्तिश्चेत्याद्यग्रिमग्रन्थावतारार्थमित्यर्थः। दीधितौ **पारिभाषिकमेवेति।** पारिभाषिकत्वञ्च—योगानपेक्षसङ्केतशालित्वम्, स च सङ्केतः शास्त्रकृतामितरेषाञ्च, सिद्ध्यभावादौ पक्षतापदस्याऽऽद्यः, चैत्रादौ च चैत्रपदस्य द्वितीयः, प्रकृतेऽपि स्वाभिमतवक्ष्यमाणव्याप्तिस्वरूपेऽव्यभिचरितत्वपदसङ्केतस्याऽधुनिकतया पारिभाषिकत्वमुपपन्नं भवतीति भावः।

ननु पारिभाषिकाव्यभिचरितत्वस्यैव 'अथेदं वाच्यं ज्ञेयत्वादि' त्यादिग्रन्थाभिप्रेतत्वे साध्याभाववदवृत्तित्वरूपाव्यभिचरितत्वाभिप्रायको 'नचैवं घटे एव व्यभिचार' इत्यादिग्रन्थो विरुणद्धीत्यत आह—**तथा चेति।** पारिभाषिकाव्यभिचरितत्वाभ्युपगमे चेत्यर्थः। **न पूर्वमूलासङ्गतिरितीति।** मान्यास्तु एतद्ग्रन्थमित्थं व्याचख्युः तथा हि—तथा च न चैवं घटे एवेत्यादिमूलस्य केवलान्वयिनो व्यभिचारित्वेनालक्ष्यताप्रदर्शनपरत्वादित्यत्र तथा चेत्यस्य पारिभाषिकाव्यभिचरितत्वस्य अथेदं वाच्यं ज्ञेयत्वादित्यादिग्रन्थाभिप्रेतत्वे चेत्यर्थः। तथा च पारिभाषिकाव्यभिचरि-

तत्वस्य अथेदं वाच्यं ज्ञेयत्वादित्यादिग्रन्थाभिप्रेतत्वे सति न चैवं घटे एव व्यभिचार इति मूलस्य केवलान्वयिनो व्यभिचारित्वेनाऽलक्ष्यताप्रदर्शनपरत्वादित्यर्थकसमुदायः पूर्वापरग्रन्थासङ्गत्यभावे हेतुः, पारिभाषिकाव्यभिचरितत्वस्य अथेदं वाच्यं ज्ञेयत्वादित्यादिग्रन्थानभिप्रेतत्वे व्याप्तेः साध्यसामान्याभावघटिततया समवायित्वेन वाच्यत्वाभावमादाय प्रसिद्धयभिधानस्यासङ्गत्यापत्तिरिति पूर्वमूलासङ्गतिस्तन्निरासार्थं सत्यन्तं हेतुविशेषणम्। नचैवं घटे एवेत्यादिमूलस्य केवलान्वयिनो व्यभिचारित्वेनालक्ष्यताप्रदर्शनपरत्वाभावे पारिभाषिकाव्यभिचरितत्वस्य व्याप्तित्वे घटान्तर्भावेण हेतौ तादृशाभाववद्वृत्तित्वं न क्षतिकरमिति अपरमूलासङ्गतिस्तन्निरसने व्यभिचारित्वेनालक्ष्यताप्रदर्शनपरत्वं हेतुः। तथा चायं मूलाशयः-अयं हेतुरलक्ष्यः व्यभिचारित्वादित्यनुमानाज् ज्ञेयत्वेऽलक्ष्यत्वं सिद्धम्, तथा च तत्साधारणपारिभाषिकाव्यभिचरितत्वलक्षणकरणमनुचितमेवेत्यभिप्रेत्याऽह—**नचैवं घटे एव व्यभिचार इति।** साध्यसामान्याभाववद्वृत्तित्वस्यैव व्यभिचाररूपत्वेनालक्ष्यतानुमापकत्वात्, प्रकृते च तादृशाभावाप्रसिद्धया व्यभिचाराप्रसिद्धिरित्यभिप्रेत्याऽह—**साध्यतावच्छेदकावच्छिन्नेत्यादि।** व्यभिचारधीविरोधिज्ञानविषयस्यैव व्याप्तित्वेन पारिभाषिकाव्यभिचरितत्वानुधावनं व्यर्थं तज्ज्ञानस्य व्यभिचारज्ञानाविरोधादित्यभिप्रेत्याऽह—**तादृशसाध्याभावसामानाधिकरण्याभावो व्याप्तिरिति।** पारिभाषिकाव्यभिचरितत्वज्ञानस्य व्यभिचारज्ञानं प्रति मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वमस्त्येवेति पारिभाषिकाव्यभिचरितत्वलक्षणमेव करणीयम्, अतस्तदपि खण्डयति-**प्रतियोग्यवृत्तिश्चेत्यादिनेति।**

**यत्समानाधिकरणा इत्यादि दीधितिः।** अत्र यत्समानाधिकरणसाध्यव्यापकतावच्छेदकप्रतियोगिताकयावदभावे प्रतियोगिसामानाधिकरण्यं विधीयते, यत्पदं हेतुपरम्, तथा च-हेत्वधिकरणवृत्तयः, साध्यतावच्छेदकावच्छिन्नस्य व्यापकतावच्छेदिका या प्रतियोगिता तादृशप्रतियोगितानिरूपका यावन्तोऽभावाः स्वप्रतियोग्यधिकरणवृत्तयः तत्त्वं व्याप्तिरित्यर्थः। वह्निमान् धूमादित्यत्र हेतोर्धूमस्याधिकरणे पर्वतादौ वर्तमानो वह्निरूपसाध्यव्यापकतावच्छेदकप्रतियोगिताको घटत्वेन वह्नयभावादिः, तादृशाभावश्च वह्निरूपप्रतियोग्यधिकरणे पर्वतादौ वर्तते, तादृशाभावस्य केवलान्वयित्वादिति लक्षणसमन्वयः। इदं वाच्यं ज्ञेयत्वादित्यादौ केवलान्वयिनि ज्ञेयत्वाऽत्मकहेत्वधिकरणे घटादौ वर्तमानो वाच्यत्वरूपसाध्यव्यापकतावच्छेदकप्रतियोगिताकः समवायित्वेन वाच्यत्वाभावादिः, तादृशाभावश्च वाच्यत्वाऽत्मकस्वप्रति-

योग्यधिकरणे वर्तत इति तत्रापि लक्षणसंगतिः । धूमवान् वह्नेरित्यत्र वह्न्यात्मकहेत्वधिकरणेऽयोगोलके वर्तमानो यावदन्तर्गतो धूमव्यापकतावच्छेदकप्रतियोगिताको धूमसामान्याभावोऽपीति धूमसामान्याभावस्य धूमरूपस्वप्रतियोग्यधिकरणे पर्वतादाववर्तमानत्वान्नातिव्याप्तिरपीति हृदयम् ।

## ❁ जागदीशी ❁

यदित्यादि । अत्र यत्समानाधिकरणा इत्यस्यानुक्तौ साध्यव्यापकतावच्छेदकप्रतियोगिताकस्याऽऽत्मत्वसामान्याभावस्य यावदन्तर्गतत्वात्तस्य च व्यापकताघटकसमवायसम्बन्धेन प्रतियोग्यधिकरणे केनापि सम्बन्धेनाऽवृत्तित्वाद् अयमात्मा ज्ञानादित्यादावव्याप्तिरतस्तदुपात्तमित्यग्रे व्यक्तीभविष्यति ।

## ❁ दीपिका ❁

अत्र यत्सामानाधिकरण्यदलानुक्तौ अयमात्मा ज्ञानादित्यत्राव्याप्तिः, तथा हि— यावदन्तर्गतः आत्मत्वरूपसाध्यव्यापकतावच्छेदकप्रतियोगिताक आत्मत्वसामान्याभावोऽपि, आत्मत्वसामान्याभावस्य च व्यापकतावच्छेदकसमवायसम्बन्धेनाऽऽत्मत्वरूपप्रतियोग्यधिकरणे आत्मनि केनापि सम्बन्धेन न वर्तमानत्वम्, अतो यत्सामानाधिकरण्यपदमुपात्तम् । तदुपादाने तु हेतोर्ज्ञानस्याधिकरणे आत्मनि आत्मत्वसामान्याभावस्यावर्तमानतया न लक्षणघटकत्वम्, किन्तु घटत्वादिना आत्मत्वाभावस्यैव, तादृशाभावस्य च व्यापकताघटकसमवायसम्बन्धेन आत्मत्वरूपप्रतियोग्यधिकरणे आत्मनि स्वरूपेण वर्तमानत्वान्नाव्याप्तिरित्याह—**अत्र यत्समानाधिकरणा इत्यस्यानुक्ताविति ।**

ननु वह्न्यधिकरणे महानसादौ गगनाभावस्य सत्त्वेन गगनाभावाभावीयप्रतियोगितावान्नास्तीत्याकारकाभावस्यासत्त्वेन तत्प्रतियोगितायामपि साध्यवन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वरूपसाध्यव्यापकतावच्छेदकत्वस्य सत्त्वेन गगनाभावाभावोऽपि लक्षणघटकः, तत्र च गगनाभावात्मकप्रतियोगिसामानाधिकरण्यविरहेण वह्निमान् धूमादित्यादौ सर्वत्र यत्सामानाधिकरण्यदलाप्रवेशेऽसंभवसंभवेऽव्याप्तिदानमनुचितमिति चेन्न—साध्यव्यापकतावच्छेदकप्रतियोगिताकयावदभावे वृत्तिमत्त्वस्यापि विशेषणीयतया गगनाऽऽत्मकगगनाभावाभावस्य वृत्तिमत्त्वविरहेणासम्भवानवकाशात् ।

अथैवमपि वह्निसामान्याभावमादाय वह्निमान् धूमादित्यादावव्याप्तिसंभवे प्रसिद्धस्थलत्यागोऽनुचित इति चेन्न—वह्न्यभावस्यापि वह्न्यधिकरणे पर्वतादौ कालिकसम्बन्धेन वर्तमानतयाऽव्याप्तेस्तत्रानवकाशात्। न चैवमपि महाप्रलयभेदाभावीयप्रतियोगितायाः वह्न्यादिरूपसाध्यव्यापकतावच्छेदकतया यावदन्तर्गतस्य महाप्रलयभेदाभावस्य महाप्रलयत्वाऽत्मकस्य हेत्वधिकरणपर्वताद्यवच्छेदेन महाप्रलयभेदरूपप्रतियोगिसामानाधिकरण्यविरहेण वह्निमान् धूमादित्यत्रैवाव्याप्तिसंभवे स्थलान्तरानुधावनं व्यर्थमेवेति वाच्यम्—महाप्रलयानङ्गीकारात्, स्वविशिष्टहेत्वधिकरणावच्छेदेनेत्यस्याप्रवेशे महाकाले प्रतियोगिसामानाधिकरण्याच्च। अयमात्मा ज्ञानादित्यत्र तु स्वविशिष्टहेत्वधिकरणावच्छेदेनेत्यस्य प्रवेशेऽप्रवेशे चोभयथाऽव्याप्तिरिति तत्त्वम्।

अथ प्रसङ्गान्महाप्रलयस्वरूपन्निरूप्यते—अदृष्टसध्रीचीनैः कालानलझञ्झानिलादिभिः स्थूलेऽखिले जगति विलोपिते सति त्रसरेणुनाशार्थं (१) प्रथमक्षणे परमाणुक्रियोत्पद्यते, (२) क्रियातो विभागः, (३) विभागात् पूर्वसंयोगनाशः, (४) तत उत्तरदेश(त्रसरेणु)संयोगो द्व्यणुकत्वावच्छिन्नध्वंसश्च, (५) ततः क्रियानाशस्त्रसरेणुनाशश्च, (६) ततः षष्ठक्षणे आश्रय (त्रसरेणु) नाशादेवोत्तरसंयोगनाशः, स एव षष्ठः क्षणो निखिलजन्यानाधारभूतो 'महाप्रलय' इत्युच्यतेऽभियुक्तैरिति।

ननु व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशवृत्त्यभावस्यैकदेशभेदस्य च सर्वैरेवाभ्युपगम्यमानतया 'आत्मघटयोर्नात्मत्वमि'ति प्रतीत्योभयत्वावच्छेदेनाऽत्मन्यप्यात्मत्वसामान्याभावस्य सत्त्वे बाधकाभावेन तत्र च व्यापकतावच्छेदकसमवायसम्बन्धेन प्रतियोगिसामानाधिकरण्यसौलभ्येन 'अयमात्मा ज्ञानादि'त्यत्राव्याप्तिविरहेण यत्समानाधिकरणदलप्रवेशो व्यर्थ इति चेन्न—आत्मनि रूपध्वंसस्यासत्त्वेन रूपध्वंसात्मकाभावस्यापि तादृशयावदन्तर्गततया तत्र हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहेणाव्याप्तेर्दुर्वारत्वात्।

ननु तथापि तादृशप्रतियोगितायां धर्मानवच्छिन्नत्वस्य निवेशेनैव आत्मत्वसामान्याभावस्य यावदनन्तर्गततयाऽव्याप्तिविरहाद् व्यर्थमेव यत्सामानाधिकरण्यदलम्। न च सामान्याभावस्य लक्षणाघटकत्वे धूमवान् वह्नेरित्यादौ व्यभिचारिण्यतिव्याप्तिरिति वाच्यम्, तत्र गगनेन धूमाद्यभावस्य, व्यभिचारिस्थल(अयोगोलक)भेदाभावस्य च यावदन्तर्गतस्य स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोग्यसमानाधिकरणत्वादिति चेन्न—अवृत्तिश्च धर्मो न प्रतियोगितावच्छेदक इत्युक्तावेव सामञ्जस्ये

प्रतियोग्यवृत्तीति मूलस्य निष्प्रयोजनत्वापत्तेः । समनियताभावैक्यमते गगनेन साध्याभावादेर्घटत्वेन वाच्यत्वाभावरूपतयाऽतिव्याप्त्यापत्तेश्चोक्तनिवेशासंभवात् ।

ननु यत्समानाधिकरणा इत्यस्यानुपादानेऽपि साध्यव्यापकतावच्छेदकप्रतियोगितायां साध्यतावच्छेदकानवच्छिन्नत्वदानादेव नाऽऽत्मत्वसामान्याभावसंग्रहः, तदीयप्रतियोगितायाः साध्यतावच्छेदकीभूताऽऽत्मत्वत्वावच्छिन्नत्वात् । न च द्रव्यत्वाभावस्य साध्यतावच्छेदकानवच्छिन्नप्रतियोगिताकस्य यावदन्तर्गतस्य प्रतियोगिसामानाधिकरण्यविरहेणाव्याप्तिरिति वाच्यम्—प्रतियोगितायाः साध्यनिष्ठत्वेनापि विशेषणीयत्वादिति चेन्न—हेतुसामानाधिकरण्यापेक्षया गौरवात् । ननु निरवच्छिन्नसाध्यतास्थले अयमात्मा ज्ञानादित्यादौ साध्यतावच्छेदकाप्रसिद्ध्याऽव्याप्तिः । साध्यव्यापकत्वनिवेशे च विशिष्टसत्तावान् जातेरित्यादौ ग्रन्थकृतैवातिव्याप्तेर्वक्ष्यमाणत्वात् । न च निरवच्छिन्नसाध्यतास्थले साध्यनिष्ठनिरूपकताकाधिकरणत्वमेव निवेश्यमिति वाच्यम्—व्यभिचारिणः सर्वलक्षणस्यालक्ष्यतया ग्रन्थकारोक्तविशिष्टसत्तासाध्यकव्यभिचारिण्यतिव्याप्तेर्दुरुद्धरत्वादिति चेन्न—साध्यताविशिष्टनिरूपकतेत्यादिरीत्याऽनुगताया एव व्याप्तेः स्वीकारात् । निरूपकतायां साध्यतावै० च—स्वसामानाधिकरण्य-स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वानवच्छेदकानवच्छिन्नत्व-स्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन । स्ववृत्तित्वञ्च—स्वानवच्छेदकानवच्छिन्नत्वरूपेण । अत्र स्वसामानाधिकरण्यानुक्तौ व्यभिचारनिरूपकाधिकरणेऽपि निरवच्छिन्नवाच्यत्वनिरूपकतासत्त्वाद् व्यभिचारिणि अयमभावोऽभावजात्यन्यतरत्वादित्यादौ स्वरूपेण स्वरूपतोऽभावत्वसाध्यकेऽतिव्याप्तिरिति तन्निवेशः । स्वावच्छेदकसम्बन्धावच्छिन्नत्वानुपादाने तत्रैव व्यभिचारित्वसम्बन्धावच्छिन्नसाध्यनिष्ठनिरवच्छिन्ननिरूपकतामादायातिव्याप्तितादवस्थ्यमिति तन्निवेशः । महानसीयवह्नेः प्रतियोगितासम्बन्धेन साध्यत्वे महानसीयवह्न्यभाववह्न्यभावाऽन्यतरत्वहेतौ वह्नित्वावच्छिन्ननिरूपकतामादायातिव्याप्तिरिति स्ववृत्तित्वनिवेशः । वह्नेः प्रतियोगितासम्बन्धेन साध्यत्वे निरुक्तहेतौ महानसीयवह्नित्वावच्छिन्ननिरूपकतामादायातिव्याप्तिवारणाय स्वानवच्छेदकानवच्छिन्नत्वनिवेशः ।

## ❀ जागदीशी ❀

न चात्मत्वाभावोऽपि समानकालीनत्वादिसम्बन्धेन प्रतियोग्यधिकरणवृत्तिः, तथाविधसम्बन्धानां वृत्त्यनियामकत्वात्, क्वचिदपि तेन सम्बन्धेन वृत्तिमत्त्वाप्रतीतेः । इत्थञ्च हेतुसमानाधिकरणत्वमपि हेत्वधिकर-

णाधेयत्वं ग्राह्यम्। तेन आत्मत्वाद्यभावस्यापि हेत्वधिकरणसम्बन्धित्वा-न्नोक्तदोषतादवस्थ्यम्।

❀ दीपिका ❀

अथ प्रतियोगिसामानाधिकरण्यमित्यस्य प्रतियोग्यधिकरणसम्बन्धित्वार्थकत्वेन आत्मत्वाभावे स्वप्रतियोग्यधिकरणीभूताऽऽत्मसम्बन्धित्वस्य समानकालीनत्वादिस-म्बन्धेन सत्त्वान्नाऽऽत्मत्वसाध्यके ज्ञानहेतावव्याप्तिरिति यत्सामानाधिकरण्यदलं व्यर्थ-मिति चेन्न—प्रतियोगिसामानाधिकरण्यमित्यस्य प्रतियोग्यधिकरणवृत्तित्वार्थकत्वस्या-ऽवश्यकतया तद्दलस्य सार्थक्यात्, प्रतियोग्यधिकरणसम्बन्धित्वप्रवेशे तु गगना-भावाभावस्य समानकालीनत्वादिसम्बन्धेन प्रतियोगिसमानाधिकरणतया व्यधिकरण-धर्मावच्छिन्नाभावं विनैव सर्वत्र लक्षणसमन्वयसंभवे प्रतियोग्यवृत्तिश्चेति ग्रन्थानुत्थितिः स्यादित्याशयेनाऽऽह—**न चाऽऽत्मत्वाभावोऽपीति।** समानकालीनत्वादीत्यत्रा-ऽऽदिपदेनैकज्ञानविषयत्वादेः परिग्रहः। **इत्थञ्चेति।** समानकालीनत्वादेर्वृत्तितानिया-मकत्वाभावे सतीत्यर्थः। तथा च हेतुसामानाधिकरण्यस्य हेत्वधिकरणसम्बन्धित्वार्थ-कत्वे आत्मत्वसामान्याभावस्य हेत्वधिकरणीभूताऽऽत्मसम्बन्धित्वेन यत्सामानाधिक-रण्यदलप्रवेशेऽपि अयमात्मा ज्ञानादित्यत्राव्याप्तिदोषस्य दुरुद्धरत्वमिति हेतुसामा-नाधिकरण्यस्यापि हेत्वधिकरणवृत्तित्वमर्थ इति भावः।

❀ जागदीशी ❀

न च हेतुसमानाधिकरणा इत्यपहाय साध्यसमानाधिकरणा यावन्त-स्तादृशाभावाः स्वविशिष्टयद्धर्मावच्छिन्नहेत्वधिकरणावच्छेदेन प्रतियोगि-समानाधिकरणास्तद्धर्मवत्त्वमित्येवं कुतो न लक्षणं कृतमिति वाच्यम्—द्रव्यमात्मत्वादित्यादौ महाकाले साध्यसमानाधिकरणस्य द्रव्यत्वादिसामा-न्याभावस्य स्वविशिष्टहेत्वधिकरणाप्रसिद्ध्या तत्राव्याप्तिप्रसङ्गात्।

न च दैशिकविशेषणताविशेषेण साध्याधिकरणवृत्तित्वविवक्षणेना-व्याप्तिवारणसंभव इति वाच्यम्—तथा सति गौरवात्।

❀ दीपिका ❀

ननु आत्मत्वसामान्याभावमादाय आत्मत्वसाध्यके ज्ञानहेतावव्याप्तेः साध्यसामा-नाधिकरण्यनिवेशेनैव वारणसंभवाद् हेतुसामानाधिकरण्यप्रवेशो व्यर्थः, हेतुसामाना-धिकरण्यापेक्षया साध्यसामानाधिकरण्यप्रवेशेऽनुगमे लाघवात्। तथा हि—साध्यसामा-

नाधिकरण्यघटितलक्षणस्य-साध्यतावच्छेदकविशिष्टाभावत्वव्यापकाभावकालीनहेतुतावच्छेदकवत्त्वमित्यनुगमः । वै० च—स्वावच्छिन्नसामानाधिकरण्यस्वावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वोभयसम्बन्धेन । स्वं साध्यतावच्छेदकम् । अभावत्वव्यापकता चाभावे—स्वतादात्म्य-स्वविशिष्टहेत्वधिकरणताव्यापकत्वोभयसम्बन्धेन । स्वम्—अभावः । अत्र व्यापकता च-स्वाश्रयत्व-स्वनिरूपितप्रतियोगिताश्रयवत्त्वोभयसम्बन्धेन । यत्सामानाधिकरण्यघटितकल्पस्य तु-हेतुतावच्छेदकविशिष्टाभावत्वव्यापकाभावकालीनहेतुतावच्छेदकवत्त्वमित्यनुगमः । वै० च—स्वावच्छिन्नसामानाधिकरण्य—स्वकालीनसाध्यव्यापकतावच्छेदकप्रतियोगिताकत्वोभयसम्बन्धेन । स्वं हेतुतावच्छेदकम् । अभावत्वव्यापकतादिकं पूर्ववत् । एवञ्चात्र सम्बन्धांशे कालीनत्वस्याधिकस्य प्रवेशे गौरवम् । मान्यास्तु—साध्यतावच्छेदकविशिष्टाभावत्वव्यापकाभावकालीनहेतुतावच्छेदकवत्त्वम्, साध्यतावच्छेदकवैशिष्ट्यञ्च पूर्ववत् । अभावत्वव्यापकता चाभावे स्वतादात्म्य-स्वविशिष्टहेत्वधिकरणत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नवत्त्वोभयसम्बन्धेन । कूटत्वावच्छिन्नवत्त्वं च—स्वनिरूपिताऽऽधेयताविशिष्टाऽऽधेयतावत्त्वसम्बन्धेन । आधेयतायाम्—आधेयतावै० च-स्वाश्रयाभावनिरूपितप्रतियोगिताविशिष्टनिरूपकतानिरूपिताधिकरणतावन्निरूपितत्व-स्वतादात्म्योभयसम्बन्धेन । अत्र वै० च—स्वसामानाधिकरण्य—स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन । यत्समानाधिकरणेत्यादिलक्षणार्थस्तु—हेतुतावच्छेदकविशिष्टाभावत्वव्यापकाभावकालीनहेतुतावच्छेदकवत्त्वम् । अभावे हेतुतावच्छेदकवै० च—स्वावच्छिन्नसामानाधिकरण्य—स्वकालीनसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वोभयसम्बन्धेन । अभावत्वव्यापकता च पूर्ववत् । एवञ्च वैशिष्ट्यघटकसम्बन्धांशे कालीनत्वमधिकं पतितम्, साध्यसामानाधिकरण्यकल्पे तु न तस्य प्रवेश इत्याहुः ।

एतदेवाऽऽशङ्कते—**न च हेतुसमानाधिकरणा इति ।** तादृशाभावाः = साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावाः । स्वपदमत्र तादृशाभावपरम्, यद्धर्मपदं हेतुतावच्छेदकपरम् ।

समाधत्ते—**द्रव्यमात्मत्वादित्यादाविति ।** तथा च साध्यसामानाधिकरण्यप्रवेशे महाकालस्य जगदाधारत्वाद् द्रव्यत्वरूपसाध्याधिकरणे महाकाले वर्तमानो द्रव्यत्वसामान्याभावोऽपि यावदन्तर्गतः, तस्य चाऽऽत्मनि असत्त्वेन स्वविशिष्टहेत्वधिकरणस्यैवाप्रसिद्धया द्रव्यत्वसाध्यक आत्मत्वहेतावव्याप्तिः । हेतुसामानाधिकरण्यप्रवेशे तु द्रव्यत्वसामान्याभावस्य हेतुसामानाधिकरण्यं नास्ति, अपि तु घटत्वादिना

द्रव्यत्वाभावस्यैव, तादृशाभावस्य द्रव्यत्वात्मकप्रतियोगिनश्चात्मनि सत्त्वेन स्वविशिष्टहेत्वधिकरणीभूताऽत्मावच्छेदेन प्रतियोगिसामानाधिकरण्यान्न दोषः।

ननु साध्याधिकरणवृत्तित्वार्थकसाध्यसामानाधिकरण्यघटकवृत्तिता स्वरूपसम्बन्धेन गृह्यते, तथा च द्रव्यत्वसामान्याभावस्य महाकाले कालिकसम्बन्धेन वृत्तित्वेऽपि स्वरूपेणावर्तमानतया न यावदन्तर्गतत्वमिति नं तादृशाभावमादायाव्याप्तिसंभावनेति शङ्कते—**न च दैशिकविशेषणतेति।** समाधत्ते—**तथा सति गौरवादिति।** तथा सतीत्यस्य स्वरूपसम्बन्धेन साध्यसामानाधिकरण्योक्तावित्यर्थः। न च स्वरूपसम्बन्धेन साध्यसामानाधिकरण्योक्तौ महाकाले द्रव्यत्वाऽत्मत्वोभयाभावस्य आत्मत्वविशिष्टद्रव्यत्वाभावस्य च स्वरूपसम्बन्धेन वर्तमानतया यावदन्तर्गततया तादृशोभयाभावादिविशिष्टहेत्वधिकरणाप्रसिद्धया द्रव्यमात्मत्वादित्यत्राव्याप्तितादवस्थ्ये गौरवाभिधानमनुचितमिति वाच्यम्, साध्यसमानाधिकरणाभावे वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वस्य निवेशेन निरुक्तोभयाभावस्य उभयत्वरूपव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वेन निरुक्तविशिष्टाभावस्य च वैशिष्ट्यावच्छिन्नप्रतियोगिताकत्वेन यावदनन्तर्गततया लक्षणाघटकत्वात्।

ननु धूमवान् वह्नेरित्यादावतिव्याप्तिसंभवे गौरवाभिधानमनुचितम्, तथा हि—धूमाभावस्य दैशिकविशेषणतया साध्यवन्महानसादिवृत्तित्वाभावात्, अव्याप्यवृत्तित्वेन साध्यवद्वृत्तित्वे तु साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वाभावादेव लक्षणाघटकत्वात्, अयोगोलकान्यत्वाभावस्यापि निरुक्तसम्बन्धेन साध्यवद्वृत्तित्वविरहात्, घटत्वेन अयोगोलकान्यत्वाभावस्य यावदन्तर्गतत्वेऽपि तत्समनियतत्वस्य घटत्वेन वाच्यत्वाभावेऽक्षततया स्वनिरूपितप्रतियोगिताश्रयसामानाधिकरण्यस्याक्षतत्वादिति चेन्न, समनियताभावानामनैक्याभिप्रायेण तत्कल्पप्रणयनात्। तथा च घटत्वेन तदयोगोलकभेदाभावमादायैव अतिव्याप्तिवारणमिति।

कस्मिंश्चित् पुस्तके—द्रव्यत्वसामान्याभावमादायाव्याप्तिवारणाय साध्यवद्वृत्तित्वं स्वरूपेण निवेश्य तदुपरि विशिष्टाभावोभयाभावादिकमादायाव्याप्तिः, वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वनिवेशे तु गौरवमित्यधिकः पाठः।

## ❀ जागदीशी ❀

**यत्तु यत्समानाधिकरणा यावन्तस्तादृशाभावाः साध्यसमानाधिकरणास्तत्त्वमित्येव लक्षणमस्तु, स्वस्वप्रतियोगिसामानाधिकरण्यप्रवेशे बी-**

जाभाव इति। तत्तुच्छम्। तथा सति यत्समानाधिकरणा यावन्तोऽभावाः साध्यसमानाधिकरणास्तत्त्वमित्यस्यैव सम्यक्त्वे साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका इत्यस्य व्यर्थतापत्तेः। तन्मात्रोक्तौ च विनापि व्यधिकरणधर्मावच्छिन्नाभावं लक्षणसंभवे प्रतियोग्यवृत्तिश्चेति ग्रन्थावतारानुपपत्तेः।

❀ दीपिका ❀

तादृशाभावे स्वस्वप्रतियोगिसामानाधिकरण्यनिवेशे बीजाभावमालोच्य तत्स्थाने साध्यसामानाधिकरण्यं प्रवेश्य लक्षणं परिष्कुर्वतां केषाञ्चिन्मतं दूषयितुमुपन्यस्यति— **यत्त्विति**। तादृशाभावाः = साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावाः। तथा च तादृशयावदभावान्तर्गते घटत्वादिना वह्न्यभावे वह्निरूपसाध्याधिकरणीभूतपर्वतादिवृत्तित्वमस्तीति वह्निमान् धूमादित्यादौ लक्षणसमन्वयः। धूमवान् वह्नेरित्यादौ यावदन्तर्गते धूमसामान्याभावे धूमात्मकसाध्याधिकरणीभूतमहानसवृत्तित्वन्नास्तीति नातिव्याप्तिः। तन्मतं दूषयति—**तत्तुच्छमिति**। तथा सति = तादृशयावदभावे साध्यसामानाधिकरण्यस्यैव प्रवेशे सति। तथा च साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वदलस्य—गोत्वाद्यभावमादाय प्रसज्यमानस्यासम्भवस्य वारणं प्रयोजनं वक्ष्यते, साध्यसामानाधिकरण्यस्यैव प्रवेशे तु तमादायासम्भवस्य विरहेण तद्दलं व्यर्थं स्यादिति भावः। वैयर्थ्यञ्च—स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकः स्वसमानाधिकरणः प्रकृतसाध्यव्याप्यतावच्छेदको यो धर्मस्तदवच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकधर्मवत्त्वम्। स्वपदेन व्यर्थतावच्छेदकपरिग्रहः।

नन्वत्र गवाद्यभावस्यापि सृष्टिकालावच्छेदेन साध्यसमानाधिकरणतया कालो गोमान् गोत्वादित्यत्रातिव्याप्तिः, तन्निरासाय हेत्वधिकरणावच्छेदेन साध्यसामानाधिकरण्यमवश्यं वक्तव्यम्, तथा च हेत्वधिकरणायोगोलकावच्छेदेन घटाद्यभावे धूमात्मकसाध्यसामानाधिकरण्यविरहेण घटाद्यभावमादाय धूमवान् वह्नेरित्यत्रातिव्याप्तिविरहेण 'यः कश्चिदभावो हेत्वधिकरणावच्छेदेन साध्यसमानाधिकरणः' इत्यस्यैव सम्यक्त्वे यत्सामानाधिकरण्यदलस्य, यावत्पदस्य, स्वविशिष्टपदस्य च वैयर्थ्यसंभवेन तदनुक्तौ ग्रन्थन्यूनत्वं कुतो नेति चेन्न, कालो गोमान् गोत्वादित्यत्र प्रलयभेदाभावस्यापि प्रलयत्वस्वरूपस्य यावदन्तर्गततया प्रलयभेदाभावे गवादिरूपसाध्याधिकरणीभूतसृष्टिकालवृत्तित्वाभावेनातिव्याप्तिवारणसंभवाद् हेत्वधिकरणावच्छेदेनेत्यस्याप्रवेशेन

घटाद्यभावमादाय धूमवान् वह्नेरित्यत्रातिव्याप्तिवारणाय यावत्त्वनिवेशस्याऽवश्यकत्वे वह्निमान् धूमादित्यत्र वह्निसामान्याभावमादायाव्याप्तिवारणाय यत्सामानाधिकरण्य-दलस्य सार्थक्यसंभवात् । न च प्रलयभेदाभावस्यापि कालिकेन सृष्टिकालवृत्तित्वात् साध्यसामानाधिकरण्यस्याक्षतत्वेनातिव्याप्तिरिति वाच्यम्, साध्याधिकरणवृत्तित्वस्य स्वरूपेणैव निविष्टतया स्वरूपेण प्रलयभेदाभावस्य प्रलयमात्रवृत्तित्वेन साध्यसामाना-धिकरण्यविरहेणातिव्याप्तेर्निरासात् ।

ननु लाघवात् साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वाघटि-तैव व्याप्तिरस्तु इति चेत्तदाह—**तन्मात्रोक्ताविति** । तथा च 'यत्समानाधिकरणा यावन्तोऽभावाः साध्यसमानाधिकरणास्तत्त्व'मित्यस्यैव स्वीकारे ज्ञेयत्वरूपहेत्वधिकरणे पटादौ वर्तमाने घटत्वाद्यभावे वाच्यत्वरूपसाध्याधिकरणीभूतपटादिनिरूपितवृत्तित्वस्य सत्त्वेन व्यधिकरणधर्मावच्छिन्नाभावं विनैव लक्षणसमन्वयसंभवे प्रतियोग्यवृत्तिश्चेति ग्रन्थोत्थानं निर्बीजं स्यादिति भावः ।

ननु विशिष्टाभावोभयाभावादिकमादाय लक्षणसमन्वयसंभवे प्रतियोग्यवृत्तिश्चेति ग्रन्थानुत्थितिप्रसङ्गस्यैतल्लक्षणपरित्यागबीजत्वेन वक्ष्यमाणतया तादृशदोषो न क्षतिकर इति चेन्न, विशिष्टाभावीयप्रतियोगित्वं विशेषणे, उभयाभावीयप्रतियोगित्वञ्च यदभाव-प्रयुक्तोभयाभावस्तत्र स्वीक्रियते, तथा च प्रकृतप्रतियोगिसामानाधिकरण्यघटितलक्षणे दोषाभावेऽपि साध्यसामानाधिकरण्यघटितलक्षणस्य न कस्यापि मते निर्दोषत्वमिति सूचयितुं तद्ग्रन्थानुत्थितिप्रसङ्गस्योक्तत्वादिति ।

## ❀ जागदीशी ❀

**यदपि यत्समानाधिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकताव-च्छेदकप्रतियोगिताका यावन्तोऽभावाः दैशिकविशेषणतया उभयवृत्तयस्त-त्त्वमित्येवास्तु लक्षणम्, स्वस्वप्रतियोगिसामानाधिकरण्यप्रवेशे गौरवात्, हेतुसमानाधिकरणस्य तत्तदयोगोलकान्यत्वाभावस्यैव दैशिकविशेषणतया उभयवृत्तित्वाभावाद् धूमवान् वह्नेरित्यादावतिव्याप्तिविरहादिति ।**

## ❀ दीपिका ❀

तादृशयावदभावे प्रतियोगिसामानाधिकरण्यमनिवेश्योभयवृत्तित्वं निवेशयतां केषाञ्चिन्मतं दूषयितुमुपन्यस्यति—**यदपीति** । घटत्वेन वह्न्यभावादेः केवलान्व-

यितया वह्निभेदप्रतियोगिनि वह्नौ वह्निभिन्ने घटादौ च वर्तमानत्वेनोभयवृत्तित्वेन वह्निमान् धूमादित्यादौ लक्षणसमन्वयः।

अत्र कल्पे यावत्पदानुपादाने धूमवान् वह्नेरित्यत्र घटत्वेन धूमाभावे उभयवृत्तित्वसत्त्वादतिव्याप्तिः स्यात्, यावत्पदोपादाने तु तत्तदयोगोलकभेदाभावादेरपि यावदन्तर्गततया तत्तदयोगोलकमात्रवृत्तितया वक्ष्यमाणोभयवृत्तित्वविरहेण नातिव्याप्तिः। एवं यत्सामानाधिकरण्याप्रवेशे वह्निमान् धूमादित्यादौ यावदन्तर्गते तद्धटीयरूपध्वंसवद्भेदाभावे तद्धटीयरूपध्वंसस्वरूपे तद्धटमात्रवर्तमाने उभयवृत्तित्वविरहेणाव्याप्तिः स्यात्, तत्प्रवेशे तु तद्घटीयरूपध्वंसवद्भेदाभावस्य तद्धटे एव वर्तमानत्वेन धूमसामानाधिकरण्यविरहेण लक्षणाघटकतया घटत्वेन वह्न्यभावादेरेव लक्षणघटकतया तस्य चोभयवृत्तित्वान्न दोषः। साध्यतावच्छेदकावच्छिन्नव्यापकेत्यादेरप्रवेशे तत्पर्वतीयरूपध्वंसवद्भेदाभावस्य तत्पर्वते वर्तमानत्वेन धूमसमानाधिकरणतया यावदन्तर्गततया तत्र चोभयवृत्तित्वविरहेणाव्याप्तिः स्यात्, प्रतियोगितायां साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वनिवेशे तु न दोषः—वह्न्यधिकरणे तत्पर्वते वर्तमानोऽभावस्तत्पर्वतीयरूपध्वंसात्मकतत्पर्वतीयरूपध्वंसवद्भेदाभावीयप्रतियोगितावान्नास्तीत्याकारकस्तत्प्रतियोगितावच्छेदकत्वस्यैव तादृशाभावीयप्रतियोगितायां सत्त्वेन तादृशाभावस्य साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वाभावेन लक्षणाघटकत्वात्।

उभयवृत्तित्वस्य येन केनापि सम्बन्धेन ग्रहणे तत्तदयोगोलकभेदाभावस्यापि कालिकेन घटपटादौ सत्त्वेनोभयवृत्तित्वाद् धूमवान् वह्नेरित्यत्रातिव्याप्तिः स्यादिति स्वरूपसम्बन्धेनोभयवृत्तित्वं ग्राह्यम्, तथा च तत्तदयोगोलकभेदाभावस्य तत्तदयोगोलकत्वस्वरूपस्य स्वरूपसम्बन्धेन तत्तदयोगोलकमात्रवृत्तित्वेन नोभयवृत्तित्वमिति न दोषः।

भेदविशिष्टत्वम्—उभयवृत्तित्वम्, वैशिष्ट्यञ्च—स्वप्रतियोगिवृत्तित्व-स्वानुयोगिवृत्तित्वोभयसम्बन्धेन। तथा च—घटभेदप्रतियोगिनि घटे, घटभेदानुयोगिनि पटादौ च घटत्वेन वह्न्यभावस्य सत्त्वेन निरुक्तोभयसम्बन्धेन घटभेदविशिष्टत्वात् घटत्वेन वह्न्यभावादेरुभयवृत्तित्वम्, तत्तदयोगोलकभेदाभावस्य च घटभेदानुयोगिनि तत्तदयोगोलके वर्तमानत्वेऽपि घटभेदप्रतियोगिनि घटेऽविद्यमानत्वेन नोभयवृत्तित्वमिति। न च तत्तदयोगोलकघटोभयभेदस्याधिकरणं तत्तदयोगोलकमपीति निरुक्तोभयभेदप्रतियोगिनि, अनुयोगिनि च तत्तदयोगोलके तत्तदयोगोलकत्वस्य सत्त्वेन तत्तदयोगोलकभेदाभावस्योभयवृत्तित्वाद् धूमवान् वह्नेरित्यत्रातिव्याप्तिर्दुर्वारैवेति वाच्यम्,

प्रतियोगितावदन्यभेदविशिष्टत्वस्यैवोभयवृत्तित्वपदार्थत्वात्, प्रतियोगितावत्ता च स्वनिरूपकत्वस्वसामानाधिकरण्योभयसम्बन्धेन, स्वपदेन प्रतियोगिता ग्राह्या, तथा च निरुक्तोभयभेदे तत्तदयोगोलकनिष्ठप्रतियोगितानिरूपकत्वस्य, तादृशप्रतियोगिताधिकरण-तत्तदयोगोलक-वृत्तित्वस्य च सत्त्वेन प्रतियोगितावदन्यत्वाभावेन न निरुक्तोभयभेदविशिष्टत्वमादाय दोषः।

केचित्तु—आधेयतासम्बन्धेनोभयवत्त्वमेवोभयवृत्तित्वमिति वदन्ति।

अथ अयोगोलकत्वस्वरूपस्यायोगोलकभेदाभावस्य (अयोगोलकत्वस्य जातितया) समवायेनोभयवृत्तित्वेऽपि स्वरूपेणोभयवृत्तित्वविरहेणैव धूमवान् वह्नेरित्यत्रातिव्याप्तिवारणसंभवे तत्तदयोगोलकभेदाभावमादायातिव्याप्तिवारणं न सङ्गच्छत इति चेन्न, अभावाभावस्यातिरिक्तत्वमतेऽयोगोलकभेदाभावस्य स्वरूपेणोभयवृत्तित्वात्, उभयमतसाधारण्यानुरोधेन तत्तदयोगोलकभेदाभावस्य ग्रहणादिति।

## जागदीशी ❀

तन्मन्दम्। हेतुसमानाधिकरणस्य वह्निसंयोगाद्यात्मकाभावस्य विशेषणतया उभयवृत्तित्वविरहेण वह्निमान् धूमादित्यादावव्याप्तिप्रसङ्गात्। न च भावभिन्नस्यैव हेतुसमानाधिकरणाभावस्य प्रवेशान्न दोषः, तद्घटभिन्नं घटत्वादित्यादावतिव्याप्त्यापत्तेः। तद्घटभिन्नत्वाभावस्य तद्घटत्वादिस्वरूपत्वेन भावत्वात्, पटत्वादिना तद्घटभिन्नत्वाभावस्य चोभयवृत्तित्वादिति कृतं पल्लवितेन।

## ❀ दीपिका ❀

यदपि मतन्दूषयति—तन्मन्दमित्यादिना। अयमाशयः—तादृशयावदभावे स्वरूपेणोभयवृत्तित्वनिवेशे वह्निसंयोगात्मकस्य वह्निसंयोगाभावाभावस्य हेतुसमानाधिकरणत्वेन यावदन्तर्गततया वह्निसंयोगस्य समवायेनोभयवृत्तित्वेऽपि स्वरूपेणोभयवृत्तित्वविरहेण वह्निमान् धूमादित्यादावव्याप्तिः स्यादिति नोभयवृत्तित्वघटितकल्पः समीचीन इति।

अथ संयोगाभावाभावमादायाप्यव्याप्तिसंभवे वह्निसंयोगात्मकाभावपर्यन्तानुसरणं व्यर्थमिति चेन्न, प्राचां मते द्रव्ये संयोगसामान्याभावे मानाभावेन महानसादौ वह्नेः सत्त्वेन संयोगसामान्याभावस्य चासत्त्वेन संयोगाभावाभावीयप्रतियोगिताया

वह्न्यात्मकसाध्यव्यापकतानवच्छेदकत्वेन संयोगाभावाभावस्य यावदन्तर्गतत्वात् । वस्तुतो वह्न्यात्मकं संयोगात्मकत्वाभावमादायेत्यर्थकल्पने न काप्यनुपपत्तिरिति ।

अथैवमपि संयोगाभावाभावमादाय सर्वत्रासंभवसंभवेऽव्याप्तिकथनं जगदीशस्य नोचितमिति चेन्न, प्रमेयवान् घटभेदत्वादित्यत्र संयोगाऽऽत्मकाभावस्य हेतुसामानाधिकरण्यविरहेण अभावान्तरमादाय लक्षणसमन्वयात् । ननु हेतुसमानाधिकरणाभावे भावभिन्नत्वनिवेशे नाव्याप्तिः, वह्निसंयोगाभावाभावस्य भावस्वरूपत्वादित्याशङ्कते— **न चेति ।**

भावभिन्नत्वनिवेशेऽतिव्याप्तिमुद्घाटयति—**तद्घटभिन्नमिति ।** अत्रेदं तत्त्वम्— व्यभिचारिहेतौ साध्याभावं तत्तद्व्यभिचारनिरूपकाधिकरणस्य भेदाभावं वा आदाय दोषो निरसनीयः । तद्घटभिन्नं घटत्वादित्यादौ तु तादृशोऽभावः तद्घटभेदाभाव एव, तस्य च तद्घटत्वस्वरूपतया भावभिन्नत्वाभावेन न लक्षणघटकत्वम् , अपि तु घटत्वादिना तद्घटभेदाभावस्यैव, तस्य चोभयवृत्तितया भवत्यतिव्याप्तिरिति ।

**अतिव्याप्त्यापत्तेरिति ।** ननु हेतुसमानाधिकरणाभावे भावभिन्नत्वनिवेशे तत्तदयोगोलकभेदाभावस्य तत्तदयोगोलकत्वस्वरूपस्य भावभिन्नत्वाभावेन यावदन्तर्गततया यावदन्तर्गतस्य धूमाभावस्य चोभयवृत्तित्वेन धूमवान् वह्नेरित्यादिप्रसिद्धस्थलेऽतिव्याप्तिसंभवे स्थलान्तरानुधावनं व्यर्थमिति चेन्न, तत्तदयोगोलकवृत्तिरूपध्वंसात्मकाभावस्यापि यावदन्तर्गततया तत्र चोभयवृत्तित्वाभावेनातिव्याप्तिविरहात् । न च तद्घटभिन्नं घटत्वादित्यत्रापि तद्घटवृत्तिरूपध्वंसात्मकाभावस्य यावदन्तर्गतस्योभयवृत्तित्वविरहेण नातिव्याप्तिरिति वाच्यम् , तद्रूपभिन्नं गुणत्वादित्यत्र तद्रूपभेदाभावस्य तद्रूपत्वस्वरूपत्वेन भावत्वात्; घटत्वेन तद्रूपभेदाभावस्यैव यावदन्तर्गततया तस्य चोभयवृत्तित्वादतिव्याप्तेः । अत एव तद्घटभिन्नं घटत्वादित्यादावित्यत्र आदिपदमुपात्तमिति ।

कस्मिंश्चित्पुस्तकेऽत्र जागदीश्यां—'हेतुसमानाधिकरणा यावन्तस्तादृशाभावाः स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धेनोभयवृत्तयस्तत्त्वमिति कृते न काप्यनुपपत्तिरि'त्यधिकः पाठो वर्तते ।

## ❀ जागदीशी ❀

अत्र च यत्पदं यद्धर्मावच्छिन्नपरम् , अग्रे च तत्त्वमित्यस्य हेतुतावच्छेदकीभूततद्धर्मवत्त्वमित्यर्थः । तेन सकलधूमव्यक्तिनिष्ठानुगताया वह्निव्याप्तेर्नालाभः, न वा ज्ञानवान् मनोऽन्यत्वे सति आत्ममनःसंयोगादित्यादौ

मनसि हेतुसमानाधिकरणस्यात्मत्वसामान्याभावस्य स्वविशिष्टहेतुतावच्छेदकावच्छिन्नाधिकरणाप्रसिद्ध्याऽव्याप्तिः ।

❀ दीपिका ❀

ननु यत्समानाधिकरणेति लक्षणे तत्पदेनैकस्या एव धूमव्यक्तेर्ग्रहणेन सकलधूमव्यक्तिनिष्ठानुगताया वह्निनिरूपितव्याप्तेर्न लाभसंभवः । एवं ज्ञानवान् मनोऽन्यत्वे सति आत्ममनःसंयोगादित्यत्राव्याप्तिः, यत्पदेन हेतोरेव परामर्शेन हेत्वधिकरणे मनसि वर्तमानस्याऽऽत्मत्वाभावस्यापि लक्षणघटकतया तत्र च प्रतियोगिसामानाधिकरण्यविरहादित्यत आह—**अत्र चेति** । यत्समानाधिकरणघटितदीधितिलक्षणे चेत्यर्थः । **तेनेति** । तत्त्वमित्यस्य तद्धर्मवत्त्वमित्यर्थाङ्गीकारेणेत्यर्थः । यत्पदस्य यद्धर्मावच्छिन्नार्थकत्वे फलमाह—**न वेति** । तथा च यद्धर्मपदेन हेतुतावच्छेदकस्य परामर्शेन मनोऽन्यत्वविशिष्टाऽऽत्ममनःसंयोगत्वावच्छिन्नाधिकरणे आत्मनि आत्मत्वाभावस्यावर्तमानत्वेन न लक्षणघटकत्वमिति भावः ।

न च प्रथमतो यद्धर्मावच्छिन्नार्थकस्य यत्पदस्य व्यावृत्तिमनुक्त्वा तद्धर्मावच्छिन्नार्थकस्य तत्पदस्य व्यावृत्तिदानमनुचितमिति वाच्यम्, यत्तदोर्नियतसम्बन्धित्वेन तत्पदस्य तद्धर्मावच्छिन्नपरत्वे एव यत्पदस्य यद्धर्मावच्छिन्नपरस्य फलं सम्भवतीत्यावेदयितुं विपरीतत्वेन व्यावृत्तेः प्रदर्शनात् ।

❀ जागदीशी ❀

यत्तु द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ हेतुसमानाधिकरणस्य द्रव्यत्वाद्यभावस्यातथात्वादव्याप्तिरतो यत्पदस्य यद्धर्मावच्छिन्नपरत्वमिति । तन्न । द्रव्यत्वाद्यभावस्यापि कालिकादिसम्बन्धेन स्वविशिष्टं यद्धेतुतावच्छेदकावच्छिन्नहेत्वधिकरणं जन्यद्रव्यादि तदवच्छेदेन प्रतियोगिसामानाधिकरण्यात्तत्राव्याप्तिविरहात् ।

❀ दीपिका ❀

यत्पदस्य यद्धर्मावच्छिन्नपरत्वेऽन्यथा फलं प्रदर्शयतां केषाञ्चिन्मतं दूषयितुमुपन्यस्यति—**यत्त्विति** । अतथात्वात्=प्रतियोगिसामानाधिकरण्यविरहात् । अयमाशयः—यत्पदस्य यद्धर्मावच्छिन्नार्थकत्वाभावे 'द्रव्यं विशिष्टसत्त्वा'दित्यत्र विशिष्टसत्तायाः शुद्धसत्तानतिरिक्तत्वनियमेन विशिष्टसत्तारूपहेत्वधिकरणे गुणादौ वर्तमानस्य द्रव्यत्वाद्यभावस्यापि यावदन्तर्गतत्वेन तत्र च द्रव्यत्वरूपप्रतियोगिसामानाधिकरण्यविर-

हेणाव्याप्तिः, यद्धर्मावच्छिन्नार्थकत्वे तु विशिष्टसत्तात्वावच्छिन्नाऽऽधेयतानिरूपिताधिकरणताया द्रव्ये एवाभ्युपगमेन तत्र च द्रव्यत्वसामान्याभावस्याविद्यमानत्वेन न लक्षणघटकत्वमिति । दूषयति—**तन्नेति** । तथा च द्रव्यत्वाभावस्य कालिकेन जन्यद्रव्ये सत्त्वेन जन्यद्रव्यावच्छेदेनैव द्रव्यत्वाभावे द्रव्यत्वाऽऽत्मकप्रतियोगिसामानाधिकरण्यसत्त्वेनाव्याप्तिविरहेण न तत्राव्याप्तिवारणं यत्पदस्य यद्धर्मावच्छिन्नपरतायाः फलमिति भावः ।

## ❋ जागदीशी ❋

साध्यतेत्यादि । साध्यतावच्छेदकावच्छिन्नवन्निष्ठाभावप्रतियोगिताऽनवच्छेदिका यद्भावप्रतियोगिता तादृशाभावा इत्यर्थः । अत्र च विशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्तात्वावच्छिन्नाभावस्यैव सत्तारूपसाध्यव्यापकतावच्छेदकप्रतियोगिताकतया तस्य च स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यादतिव्याप्तिरतः साध्यतावच्छेदकावच्छिन्नेति । तथा च द्रव्यत्वाद्यभावस्यैव निरुक्तयावदन्तर्गततया तस्यातथात्वान्नातिव्याप्तिः । साध्यवत्त्वञ्चात्र साध्यतावच्छेदकसम्बन्धेन ग्राह्यम्, तेन वस्तुमात्रस्यैव विषयतासम्बन्धेन ज्ञानवत्त्वात् घटत्वादिना वाच्यत्वाद्यभावस्यैव साध्यव्यापकतावच्छेदकप्रतियोगिताकतया समवायेन ज्ञानस्य साध्यत्वे द्रव्यत्वादिहेतौ नातिव्याप्तिः । समवायसम्बन्धावच्छिन्नज्ञानवन्निष्ठाभावप्रतियोगितानवच्छेदकप्रतियोगिताकस्याऽऽत्मत्वाभावस्यैव प्रतियोग्यसमानाधिकरणत्वात् ।

## ❋ दीपिका ❋

**इत्यर्थ** इति । तथा च यद्धर्मावच्छिन्नसमानाधिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः प्रतियोगिसमानाधिकरणास्तद्धर्मवत्त्वं व्याप्तिरिति पर्य्यवसितम् । अत्र साध्यतावच्छेदकावच्छिन्नत्वनिवेशफलमाह—**अत्र चेति** । तथा च प्रतियोगितायां साध्यव्यापकतावच्छेदकत्वमात्रनिवेशे विशिष्टसत्तावान् जातेरित्यत्रातिव्याप्तिः स्यात्, तथा हि-साध्यवन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वमेव साध्यव्यापकतावच्छेदकत्वम्, एवञ्च विशिष्टशुद्धयोरनतिरिक्तत्वनियमेन साध्याधिकरणे गुणे सत्ताया वर्तमानत्वेन तत्र विशिष्टसत्ताऽभावीयप्रतियोगितावान्नास्तीत्याकारकाभावो धर्तुन्न शक्यते इति विशिष्टसत्ताऽभावीयप्रतियोगितायाः साध्यव्यापकतावच्छेदकत्वेन विशिष्टसत्ताऽभावस्यैव लक्षणघटकत्वम् न तु द्रव्यत्वाभा-

वादेः, साध्याधिकरणे गुणे द्रव्यत्वाभावीयप्रतियोगितावान्नास्तीत्याकारकाभावस्य सत्त्वेन द्रव्यत्वाभावीयप्रतियोगितायाः साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकत्वादिति विशिष्टसत्ताऽभावे स्वविशिष्टहेत्वधिकरणीभूतगुणाद्यवच्छेदेन सत्तारूपप्रतियोगिसामानाधिकरण्यसत्त्वाद्भवत्यतिव्याप्तिः। साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वनिवेशे तु विशिष्टसत्तात्वावच्छिन्नाधिकरणे द्रव्ये द्रव्यत्वाभावीयप्रतियोगितावान्नास्तीत्याकारकाभावस्यासत्त्वेन द्रव्यत्वाभावीयप्रतियोगिताया अपि साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकतया यावदन्तर्गतस्य द्रव्यत्वसामान्याभावस्य स्वविशिष्टहेत्वधिकरणीभूतगुणाद्यवच्छेदेन द्रव्यत्वरूपप्रतियोगिसामानाधिकरण्यविरहान्न दोष इति भावः।

अथ साध्यतावच्छेदकावच्छिन्नवन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वमेव साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वम्, अत्र येन केनापि सम्बन्धेन साध्यवतो ग्रहणे समवायेन ज्ञानसाध्यके द्रव्यत्वादिहेतावतिव्याप्तिः, विषयतासम्बन्धेन सकलस्यैव वस्तुनो ज्ञानवत्तया साध्यवति घटपटादौ समवायसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाभावस्य विद्यमानत्वेन तदीयप्रतियोगिता न साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदिका, अपि तु घटत्वेन वाच्यत्वाद्यभावीयप्रतियोगितैवेति घटत्वेन वाच्यत्वाभावे लक्षणघटके वाच्यत्वरूपप्रतियोगिसामानाधिकरण्यस्य सत्त्वादत आह—**साध्यवत्त्वञ्चात्रेति**। तेन = साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणतायाः प्रवेशेन। तथा च समवायेन ज्ञानाधिकरणे आत्मनि आत्मत्वस्य वर्तमानत्वेनाऽत्मत्वाभावीयप्रतियोगितावान्नास्तीत्याकारकाभावस्यैवावर्तमानत्वेनाऽत्मत्वाभावीयप्रतियोगितायाः साध्यवन्निष्ठाभावीयप्रतियोगितानवच्छेदकत्वेन साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकतया यावदन्तर्गतस्याऽत्मत्वसामान्याभावस्य प्रतियोगिसामानाधिकरण्यविरहान्नातिव्याप्तिरिति भावः।

❋ जागदीशी ❋

**अत्र च साध्यवन्निष्ठाभावः प्रतियोगिव्यधिकरणत्वेन विशेषणीयः। तेन साध्यवन्मात्रे एव समवायित्वावच्छिन्नवाच्यत्वाद्यभावप्रतियोगित्वेन घटाद्यभावसत्त्वेऽपि न साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकप्रतियोगिताकाभावस्याप्रसिद्धिः। इत्थञ्च य(त)त्सम्बन्धेन स्वावच्छिन्नानधिकरणसाध्यवन्निष्ठाभावप्रतियोगितावच्छेदको यो यस्तदन्यत्वे सति तत्सम्बन्धावच्छिन्नाऽऽधेयतावच्छेदकत्वरूपं तत्सम्बन्धेन साध्यव्यापकतावच्छेदकत्वं निरूप्य तादृशव्यापकतावच्छेदिका यदभावप्रतियोगिता तादृशाद्यभावाः प्रवेशनीयाः।**

## ❀ दीपिका ❀

ननु साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वरूपसाध्यव्यापकतावच्छेदकत्वप्रवेशे सर्वत्रासम्भवः। तथा हि—वह्निरूपसाध्याधिकरणे महानसादौ वर्तमानोऽभावो घटत्वावच्छिन्नवह्न्यभावीयप्रतियोगित्वेन घटो नास्तीत्याकारकः, तत्प्रतियोगितावच्छेदकत्वस्यैव घटत्वावच्छिन्नवह्न्यभावीयप्रतियोगितायां सत्त्वेन साध्यव्यापकतावच्छेदकप्रतियोगिताकाभावस्यैवाप्रसिद्धिः। एवं वाच्यं ज्ञेयत्वादित्यत्र वाच्यत्वरूपसाध्याधिकरणे वर्तमानं समवायित्वावच्छिन्नवाच्यत्वाभावीयप्रतियोगित्वेन घटाद्यभावमादाय समवायित्वेन वाच्यत्वाद्यभावीयप्रतियोगिताऽपि साध्यव्यापकतानवच्छेदिकेति तादृशाभावाप्रसिद्धिरेवेत्यत आह—**अत्र चेति**। तथा च घटत्वावच्छिन्नवह्न्यभावप्रतियोगित्वेन घटाभावादेः व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वेन न प्रतियोगिवैयधिकरण्यम् अपि तु प्रतियोगिव्यधिकरणः साध्यवन्निष्ठाभावो घटाभावीयप्रतियोगितावान्नास्तीत्याकारकस्तत्प्रतियोगितानवच्छेदकत्वस्य घटत्वेन वह्न्यभावीयप्रतियोगितायां सत्त्वेन न तदप्रसिद्धिरिति भावः।

अथात्र प्रतियोगिव्यधिकरणत्वमित्यस्य यदि स्वप्रतियोग्यधिकरणावृत्तित्वमर्थः तदा कपिसंयोगाभावस्य स्वप्रतियोग्यधिकरणीभूतद्रव्यवृत्तित्वेन प्रतियोगिव्यधिकरणमन्याभावमादाय कपिसंयोगाभावीयप्रतियोगितायाः साध्यव्यापकतावच्छेदकत्वेन कपिसंयोगाभावमादायासंभवः स्यात्, यदि च स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्तित्वमर्थः तदा प्रतियोगिव्यधिकरणाभावस्यैवाप्रसिद्धिः, तथा हि—पूर्वक्षणवृत्तित्वविशिष्टघटाभावस्य योऽभावस्तदभावस्य पूर्वक्षणवृत्तित्वविशिष्टघटाभावस्वरूपत्वम्, पूर्वक्षणवृत्तित्वविशिष्टघटाभावस्य च शुद्धघटाभावस्वरूपत्वम्, एवञ्च घटाभावस्य प्रतियोगिना पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावादिना सह महानसादौ वर्तमानत्वेन भवति तादृशाभावस्याप्रसिद्धिरित्यत आह—**इत्थञ्चेति**। प्रतियोगिवैयधिकरण्यघटितव्यापकतावच्छेदकत्वोक्तौ चेत्यर्थः। स्वावच्छिन्नेत्यत्र स्वपदेन प्रतियोगिता ग्राह्या। तथा च कपिसंयोगनिष्ठप्रतियोगित्वावच्छिन्नानधिकरणं यद् वह्न्यात्मकसाध्याधिकरणं महानसादि तत्र वर्तमानः कपिसंयोगाभावीयप्रतियोगितावदभावः तत्प्रतियोगितावच्छेदकमेव कपिसंयोगनिष्ठप्रतियोगित्वमिति तदन्यत्वस्य कपिसंयोगनिष्ठप्रतियोगितायामसत्त्वेन न कपिसंयोगाभामावदायासंभवसंभव इति भावः।

अत्र यत्सम्बन्धेनेत्यस्यानुपादाने घटवान् महाकालत्वादित्यत्र महाकालानुयोगिककालिकसम्बन्धेन साध्यतायामव्याप्तिः, साध्यवतो महाकालस्य जगदाधारतया स्वाव-

च्छिन्नानधिकरणीभूतसाध्यवतोऽप्रसिद्धेः, तदुपादाने तु यत्पदस्य साध्यव्यापकतावच्छेदकत्वेनाभिमतसम्बन्धपरत्वेन व्यापकतावच्छेदकीभूतसमवायादिसम्बन्धेन घटादिनिष्ठप्रतियोगित्वावच्छिन्नानधिकरणं साध्याधिकरणं महाकाल एव तत्र वर्तमानः समवायादिना घटाद्यभावस्तत्प्रतियोगितावच्छेदकभिन्नत्वस्य घटत्वेन द्रव्यत्वाभावीयप्रतियोगितायां सत्त्वेन तादृशप्रतियोगिताकाभावमादाय लक्षणसमन्वयसम्भवान्नाव्याप्तिरिति।

ननु यद्यत्प्रतियोगित्वावच्छिन्नानधिकरणं साध्याधिकरणं तत्तत्प्रतियोगिताभिन्नत्वमेव प्रतियोगितायां भट्टाचार्येणेव जगदीशेनापि साध्यव्यापकतावच्छेदकत्वं निरुच्यताम्, अभावप्रतियोगितावच्छेदकत्वपर्यन्तानुसरणं व्यर्थमिति चेन्न, व्यापकतावच्छेदकत्वपदेनाधिकरणनिष्ठाभावप्रतियोगितानवच्छेदकत्वस्य प्रतीयमानत्वेन तदनुक्तौ व्यापकतावच्छेदकत्वस्य पारिभाषिकत्वभिया जगदीशेन तादृशस्य परित्यक्तत्वात्, व्यापकत्वस्य पारिभाषिकत्वमभ्युपेत्य लाघवमात्रानुरोधेन भट्टाचार्येण तथाऽभ्युपगम्यमानत्वात्। किञ्च भट्टाचार्येण साध्यव्यापकतावच्छेदकप्रतियोगित्वस्य लक्षणं कृतम्, जगदीशेन तु प्रथमद्वितीयलक्षणसाधारणव्यापकतावच्छेदकत्वस्य लक्षणमभिहितम्, एवञ्च जगदीशेन भट्टाचार्यरीतिरवलम्ब्येत चेत्तदा द्वितीयलक्षणे घटाभावमादाय दोषः स्यादिति जगदीशेन तथा नोक्तम्।

❀ जागदीशी ❀

न च तत्सम्बन्धावच्छिन्नाऽऽधेयतेत्यादिकं व्यर्थम्। द्रव्यत्वाद्यभावप्रतियोगिताया अपि संयोगादिसम्बन्धेन वह्न्यादिव्यापकतावच्छेदकत्वापत्त्या यावदन्तर्गतस्य तत्सम्बन्धेन द्रव्यत्वाद्यभावस्य साध्यव्यापकताघटकीभूतसंयोगादिसम्बन्धेन प्रतियोगिसामानाधिकरण्याप्रसिद्ध्या सद्धेतुमात्र एवासम्भवस्य वारणार्थं तदुपादानात्। संयोगसम्बन्धावच्छिन्नाधेयत्वस्य द्रव्यत्वादावसत्त्वेन द्रव्यत्वादिनिष्ठप्रतियोगित्वस्य तादृशाऽधेयतानवच्छेदकत्वात्।

य (त) त्सम्बन्धेन स्वावच्छिन्नानधिकरणत्वन्तु-य (त) त्सम्बन्धेन स्वावच्छिन्नाधिकरणसामान्यभेदः, तेन वह्न्यादिनिष्ठप्रतियोगित्वावच्छिन्नाधिकरणगगनोभयभेदस्य, घटत्वादिना वह्न्यादिनिष्ठप्रतियोगित्वावच्छिन्नाधिकरणभेदस्य च वह्न्यादिसाध्यवति सत्त्वेऽपि न क्षतिः। अत्राभावा इति स्वरूपकथनम्।

## ❀ दीपिका ❀

अथ यत्सम्बन्धेन स्वावच्छिन्नानधिकरणसाध्यवन्निष्ठाभावप्रतियोगितावच्छेदको यो यस्तदन्यत्वस्यैव साध्यव्यापकतावच्छेदकत्वस्वीकारे कपिसंयोगाद्यभावमादायासम्भववारणसम्भवे तत्सम्बन्धावच्छिन्नाऽऽधेयतावच्छेदकत्वनिवेशनं व्यर्थमित्याशङ्कते—**न चेति** । अस्य व्यर्थमित्यनेनान्वयः ।

समाधत्ते—**द्रव्यत्वाद्यभावेति** । तत्सम्बन्धेन=संयोगादिसम्बन्धेन । अयमाशयः-महानसादौ समवायेन द्रव्यत्वस्य सत्त्वेऽपि संयोगसम्बन्धेनाविद्यमानतया संयोगेन द्रव्यत्वनिष्ठप्रतियोगित्वावच्छिन्नद्रव्यत्वानधिकरणं यत् साध्याधिकरणं महानसादि तत्र वर्तमानो यो घटाद्यभावस्तत्प्रतियोगितानवच्छेदकत्वस्य द्रव्यत्वनिष्ठप्रतियोगितायां सत्त्वेन तादृशप्रतियोगितानिरूपकस्य द्रव्यत्वाभावस्यापि यावदन्तर्गतत्वेन तत्र च व्यापकतावच्छेदकीभूतसंयोगसम्बन्धेन प्रतियोगिसामानाधिकरण्यविरहेणासम्भवः स्यात्, तत्सम्बन्धावच्छिन्नाऽऽधेयतेत्यादिप्रवेशे तु न दोषः, समवायसम्बन्धावच्छिन्नाऽऽधेयताया द्रव्यत्वादौ सत्त्वेऽपि संयोगसम्बन्धावच्छिन्नाऽऽधेयताया असत्त्वेन संयोगसम्बन्धावच्छिन्नाऽऽधेयतावच्छेदकत्वस्य द्रव्यत्वनिष्ठप्रतियोगितायामसत्त्वेन द्रव्यत्वाभावस्य यावदनन्तर्गतत्वात्, तदेवाऽऽह—**संयोगसम्बन्धावच्छिन्नेति । तादृशेति** । संयोगसम्बन्धावच्छिन्नेत्यर्थः ।

ननु तत्सम्बन्धनिरूपितप्रतियोगिवृत्तित्वनिवेशेनैव संयोगेन द्रव्यत्वाद्यभाववारणसम्भवे प्रतियोगितायां तत्सम्बन्धावच्छिन्नाऽऽधेयतावच्छेदकत्वनिवेशनं व्यर्थमेवेति चेन्न, तत्सम्बन्धनिरूपितप्रतियोगिपदेन तत्सम्बन्धनिरूपितप्रतियोगितात्वावच्छिन्ननिरूपकतानिरूपिताऽधिकरणतावत्त्वस्यावश्यं विवक्षणीयतया सामान्यधर्मावच्छिन्नाधिकरणताया अस्वीकारे महागौरवात् ।

अथ स्वावच्छिन्नानधिकरणेत्यस्य स्वावच्छिन्नाधिकरणप्रतियोगिकभेदवदित्यर्थकत्वे वह्निमान् धूमादित्यादावसम्भवः, वह्न्यादिनिष्ठप्रतियोगित्वावच्छिन्नाधिकरणगगनोभयभेदस्यापि स्वावच्छिन्नाधिकरणप्रतियोगिकतया तादृशोभयभेदस्य साध्यवति पर्वतादौ सत्त्वेन, घटत्वादिना वह्न्यादिनिष्ठप्रतियोगित्वावच्छिन्नाधिकरणभेदस्य च पर्वतादौ सत्त्वेन वह्न्यादिनिष्ठप्रतियोगितायां स्वावच्छिन्नानधिकरणत्वघटितव्यापकतावच्छेदकत्वस्यैवाप्रसिद्धेरित्यत आह—**यत्सम्बन्धेन स्वावच्छिन्नानधिकरणत्वन्त्विति** । स्वावच्छिन्नाधिकरणसामान्यभेदः=स्वावच्छिन्नाधिकरणत्वमात्रावच्छिन्नप्रतियोगिताकत्वे सति स्वावच्छिन्नाधिकरणत्वमात्रावच्छिन्ननिरूपकतानिरूपि-

तानुयोगितावद्भेदः। तेन समवायित्वावच्छिन्नप्रतियोगिताकवाच्यत्वाभावीयप्रतियोगित्वावच्छिन्नाधिकरणत्वेन घटादिभेदस्य साध्याधिकरणे सत्त्वेऽपि नाप्रसिद्धितादवस्थ्यम्, तादृशघटादिभेदनिष्ठानुयोगितानिरूपितघटादिनिष्ठनिरूपकताया घटत्वाद्यवच्छिन्नतया स्वावच्छिन्नाधिकरणत्वमात्रावच्छिन्नत्वाभावादिति। तेनेत्यस्य स्वावच्छिन्नानधिकरणत्वस्यैतादृशार्थकत्वेनेत्यर्थः। न क्षतिः=व्यापकतावच्छेदकीभूतप्रतियोगिताया नाप्रसिद्धिः। तथा च तादृशोभयभेदीयप्रतियोगिताया उभयत्वावच्छिन्नतया, घटत्वेन वह्न्यादिनिष्ठप्रतियोगित्वावच्छिन्नाधिकरणभेदीयप्रतियोगितायाश्च घटत्वाद्यवच्छिन्नतया निरुक्तभेदयोः स्वावच्छिन्नानधिकरणत्वपदेन ग्रहीतुमशक्यतया घटादिनिष्ठप्रतियोगित्वावच्छिन्नाधिकरणसामान्यभेदस्यैव तादृशतया तत्प्रतियोगिताभिन्नत्वस्य घटत्वेन वह्न्यभावीयप्रतियोगितायां सत्त्वेन नाप्रसिद्धिरिति भावः।

ननु साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वेनैवाभावा निवेश्यन्तां किमिति अभावत्वेन निवेशेनेत्यत आह—**अत्राभावा इतीति**। ननु प्रतियोगितानिरूपकत्वमभावे इव सम्बन्धेऽपि वर्तते, एवञ्चाभावपदानुपादाने यावदन्तर्गतस्य वाच्यत्वप्रतियोगिकतादात्म्यसम्बन्धस्य स्वविशिष्टहेत्वधिकरणाप्रसिद्ध्या 'अयमात्मा ज्ञानादि'त्यत्राव्याप्तिवारणायाभावनिवेशस्याऽवश्यकतया 'स्वरूपकथनमि'ति ग्रन्थासङ्गतिरिति चेन्न, तत्सम्बन्धप्रतियोगित्वतत्सम्बन्धावच्छिन्नाऽधेयत्वयोरैक्येऽपि वाच्यत्वप्रतियोगिकतादात्म्यसम्बन्धस्य व्यापकतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वाभावेनाव्याप्तिविरहात्।

### ❀ जागदीशी ❀

**वस्तुतः साध्यवन्निष्ठाभावस्य तत्सम्बन्धावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकत्वमेव तत्सम्बन्धेन साध्यव्यापकतावच्छेदकत्वं वाच्यम्। तत्र च साध्यवन्निष्ठत्वमभावस्य स्वरूपसम्बन्धेन ग्राह्यम्, तेन स्पन्दः कालत्वादित्यादौ स्पन्दत्वाद्यभावस्यापि कालिकसम्बन्धेन साध्यवति वृत्त्या यावदनन्तर्गतत्वात्, घटत्वेन वाच्यत्वाद्यभावस्य च तादृशस्य प्रतियोगिसमानाधिकरणत्वेऽपि नातिव्याप्तिः।**

### ❀ दीपिका ❀

ननु 'सर्वं प्रमेयमि' त्याकारकयत्किञ्चिज्जन्यज्ञानविषयत्वाभावमादाय सर्वत्र लक्षणसमन्वयसंभवे 'प्रतियोग्यवृत्तिश्चे'ति दीधितिग्रन्थानुत्थितिप्रसङ्ग इत्यत आह—**वस्तुत इति**।

अत्र व्यधिकरणधर्मावच्छिन्नाभावसंग्रहाय सामानाधिकरण्यपदम्, अन्यथा घटत्वावच्छिन्नवह्न्यभावीयप्रतियोगित्वेन घटाभावस्य वह्निरूपसाध्यवति वर्तमानत्वेन तत्प्रतियोगितावच्छेदकत्वस्यैव घटत्वेन वह्न्यभावप्रतियोगितायां सत्त्वेन तत्प्रतियोगिताकाभावस्य लक्षणघटकत्वं न स्यात्, सामानाधिकरण्यपदोपादाने तु तादृशघटाद्यभावीयप्रतियोगितायाः सामानाधिकरण्येनावच्छेदकस्याप्रसिद्धत्वाद् घटाभावीयप्रतियोगितावान्नास्तीत्याद्यभाव एव साध्यवन्निष्ठत्वेन प्राह्यस्तत्प्रतियोगिताया नावच्छेदकं घटत्वेन वह्न्यभावीयप्रतियोगित्वमिति तस्य भवति लक्षणघटकत्वम् ।

अथैवमपि घटत्वाद्यवच्छिन्नवह्न्यभावीयप्रतियोगित्वेन महानसीयवह्न्यभावस्य साध्यवति पर्वतादौ सत्त्वेन तादृशाभावीयप्रतियोगितायाः सामानाधिकरण्येनावच्छेदकत्वस्यैव घटत्वेन वह्न्यभावीयप्रतियोगितायां सत्त्वेन कथं तस्य लक्षणघटकत्वमिति चेन्न, सामानाधिकरण्यस्याभेदार्थकत्वेन साध्यवन्निष्ठाभावीयप्रतियोगित्वाभिन्नं प्रतियोगितावच्छेदकं यद्यत्तदन्यत्वस्यैव पर्यवसिततया घटत्वेन वह्न्यभावीयप्रतियोगिताया निरुक्तमहानसीयवह्न्यभावीयप्रतियोगित्वाभिन्नत्वाभावेन दोषाभावात् ।

ननु स्पन्दः कालत्वादित्यत्र कालिकसम्बन्धेन स्पन्दत्वाभावीयप्रतियोगितावदभावस्य साध्यवति काले वर्तमानत्वेन तत्प्रतियोगिताया अवच्छेदकमेव स्पन्दत्वाभावीयप्रतियोगित्वमिति घटत्वेन वाच्यत्वाभावस्यैव निरुक्तसाध्यव्यापकतावच्छेदकप्रतियोगिताकत्वेन तत्र च प्रतियोगिसामानाधिकरण्यसत्त्वेनातिव्याप्तिरित्यत आह— **तत्र चेति ।** तेनेत्यस्य-स्वरूपेण साध्यवन्निष्ठाभावस्य विवक्षणेनेत्यर्थः । तादृशस्य= साध्यव्यापकतावच्छेदकप्रतियोगिताकस्य । तथा च स्वरूपसम्बन्धेन स्पन्दत्वाभावीयप्रतियोगितावदभावस्य कालेऽविद्यमानतया स्पन्दत्वाभावोऽपि लक्षणघटक एवेति नातिव्याप्तिः ।

न च महाप्रलयभेदाभावमादायातिव्याप्तिविरहेण स्वरूपसम्बन्धनिवेशो व्यर्थ इति वाच्यम्, महाप्रलयानभ्युपगमात्, प्रलयान्यत्वविशिष्टकालत्वस्यैव हेतुतया निरुक्ताभावस्य हेतुसामानाधिकरण्यविरहेण लक्षणाघटकत्वाच्च ।

ननु कालिकेन धूमाभावीयप्रतियोगितावदभावस्य महानसादौ वर्तमानत्वेन घटत्वेन वाच्यत्वाद्यभावमादाय धूमवान् वह्नेरित्यत्राप्यतिव्याप्तिसम्भवेन प्रसिद्धस्थलत्यागे बीजाभाव इति चेन्न, जन्यमात्रस्य कालोपाधित्वानभ्युपगमे धूमाभावस्य लक्षणघटकत्वसम्भवात् ।

❀ जागदीशी ❀

इत्थञ्च जातिसामान्याभावादेरपि वह्न्यादिव्यापकतया तत्प्रतियोगिकस्य जात्यादिस्वरूपस्य हेतुसमानाधिकरणाभावस्य जातिसामान्याभावाद्यात्मकप्रतियोग्यसमानाधिकरणत्वादसम्भवापत्तिरतोऽभावा इत्युक्तम्, भावभिन्ना इति च तदर्थः। यथा च सामानाधिकरण्येनानवच्छेदकत्वघटितायां व्यापकतायां न दोषस्तथाऽग्रे प्रपञ्चयिष्यते।

❀ दीपिका ❀

**इत्थञ्चेति।** स्वरूपसम्बन्धेन साध्यवन्निष्ठत्वोक्तौ चेत्यर्थः। तथा च पूर्वकल्प इवात्र कल्पे 'अभावा' इति पदं न स्वरूपकथनपरम्, अपि तु असम्भवनिरासायैव, अन्यथा वह्न्यादिमति पर्वतादौ जातिसामान्याभावाभावीयप्रतियोगितावदभावस्य जातिस्वरूपस्य स्वरूपसम्बन्धेनावर्तमानतया जातिसामान्याभावनिष्ठप्रतियोगिताया अनवच्छेदकत्वेन वह्न्यादिसाध्यव्यापकतावच्छेदकतया जातिसामान्याभावाभावस्यापि यावदन्तर्गतत्वेन तत्र प्रतियोगिसामानाधिकरण्यविरहादसम्भवः स्यात्, भावभिन्नार्थकाभावपदोपादाने तु जातिसामान्याभावाभावस्य जात्यात्मकभावरूपतया न लक्षणघटकत्वमिति भावः।

ननु जातिः जातित्वादित्यादौ जातिस्वरूपाभावस्य हेतुसामानाधिकरण्यविरहेण लक्षणाघटकतया व्यधिकरणधर्मावच्छिन्नाभावमादाय लक्षणसमन्वयसम्भवेऽसम्भवाभिधानमनुचितमिति चेन्न; विषयताया वृत्तितानियामकत्वमते जात्यनुयोगिकविषयतासम्बन्धेन यो नित्यज्ञानाभावस्तदभावस्यापि लक्षणघटकत्वेन तत्र प्रतियोगिसामानाधिकरण्यस्यासत्त्वेनाव्याप्तेस्तत्राप्यनुद्धारात्। अत एव जात्यादिस्वरूपस्येत्यत्राऽऽदिपदमुपात्तम्।

❀ जागदीशी ❀

**नव्यास्तु—साध्यतावच्छेदकेत्यादि।** साध्यतावच्छेदकावच्छिन्नाधिकरणानि यावन्ति तत्प्रत्येकवृत्तिवृत्तिप्रतियोगिताका इत्यर्थः। न च एकमात्रवृत्तिसाध्यकसद्धेतावव्याप्तिः, तत्र यावत्त्वस्यानुपादेयत्वात्, शब्दैक्यस्याकिंचित्करत्वात्।

यद्वा साध्यतावच्छेदकावच्छिन्नसमानाधिकरणा यावन्तस्तत्समानाधिकरणवृत्तिप्रतियोगिताका इत्यर्थ इति प्राहुः।

## ❀ दीपिका ❀

प्रतियोगिव्यक्तीनां भेदे प्रतियोगिताया भिन्नत्वान्न क्वाऽपि घटत्वेन वह्न्यभावीयप्रतियोगिता वह्नित्वावच्छिन्नव्यापकतावच्छेदिकेत्यतः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकपदमन्यथा व्याचक्षते—**नव्यास्त्विति** । नव्या इत्यस्य प्राहुरित्यनेन सम्बन्धः । **तत्प्रत्येकवृत्तीति** । तादृशप्रत्येकाधिकरणे ये वृत्तयः तद्वृत्तिप्रतियोगिताका इत्यर्थः ।

अथात्र प्रत्येकपदं व्यर्थम्, वाच्यं ज्ञेयत्वादित्यादौ घटत्वेन वाच्यत्वाभावीयप्रतियोगित्वस्य वाच्यत्वभेदेन भिन्नत्वे घटत्वेन वाच्यत्वाद्यभावस्य लक्षणाघटकत्वेऽपि प्रकृतसाध्याधिकरणयावद्वृत्तिगगनाभाववृत्तिप्रतियोगिताकं घटत्वेन गगनाभावाभावमादाय लक्षणसमन्वयादिति चेन्न, अधिकरणभेदेन गगनाभावस्यापि भिन्नत्वेन यावत्साध्यवदवृत्तित्वात् तादृशप्रतियोगिताकाभावाप्रसिद्धेः । तथा च साध्यतावच्छेदकावच्छिन्नाधिकरणकूटविशिष्टा या प्रतियोगिता सैव साध्यव्यापकतावच्छेदकप्रतियोगितापदेन ग्राह्या । वै० च आधेयतासम्बन्धेन, आधेयतावत्ता च स्वावच्छिन्नाधिकरणत्वसम्बन्धेन, स्वपदेन प्रतियोगिता ग्राह्या । एवञ्च साध्यतावच्छेदकं वह्नित्वं तदवच्छिन्नाधिकरणानि महानसादीनि, तत्कूटवैशिष्ट्यं घटत्वेन वह्न्यभावीयप्रतियोगितायां वर्तते, यतश्च स्वं तादृशाभावीयप्रतियोगित्वम्, तदवच्छिन्नवह्न्यधिकरणत्वसम्बन्धेन महानसादौ प्रतियोगितायाः सत्त्वेन महानसादिकूटनिरूपिताऽऽधेयतायाः प्रतियोगितायां सत्त्वादिति घटत्वेन वह्न्यभावमादाय लक्षणं सङ्गमनीयम् ।

नन्वेवं तद्रूपवान् तद्रसादित्येकव्यक्तिमात्रवृत्तिसाध्यकसद्धेतौ साध्याधिकरणकूटाप्रसिद्ध्याऽव्याप्तिरित्याशङ्कते—**न च एकेति** । न चेत्यस्याव्याप्तिरित्यनेनान्वयः ।

समाधत्ते—**तत्र यावत्त्वस्येति** । तत्र—एकव्यक्तिमात्रवृत्तिसाध्यकसद्धेतौ । तथा च साध्यसाधनभेदेन व्याप्तेर्भेदात् 'तद्रूपवान् तद्रसादि'त्यादिस्थलीयव्याप्तौ यावत्त्वस्याप्रवेशेन नाप्रसिद्धिनिबन्धनाऽव्याप्तिरिति भावः ।

एकव्यक्तिमात्रवृत्तिसाध्यकसद्धेतुसाधारणमाह—**यद्वेति** । एवञ्चैतस्मिन् कल्पे साध्याधिकरणे यावत्त्वमनिवेश्य साध्यसमानाधिकरणे यावत्त्वनिवेशेन नाप्रसिद्धिरिति भावः । एतत्कल्पस्यार्थस्तु—साध्यतावच्छेदकावच्छिन्नसमानाधिकरणकूटविशिष्टा या प्रतियोगिता तादृशप्रतियोगिताका इति, वै० च—स्वाश्रयवृत्तिवृत्तित्वसम्बन्धेन । साध्याधिकरणे महानसादौ वर्तमाना घटादयः तत्कूटविशिष्टा घटत्वेन वह्न्य-

भावीयप्रतियोगिता भवति, तथा हि—एवं घटादयः तदाश्रयो महानसादिः तत्र वर्तमानो वह्निः तद्वृत्तित्वं तादृशप्रतियोगितायां वर्तते इति न क्वापि दोषः।

❀ जागदीशी ❀

**यत्तु साध्यवदवृत्त्यभावप्रतियोगितावच्छेदकप्रतियोगिताक इत्यर्थ इति। तन्न। केवलान्वयिसाध्यकसद्धेतौ तादृशप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तेर्गगनस्वरूपाभावप्रतियोगित्वस्य तादृशत्वेऽपि तस्य हेतुसमानाधिकरणत्वासम्भवादिति।**

❀ दीपिका ❀

साध्यव्यापकतावच्छेदकप्रतियोगिताकपदमन्यथा व्याचक्षाणानां मतं दूषयितुमुपन्यस्यति—**यत्त्विति**। साध्याधिकरणेऽवर्तमानो योऽभावस्तत्प्रतियोगितावच्छेदिका प्रतियोगिता येषान्त इत्यर्थः। तथा च साध्याधिकरणे महानसादौ 'घटत्वेन वह्न्यभावीयप्रतियोगितावान्नास्ती'त्याकारकाभावोऽवर्तमानः तत्प्रतियोगितावच्छेदिका 'घटत्वेन वह्न्यभावीयप्रतियोगिता' तादृशप्रतियोगिताकमभावमादाय लक्षणसमन्वयो भवति।

अत्र साध्यवदवृत्तित्वघटकं साध्यवद्वृत्तित्वं यदि येन केनापि संबन्धेनोच्येत तदा घटत्वेन वह्न्यभावीयप्रतियोगितावदभावस्यापि कालिकेन साध्यवद्वृत्तित्वाद् वह्निमान् धूमादित्यादौ तादृशप्रतियोगिताकाभावाप्रसिद्ध्याऽव्याप्तिः, स्वरूपसमवायान्यतरसम्बन्धेनोक्तावपि गुणत्वाभावस्य विषयितया साध्यत्वे तज्ज्ञानत्वहेतावव्याप्तिः, विषयितया गुणत्वाभाववद्भेदाभावस्यापि गुणत्वाभावात्मकस्य साध्यवति तज्ज्ञाने स्वरूपेणावर्तमानत्वेन यावदन्तर्गततया तत्र च प्रतियोगिसामानाधिकरण्यविरहात्, अपि तु स्वप्रतियोगिमत्ताबुद्धेर्विषयविधया प्रतिबन्धकतावच्छेदको यः सम्बन्धस्तेनैव साध्यवद्वृत्तित्वं बोध्यम्, तथा च न दोषः।

यत्तुमतं दूषयति—**तन्नेति। तादृशप्रतियोगित्वेति**। साध्यवदवृत्त्यभावीयप्रतियोगितावच्छेदकीभूतप्रतियोगित्वेत्यर्थः। तथा चेदं वाच्यं ज्ञेयत्वादित्यत्र साध्यवदवृत्त्यभावपदेन घटत्वेन वाच्यत्वाभावीयप्रतियोगितावदभावस्यैव ग्राह्यत्वे तस्य चाप्रसिद्ध्याऽव्याप्तिः स्यादिति भावः।

ननु गगनस्वरूपस्य गगनाभावाभावीयप्रतियोगितावदभावस्य साध्याधिकरणेऽवर्तमानत्वेन गगनाभावनिष्ठैव प्रतियोगिता तादृशी प्रसिद्धेत्यत आह—**गगनस्वरूपेति**। तादृशत्वेऽपि = साध्यवदवृत्त्यभावप्रतियोगितावच्छेदकत्वेऽपि। तस्य= गगनाभावाभावस्य। तथा च—गगनाभावाभावोऽपि न लक्षणघटक इति भावः।

ननु घटाभाववह्न्यभावान्यतराभावनिष्ठप्रतियोगित्वावच्छिन्नाभावो यथा घटाभावस्वरूपस्तथा वह्न्यभावस्वरूपोऽपि, तथा च वह्निमान् धूमादित्यादौ साध्यवदवृत्तिर्यो वह्न्यभावस्तदीया या तादृशान्यतराभावनिष्ठा प्रतियोगिता तन्निरूपकत्वं घटाभावेऽपि वर्तते इति निरुक्तव्यापकतावच्छेदकप्रतियोगिताको घटाभावोऽपि भवति तस्य च स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहेणासम्भवसम्भवेऽव्याप्त्यभिधानमसङ्गतमिति चेन्न, यदभावमात्रनिरूपितप्रतियोगित्वावच्छिन्नाभावः साध्यवदवृत्तिस्तदभावस्यैव तादृशव्यापकतावच्छेदकप्रतियोगिताकाभावपदेन विवक्षणीयत्वात् ।

### ❀ जागदीशी ❀

**अत्र व्यापकतावच्छेदकप्रतियोगिताका इत्यत्र व्यापकताया अवच्छेदो ययेति बहुव्रीहौ कप्रत्ययः, तेन प्रतियोगितया सममवच्छेदकपदस्य समासे कोपधत्वेऽपि पुंवद्भावः, तद्धितवुणोः कोपधस्यैव पुंवद्भावनिषेधादित्यभियुक्ताः ।**

### ❀ दीपिका ❀

व्यापकतावच्छेदिका प्रतियोगिता येषामिति बहुव्रीहौ 'न कोपधायाः' इति पाणिनीयसूत्रेण पुंवद्भावनिषेधे कथं व्यापकतावच्छेदकप्रतियोगिताका इत्यस्य सिद्धिरित्यत आह—**अत्र व्यापकेत्यादि ।** नायं ग्रन्थः समीचीनो भाति, बहुव्रीहिकप्प्रत्ययस्य तद्धिताधिकारीयत्वेन तद्धितसम्बन्धिकोपधत्वसत्त्वात् 'न कोपधायाः' इत्यस्य प्रवृत्तेस्तथापि दुर्वारत्वात् । किञ्च व्यापकताया अवच्छेदो ययेति व्यधिकरणपदबहुव्रीहिरपि दुरुपपादः । न च कण्ठेकाल इवात्रापि समासः सूपपाद एवेति वाच्यम्, कण्ठेस्थः कालो यस्येति विग्रहे 'सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च'ेति वार्तिकेन समासे उत्तरपदलोपे च तत्रापि समानाधिकरणपदबहुव्रीहेरेव सत्त्वात् । यत्तु—औपगवीत्यादाविव 'ओर्गुणः' इति गुणे पट्वीत्यादिप्रयोगानुपपत्त्या ङीबादीनामिव कप्रत्ययस्थले पुंवद्भावनिषेधेऽश्वकगाव इत्यादिप्रयोगानुपपत्त्या कप्रत्ययस्यापि तद्धितत्वाभाव इति । तन्न । राका इत्यादौ ह्रस्वाभावाय 'केऽणः' इत्यादौ तद्धितकप्रत्ययस्यैव गृह्यमाणतया समासान्तकप्प्रत्ययस्य तद्धितत्वानभ्युपगमे 'कल्याणपञ्चमीकः' इत्यादौ 'केऽणः' इत्यस्याप्राप्त्या 'न कपि' इत्यस्य वैयर्थ्यापत्तेः, ङीबादीनां तद्धिताधिकारात्प्राक् पाठेन दृष्टान्तासिद्धेश्च । अत एव 'नद्यृतश्चे'ति सूत्रे बालमनोरमायां 'तद्धितः समासान्तश्चेत्यपि बोध्य'मित्युक्तम् । 'केऽणः' इति

सूत्रशेखरेऽपि 'अत्र कस्तद्धित एव, व्याख्यानात्, तेन राकेत्यादौ न ह्रस्व' इत्युक्तम्। यदपि—वस्तुतस्तु साध्यतावच्छेदकावच्छिन्नस्य व्यापकतावच्छेदिका प्रतियोगिता येषामिति विग्रहेऽपि न दोषः, उक्तपुंवद्भावनिषेधस्यानित्यत्वेन पुंवद्भावोपपत्तेः। न च तस्यानित्यत्वे मानाभाव इति वाच्यम्, 'अनुदात्तं पदमेकवर्जमि'ति सूत्रेऽनेकमिति विहाय 'एकवर्जे' मित्युक्त्या नञ्निर्दिष्टकार्यस्याऽनित्यत्वज्ञापनादिति। तदपि न मनोरमम्। 'नञ्घटितमनित्यमि'त्यस्याः परिभाषाया भाष्येऽदर्शनात्, भाष्यानुक्तज्ञापितार्थस्य साधुताया नियामकत्वे मानाभावात्, भाष्याविचारितप्रयोजनानां सौत्राक्षराणां पारायणादावदृष्टमात्रार्थकत्वकल्पनाया एव न्याय्यत्वात्।

नन्वेवं दीधितिप्रयोगस्य का गतिरिति चेदत्रोच्यते—सामान्ये नपुंसकत्वमादाय दृढभक्तिरित्यस्येव व्यापकतावच्छेदकं प्रतियोगिता येषामिति विग्रहे साधुत्वसम्भवादिति।

❀ दीधितिः ❀

**सर्वत्र वाच्यत्वाद्यभावस्य तथात्वात् यावत्त्वोपादानम्। अत एव भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यादौ द्वित्वाद्यवच्छिन्नाभावस्य प्रतियोगिसामानाधिकरण्येऽपि भूतत्वमनोऽन्यत्वाद्यभावस्यातथात्वान्नातिप्रसङ्गः।**

❀ जागदीशी ❀

**सर्वत्रेति**। सद्धेतावसद्धेतौ चेत्यर्थः, तथा च यावत्त्वानुक्तावतिव्याप्तिरित्याशयः। **सर्वत्रेति**। सर्वत्र=व्यभिचारिणीत्यर्थ इत्यन्ये। केचित्तु-सर्वत्र=सकलहेत्वधिकरणावच्छेदेनेत्यर्थ इति प्राहुः। **वाच्यत्वाद्यभावस्येति**। घटत्वादिना वाच्यत्वाद्यभावस्येत्यर्थः। तथात्वात्=प्रतियोगिसमानाधिकरणत्वात्। तथा च धूमवान् वह्नेरित्यादावतिव्याप्तिवारणाथमेव यावत्पदमिति भावः।

ननु साध्यतावच्छेदकव्यापकप्रतियोगिताकयावदभावोक्त्यैव वाच्यत्वाद्यभावमादायोक्तातिप्रसङ्गस्य व्युदाससंभवात् साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावानां यावत्त्वोपादानं गौरवग्रस्तमत आह—**अत एवेति**। निरुक्ताभावे यावत्त्वोपादानादेवेत्यर्थः।

अन्यथा भूतत्वाद्यभावस्य साध्यतावच्छेदकव्यापकप्रतियोगिताकान्यत्वाद् भूतत्वमूर्तत्वोभयत्वाद्यवच्छिन्नाभावस्य च तादृशप्रतियोगिताकस्य स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणत्वादतिव्याप्तिः स्यादेवेति भावः ।

❀ दीपिका ❀

**तथा चेति ।** अयमाशयः—हेतुसमानाधिकरणाभावे यावत्त्वानुपादाने धूमवान् वह्नेरित्यादावतिव्याप्तिः, घटत्वादिना वाच्यत्वाभावस्य वह्न्यात्मकहेतुसमानाधिकरणतया साध्यीभूतधूमव्यापकतावच्छेदकप्रतियोगिताकतया च लक्षणघटकत्वेन तत्र च वाच्यत्वाऽत्मकप्रतियोगिसामानाधिकरण्यस्य सत्त्वात्, यावत्त्वोपादाने तु यावदन्तर्गते धूमसामान्याभावे धूमात्मकप्रतियोगिसामानाधिकरण्यविरहेण नातिव्याप्तिरिति ।

अथ साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावे यावत्वनिवेशे नैव घटत्वेन वाच्यत्वाद्यभावमादाय धूमवान् वह्नेरित्यादावतिव्याप्तिवारणं भवति, तादृशाभावीयप्रतियोगितायाः साध्यतावच्छेदकीभूतधूमत्वाव्यापकत्वेन तादृशाभावस्य यावदनन्तर्गतत्वादिति साध्यव्यापकतावच्छेदकप्रतियोगिताकाभावे यावत्त्वनिवेशनं व्यर्थमित्याङ्कते—**नन्विति ।**

जगदीशग्रन्थस्यायमाशयः—साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकव्यापकप्रतियोगिताका यावन्तोऽभावाः स्वप्रतियोगितावच्छेदकसम्बन्धेन स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणास्तत्त्वमिति समुदितार्थः । सम्बन्धान्तरावच्छिन्नाभावमादायासंभवनिरासाय साध्यतावच्छेदकसम्बन्धावच्छिन्नेत्युक्तम् । धूमसामान्याभावे कालिकादिसम्बन्धेन प्रतियोगिसामानाधिकरण्याद् धूमवान् वह्नेरित्यादावतिव्याप्तिवारणाय स्वप्रतियोगितावच्छेदकसम्बन्धेनेति । न च साध्यतावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्यम्, प्रतियोगिता तु यत्किञ्चित्सम्बन्धावच्छिन्ना ग्राह्या, तथा च नासंभवादिसंभावनाऽपीति वाच्यम्, सम्बन्धान्तरावच्छिन्नप्रतियोगिताकसाध्यसामान्याभावमादाय लक्षणसमन्वयसंभवे 'प्रतियोग्यवृत्तिश्चे'ति मूलानुत्थितिप्रसङ्गात् । न च धनी चैत्रत्वादित्यत्राव्याप्तिः, साध्यतावच्छेदकीभूतस्वामित्वसम्बन्धावच्छिन्नप्रतियोगिताया अप्रसिद्धेरिति वाच्यम्, वृत्त्यनियामकसम्बन्धस्यापि प्रतियोगितावच्छेदकत्वाङ्गीकर्तृमत एवैतल्लक्षणादरादिति।

**घाऽयत्वाद्यभावमादायेति।** घटत्वादिना वाच्यत्वाद्यभावमादायेत्यर्थः। उक्तातिप्रसङ्गस्य = धूमवान् वह्नेरित्यत्रातिव्याप्तेः। निरुक्ताभावे = साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावे। अन्यथा = साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावे यावत्त्वानुपादाने, साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावे यावत्त्वोपादाने इति यावत्। **साध्यतावच्छेदकेति।** साध्यतावच्छेदकीभूतोभयत्वाधिकरणे मूर्तत्वे भूतत्वाभावीयप्रतियोगित्वाभावस्य विद्यमानत्वेन भूतत्वाद्यभावस्य साध्यतावच्छेदकीभूतोभयत्वव्यापकप्रतियोगिताकत्वाभावादित्यर्थः। एवञ्च भूतत्वाद्यभावो न लक्षणघटक इति भावः। तादृशप्रतियोगिताकस्य=साध्यतावच्छेदकीभूतोभयत्वव्यापकप्रतियोगिताकस्य। स्वविशिष्टहेत्वधिकरणावच्छेदेन = मनोऽवच्छेदेन। साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावे यावत्त्वोपादाने तु नातिव्याप्तिः, साध्यतावच्छेदकीभूतोभयत्वावच्छिन्नाधिकरणे पृथिव्यादिचतुष्टये भूतत्वाद्यभावीयप्रतियोगितावान्नास्तीत्याकारकस्य मनोऽन्यत्वाद्यभावीयप्रतियोगितावान्नास्तीत्याकारस्य वाऽभावस्यासत्त्वेन भूतत्वाभावमनोऽन्यत्वाद्यभावादेरपि साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वेन यावदन्तर्गततया तत्र च प्रतियोगिसामानाधिकरण्यविरहात्।

यद्यपि साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावे यावत्त्वनिवेशेऽपि भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यत्र नातिव्याप्तिः, मनोभिन्नभेदस्यापि हेतुसमानाधिकरणतया साध्यतावच्छेदकीभूतोभयत्वव्यापकप्रतियोगिताकतया च यावदन्तर्गततया तत्र च प्रतियोगितावच्छेदकीभूततादात्म्यसम्बन्धेन प्रतियोगिसामानाधिकरण्यविरहात्, तथापि आदिपदग्राह्ये मूर्तमूर्तत्वोभयवान् मूर्तत्वादित्यत्र मनोभूतत्वमूर्तत्वैतत्त्रितयवान् मूर्तत्वादित्यादौ चातिव्याप्तेस्तादवस्थ्यात्, तत्र साध्यतावच्छेदकीभूतस्योभयत्वस्य त्रित्वस्य च मनसि सत्त्वेन मनोभिन्नभेदीयप्रतियोगिताया असत्त्वेन साध्यतावच्छेदकाव्यापकत्वेन मनोभिन्नभेदस्य लक्षणाघटकत्वात्।

भट्टाचार्यास्तु—'ननु यावत्पदानुपादाने साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वं परित्यज्य साध्यतावच्छेदकव्याप्यप्रतियोगिताकत्वेनैवाभावो विशेषणीयः, तद्व्याप्यत्वञ्च—स्वव्यापकतत्कत्वम्, अतो नानवस्था, वह्निमान् धूमादित्यादौ तत्तद्वह्न्याद्यभावानां साध्यतावच्छेदकव्याप्यप्रतियोगिताकानां यथाविवक्षणीयप्रतियोगिसामानाधिकरण्यविरहेऽपि घटत्वादिना वह्न्याद्यभावमादायैव लक्षणसमन्वयः, इत्थञ्च धूमवान् वह्नेरित्यत्र वाच्यत्वाद्यभावमादाय नातिव्याप्तिसंभवः,

तस्य धूमत्वाद्यव्याप्यप्रतियोगिताकत्वेन लक्षणघटकताविरहात्,' एवं सति हेतुसमानाधिकरणत्वविशेषणमप्यनर्थकमिति चेत्तदपि तर्हि त्यज्यतामित्याशङ्कापरिहाराय तथाविधाभावनिवेशनेऽपि यत्रातिव्याप्तिस्तत्र तत्पदव्यावृत्तिमाह-**अत एवेति**। अत एव = यावत्त्वोपादानादेव, द्वित्वाद्यवच्छिन्नाभावस्य = भूतत्वमूर्तत्वोभयत्वाद्यवच्छिन्नाभावस्य, प्रतियोगिसामानाधिकरण्येऽपि = मनोगगनयोः प्रत्येकं भूतत्वमूर्तत्वरूपप्रतियोगिसामानाधिकरण्येऽपि। तथा च यावत्पदानुपादाने साध्यतावच्छेदकव्याप्यप्रतियोगिताकतादृशोभयाभावस्यैव प्रतियोगिसमानाधिकरणतयाऽतिव्याप्तिः स्यादिति भावः। यावत्पदसत्त्वे तु यादृशाभावमादायातिव्याप्तिवारणं तादृशाभावं दर्शयति—**भूतत्वमनोऽन्यत्वाद्यभावस्येति**। भूतत्वाभावस्य मनोऽन्यत्वाद्यभावस्य चेत्यर्थः। अतथात्वात् = प्रतियोग्यसमानाधिकरणत्वात्' इति व्याचख्युः।

## ❁ जागदीशी ❁

**यत्तु साध्यप्रतियोगिको यत्किञ्चिदभावो यद्धर्मावच्छिन्नहेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणस्तद्धर्मवत्त्वमित्येवास्तु कृतं यावत्त्वगर्भनिरुक्त्या, धूमवान् वह्नेरित्यादौ घटत्वेन धूमाभावस्यैव तादृशस्य हेत्वधिकरणावच्छेदेन प्रतियोग्यसमानाधिकरणत्वादतिव्याप्तिव्युदासादित्याशङ्क्यात एवेत्यादिकमवतारयन्ति। तत्तुच्छम्। तादृशाऽशंकायां धूमवान् वह्नेरित्यादिप्रसिद्धस्थले एव वह्निधूमोभयत्वावच्छिन्नाभावमादायातिव्याप्तिसंभवे भूतत्वमूर्तत्वोभयवानित्याद्यनुधावनस्य सन्दर्भविरोधापत्तेः।**

## ❁ दीपिका ❁

अत एवेत्यादिग्रन्थमन्यथाऽवतारयतां मतं दूषयितुमुपन्यस्यति—**यत्त्विति**। यद्धर्मावच्छिन्नेत्यत्र यद्धर्मपदं हेतुतावच्छेदकपरम्। एतन्मते वह्निमान् धूमादित्यादौ साध्यप्रतियोगिको यत्किञ्चिदभावो घटत्वेन वह्न्यभावः तत्र पर्वताद्यवच्छेदेन वह्न्यात्मकप्रतियोगिसामानाधिकरण्यसत्त्वाल्लक्षणसमन्वयः। तादृशस्य = साध्यप्रतियोगिकस्य। एवञ्च यावत्त्वाप्रवेशे न धूमवान् वह्नेरित्यादावतिव्याप्तिः, घटत्वेन धूमाभावस्यैव साध्यप्रतियोगिकत्वेन लक्षणघटकतया तत्र हेत्वधिकरणीभूतायोगोलकावच्छेदेन धूमात्मकप्रतियोगिसामानाधिकरण्यविरहात्, किन्तु भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यत्रोभयाभावमादायातिव्याप्तिवारणायैव यावत्पदोपादानम्।

नन्वत्र कल्पे यद्धर्मावच्छिन्नत्वोपादानं व्यर्थमिति चेन्न, विशिष्टस्य शुद्धानति-

रेकितया हेत्वधिकरणीभूतगुणावच्छेदेन द्रव्यत्वरूपप्रतियोगिसामानाधिकरण्यविरहेण द्रव्यं विशिष्टसत्त्वादित्यत्राव्याप्तेः ।

**अतिव्याप्तिसंभवे इति ।** तथा च वह्निधूमोभयाभावस्यापि साध्यप्रतियोगिकतया लक्षणघटकत्वेनायोगोलकावच्छेदेन प्रतियोगिसामानाधिकरण्यसत्त्वेन धूमवान् वह्नेरित्यादावप्यतिव्याप्तिः संभवतीति भावः ।

## ❀ जागदीशी ❀

यदपि यादृशाभावस्य प्रतियोगिताया व्यापकं साध्यतावच्छेदकं तादृशः कश्चिदभावो यद्धर्मावच्छिन्नहेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणः तद्धर्मवत्त्वं व्याप्तिरित्युक्त्यैव वाच्यत्वाद्यभावमादायातिव्याप्तिवारणसंभवात् यावत्त्वगर्भलक्षणं गौरवग्रस्तमतोऽत एवेत्यादीति। तदप्यसङ्गतम् । प्रतियोगितामात्रस्यैव प्रत्येकपर्यवसितत्वेन वह्निधूमोभयत्वादेः तद्व्यापकत्वासंभवात् वह्निधूमोभयवान् धूमादित्यादावव्याप्तिभयेन तादृशनिरुक्तेः शंकितुमप्यशक्यत्वादिति ।

## ❀ दीपिका ❀

**वाच्यत्वाद्यभावमिति ।** घटत्वेन वाच्यत्वाद्यभावमित्यर्थः । तथा चैतन्मते यावत्पदाप्रवेशे धूमवान् वह्नेरित्यादौ नातिव्याप्तिः, साध्यतावच्छेदकीभूतधूमत्वस्य घटत्वेन वाच्यत्वाद्यभावीयप्रतियोगिताव्यापकत्वाभावेन घटत्वेन वाच्यत्वाद्यभावस्य लक्षणाघटकत्वात्, अतो भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यादौ निरुक्तोभयाभावमादायातिव्याप्तिवारणमेव यावत्पदनिवेशफलमित्याशयः ।

तद्व्यापकत्वासंभवात् = वह्निधूमोभयाभावीयप्रतियोगिताव्यापकत्वाभावात् । एवञ्च—वह्निधूमोभयवान् धूमादित्यत्र घटत्वेन वह्निधूमोभयाभावमादायैव लक्षणसंगतिः कार्या, तच्च न संभवति, साध्यतावच्छेदकीभूतोभयत्वस्य वह्निधूमोभयस्मिन् पर्याप्ततया तादृशोभयाभावीयप्रतियोगितायाश्च प्रत्येकमात्रपर्याप्तत्वेनोभयत्वस्य तादृशप्रतियोगिताव्यापकत्वाभावेन तादृशाभावस्य लक्षणाघटकत्वादिति भावः ।

ननु उभयत्वस्य पर्याप्तिसम्बन्धेनैकत्वावच्छेदेनाभावसत्त्वेऽपि प्रतियोगिवैयधिकरण्यघटितव्यापकत्वमस्त्येव, तद्घटितव्यापकत्वञ्च-प्रतियोगिव्यधिकरणप्रतियोगित्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वमेव, तथा च वह्निधूमोभयाभावीयप्रतियोगित्वाधिकरणे वह्नौ धूमे वा वर्तमानोऽपि वह्निधूमोभयत्वाभावो न प्रतियोगिव्यधिकरण इति तादृशोभयत्वे तादृशोभयाभावीयप्रतियोगिताव्यापकत्वस्याक्षततया नाव्या-

प्तिरिति चेन्न, यथाश्रुतप्रतियोगिवैयधिकरण्याघटितव्यापकत्वाभिप्रायेणैव जगदीशेन तस्य दूषितत्वेन प्रतियोगिवैयधिकरण्यघटितकल्पेऽव्याप्तिनिरासस्याकिञ्चित्करत्वात्।

❀ जागदीशी ❀

**नव्यास्तु—ननु साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नसाध्यनिष्ठयादृशप्रतियोगिताको यत्किञ्चिदभावो यदधिकरणावच्छेदेन साध्यतावच्छेदकसम्बन्धेन तादृशप्रतियोगित्वाश्रयसमानाधिकरणस्तत्त्वमित्यस्यैव सम्यक्त्वे यावत्त्वगर्भलक्षणारम्भो गौरवग्रस्तः, प्रमेयवान् वाच्यत्वादित्यादौ गगनाद्यवच्छिन्नप्रतियोगिताकं प्रमेयाभावं वह्निमान् धूमादित्यादौ च वह्निसामान्याभावमादायैव लक्षणसङ्क्रमनात्, गगनादेर्वृत्तिमत्त्वलक्षणधर्मत्वाभावात्। सामान्याभावीयान्यप्रतियोगित्वं च प्रत्याश्रयं विभिन्नम्, अतो गगनाद्यवच्छिन्नप्रमेयमात्रस्याभावमादाय धूमवान् वह्नेरित्यादौ नातिप्रसङ्गः। न चानवच्छिन्नान्तवैयर्थ्यम्, वह्निधूमोभयत्वावच्छिन्नाभावमादायातिव्याप्तेर्वारकत्वात्। साध्यनिष्ठपदमपि तदर्थमेव, अन्यथा गगनाद्यवच्छिन्नप्रतियोगिताकवाच्यत्वाद्यभावमादाय व्यभिचारिमात्रेऽतिव्याप्त्यापत्तेरत आह—अत एवेति।**

❀ दीपिका ❀

अत एवेत्यादिदीधितिग्रन्थावतरणपरं नव्यानां मतमाह—**नव्यास्त्विति।** साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्ना या साध्यनिष्ठप्रतियोगिता तादृशप्रतियोगितानिरूपक इत्यर्थः। यावत्पदाघटितलक्षणसमन्वयं कुरुते—**प्रमेयवानित्यादि।** तथा च वृत्तिमत्त्वमेव धर्मत्वमिति नियमेन गगनादेर्धर्मत्वविरहेण गगनेन प्रमेयाभावस्य गगनावच्छिन्नप्रतियोगिताकत्वेऽपि साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नतया लक्षणघटकत्वेन प्रमेयनिष्ठप्रतियोगिताश्रयघटादिसामानाधिकरण्यस्य वाच्यत्वरूपहेत्वधिकरणावच्छेदेन गगनेन प्रमेयाभावे सत्त्वात् प्रमेयवान् वाच्यत्वादित्यत्र लक्षणसमन्वयः, वह्निमान् धूमादित्यादौ च गगमावच्छिन्नप्रतियोगिताकवह्निसामान्याभावस्यैव साध्यतावच्छेदकीभूतवह्नित्वातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकतया लक्षणघटकतया तादृशप्रतियोगिताश्रयीभूतवह्निसामानाधिकरण्यस्य हेत्वधिकरणीभूतमहानसाद्यवच्छेदेन तत्र सत्त्वाल्लक्षणसमन्वयः।

ननु धूमवान् वह्नेरित्यादौ गगनेन प्रमेयाभावस्य लक्षणघटकत्वेन तत्रायोगोलकाद्यवच्छेदेन तादृशप्रतियोगिताश्रयीभूतवह्निसामानाधिकरण्यसत्त्वादतिव्याप्तिरित्यत

आह—**सामान्याभावीयान्येति**। तथा च तादृशप्रतियोगितापदेन धूमनिष्ठाया एव ग्रहणेन तदाश्रयधूमस्यायोगोलकेऽसत्त्वेन तत्र हेत्वधिकरणावच्छेदेन तादृशप्रतियोगिताश्रयसामानाधिकरण्यविरहेण नातिव्याप्तिरिति तत्त्वम्।

अथात्र साध्यनिष्ठयादृशप्रतियोगिताको यत्किञ्चिदभावो यदधिकरणावच्छेदेन साध्यतावच्छेदकसम्बन्धेन तादृशप्रतियोगिताश्रयसमानाधिकरणस्तत्त्वमित्यस्यैव सम्यक्त्वे प्रतियोगितायां साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वविशेषणं व्यर्थमित्याशङ्कते—**न चेति**। अस्य वैयर्थ्यमित्यनेनान्वयः। समाधत्ते—**वह्निधूमोभयत्वेति**। तथा चानवच्छिन्नान्तानुपादाने धूमवान् वह्नेरित्यत्र वह्निधूमोभयत्वावच्छिन्नप्रतियोगिताकवह्निधूमोभयाभावस्य धूमनिष्ठप्रतियोगिताकत्वेन लक्षणघटकत्वात्तत्र च तादृशप्रतियोगिताश्रयवह्निसामानाधिकरण्यस्यायोगोलकावच्छेदेन सत्त्वादतिव्याप्तिः स्यात्, तदुपादाने तु साध्यतावच्छेदकातिरिक्तोभयत्वावच्छिन्नप्रतियोगिताकत्वेन निरुक्तोभयाभावस्य न लक्षणघटकतेति भावः।

अथैवमपि साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकयत्किञ्चिदभाव एव निवेश्यताम्, प्रतियोगितायां साध्यनिष्ठत्वविशेषणं व्यर्थमित्यत आह—**साध्यनिष्ठेति**। तदर्थमेव = अतिव्याप्तिवारणार्थमेव, अन्यथा=प्रतियोगितायां साध्यनिष्ठत्वविशेषणानुपादाने। तथा च गगनेन वाच्यत्वाभावस्य साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकतया लक्षणघटकत्वेन तत्र च वाच्यत्वरूपप्रतियोगिसामानाधिकरण्यस्य हेत्वधिकरणीभूतायोगोलकाद्यवच्छेदेन सत्त्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिः स्यादेव, साध्यनिष्ठत्वोपादाने तु गगनेन वाच्यत्वाभावीयप्रतियोगिताया धूमनिष्ठत्वाभावेन न तादृशाभावस्य लक्षणघटकत्वमिति भावः।

न चैवमपि साध्यतावच्छेदकसम्बन्धेनेत्यस्योपादानं व्यर्थमिति वाच्यम्, धूमाभावस्य हेत्वधिकरणायोगोलकावच्छेदेन कालिकसम्बन्धेन प्रतियोगिसामानाधिकरण्यसत्त्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिस्तन्निरासाय तदुपादानस्याऽवश्यकत्वात्।

नन्वत्र साध्यतावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्योक्तौ प्रयोजनविरहेण साध्यनिष्ठप्रतियोगितायां सम्बन्धावच्छिन्नत्वं न निवेशनीयम्, एवञ्च व्यधिकरणसम्बन्धावच्छिन्नवह्निसामान्याभावमादाय वह्निमान् धूमादित्यादौ लक्षणसमन्वयसंभवे 'प्रतियोग्यवृत्तिश्चे'ति दीधितिग्रन्थानुत्थितिप्रसङ्ग इति चेन्न, प्रमेयवान् वाच्यत्वादित्यादौ कस्यापि सम्बन्धस्य व्यधिकरणत्वाभावेन गगनादिना प्रमेया-

भावरूपव्यधिकरणधर्मावच्छिन्नाभावमादायैव लक्षणस्य सङ्गमनीयत्वे 'प्रतियोग्यवृत्तिश्चे'ति ग्रन्थावतारसंभवात् ।

अत्र लक्षणे तादृशप्रतियोगितापदेन साध्यनिष्ठप्रतियोगित्वमात्रं परामृश्यते, न तु साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नसाध्यनिष्ठप्रतियोगित्वपर्यन्तम्, तथा सति यः कश्चिदभावो यदधिकरणावच्छेदेन साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नसाध्यनिष्ठप्रतियोगिताश्रयसमानाधिकरणस्तत्त्वमित्येतावतैव धूमवान् वह्नेरित्यत्रातिव्याप्तिवारणसंभवे तत्र साध्यनिष्ठप्रतियोगिताकत्वान्तविशेषणं व्यर्थं स्यात्, इष्टापत्तौ तु व्यधिकरणधर्मावच्छिन्नाभावं विनैव लक्षणसमन्वयसंभवे 'प्रतियोग्यवृत्तिश्चे'ति ग्रन्थानवतारप्रसङ्गात् ।

वस्तुतस्तु तादृशप्रतियोगितापदेन साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नसाध्यनिष्ठप्रतियोगित्वमेव परामृश्यते, अन्यथा समनियताभावानामैक्यमते द्रव्यत्वाभावसमनियतस्य द्रव्यत्वसत्त्वोभयाभावस्य तादृशप्रतियोगिताश्रयीभूतसत्त्वसामानाधिकरण्याद्द्रव्यं सत्त्वादित्यत्रातिव्याप्तिर्दुरुद्धरा स्यात् । न चैवं भट्टाचार्योक्तसाध्यतावच्छेदकातिरिक्तेत्यादिकं व्यर्थमिति वाच्यम्, साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नसाध्यनिष्ठप्रतियोगिताकाभावत्वं यद्धर्मावच्छिन्नाधिकरणावच्छेदेन स्वनिरूपितप्रतियोगिताश्रयसमानाधिकरणवृत्तीत्यर्थलाभाय तस्याऽवश्यकत्वात् । न च प्रथमसाध्यनिष्ठदलं व्यर्थम्, व्यभिचारिणि गगनेन वाच्यत्वाभावीयप्रतियोगिताया निरुक्ततादृशपदेनैव वारणसंभवेनातिव्याप्तिविरहादिति वाच्यम्, साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नाऽवच्छेदकताकप्रतियोगिताकाभावलाभाय तस्याप्यावश्यकत्वात्, अन्यथा कालिकसम्बन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्यापि तथात्वेन तदीयप्रतियोगित्वयोरैक्येन धूमनिष्ठप्रतियोगिताश्रयस्य वह्नेः सामानाधिकरण्येन धूमवान् वह्नेरित्यत्रातिव्याप्तिः स्यात् ।

ननु प्रमेयाश्रयवान् वाच्यत्वादित्यत्र साध्यतावच्छेदकातिरिक्ताप्रसिद्ध्याऽव्याप्तिः, एवं महानसीयवह्निमान् धूमादित्यत्र वह्न्यभावस्यापि तथात्वेनातिव्याप्तिरपीति चेन्न—साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपभिन्नं यत् साध्यतावच्छेदकसम्बन्धावच्छिन्नसम्बन्धितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपम्, तत्रावृत्तिर्या साध्यनिष्ठप्रतियोगिता तन्निरूपकाभावनिवेशेनादोषात्, रूपवृत्तित्वञ्च—स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, एवञ्च संयोगेन समवा-

यिनोऽभावमादाय नोक्तस्थलेऽतिव्याप्तिः, साध्यतावच्छेदकसंयोगगतरूपभिन्नसमवायगतं यद्रूपं तदेव सम्बन्धतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकम्, तत्र च निरुक्तसम्बन्धेन प्रतियोगिताया वृत्तित्वात्।

अथ धर्मानवच्छिन्नसाध्यनिष्ठप्रतियोगिताकाभावोक्त्यैव सकलसामञ्जस्ये धर्मविशेषणतया साध्यतावच्छेदकातिरिक्तत्वस्य प्रवेशो व्यर्थ इति चेन्न, भूतत्वमूर्तत्वोभयत्वाद्यवच्छिन्नाभावस्येति दीधितिग्रन्थसङ्गमनार्थत्वात्।

नन्वेवं व्यधिकरणधर्मावच्छिन्नाभावीयप्रतियोगितावच्छेदकत्वस्य प्रतियोग्यंशे प्रकारीभूतधर्मेऽपि सत्त्वेन गगन प्रमेयाभावीयप्रतियोगितायाः साध्यतावच्छेदकीभूतधूमत्वातिरिक्तप्रमेयत्वावच्छिन्नतया साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वाभावेन गगनेन प्रमेयाभावमादाय धूमवान् वह्नेरित्यादावतिव्याप्त्यभावात् 'सामान्याभावीयान्यप्रतियोगित्व'मिति जगदीशग्रन्थस्यासङ्गतिरिति चेन्न, धूमानुयोगिकस्वरूपेण प्रमेयत्वविशिष्टस्य साध्यतायां वह्न्यादिहेतावतिव्याप्तिवारणाय तद्ग्रन्थसङ्गतेः।

## ❀ जागदीशी ❀

इत्थं च भूतत्वविशिष्टमूर्तत्वाद्यभावस्य साध्यतावच्छेदकातिरिक्तधर्मावच्छेद्यप्रतियोगिताकतया तस्य प्रतियोगिसामानाधिकरण्यं नातिव्याप्तिं सम्पादयतीत्याशयेन द्वित्वावच्छिन्नाभावपर्यन्तस्य प्रतियोगिसामानाधिकरण्याभिधानमपि साधु संगच्छते। परन्तु प्रकृतसाध्यव्याप्यतावच्छेदकप्रतियोगिताको यः कश्चिदभावो यदधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणस्तत्त्वमेवाव्यभिचरितत्वं कुतो न कृतं, भूतत्वमूर्तत्वोभयत्वावच्छिन्नप्रतियोगिताव्यक्तेस्तादृशोभयात्मकसाध्यव्याप्यतावच्छेदकत्वाभावादेव तादृशोभयाभावमादायातिव्याप्त्यभावादिति विभावनीयमिति प्राहुः। तच्चिन्त्यम्।

केचित्तु—ननु यत्किञ्चिदभावो यदधिकरणावच्छेदेन साध्यनिरूपितसाध्यतावच्छेदकसम्बन्धेन प्रतियोगिसमानाधिकरणस्तत्त्वमित्येव लक्षणं कुतो न कृतमित्यत आह—अत एवेतीत्यपि वदन्ति।

## ❀ दीपिका ❀

**इत्थञ्चेति।** अयमाशयः—यावत्पदानुपादाने साध्यव्यापकतावच्छेदकप्रतियोगिताको यः कश्चिदभावो यदधिकरणावच्छेदेन प्रतियोगिसमानाधिकरण इत्येतावन्मात्रोक्तौ भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यादौ भूतत्वविशिष्टमूर्तत्वाद्यभावस्यापि

साध्यव्यापकतावच्छेदकप्रतियोगिताकतया लक्षणघटकत्वेन तादृशविशिष्टाभावस्य हेत्वधिकरणीभूतमनोऽवच्छेदेन मूर्तत्वरूपप्रतियोगिसामानाधिकरण्यसत्त्वाद् विशिष्टाव्यर्थः स्यात्, भावमादायैवातिव्याप्तिसंभवे द्वित्वावच्छिन्नाभावपर्यन्तानुसरणप्रयासो दीधितिकृतोऽन्यमते तु निरुक्तविशिष्टाभावीयप्रतियोगितायाः साध्यतावच्छेदकातिरिक्तवैशिष्ट्यधर्मावच्छिन्नतया न विशिष्टाभावस्य लक्षणघटकत्वमिति द्वित्वावच्छिन्नाभावपर्यन्तानुसरणं सम्यगेवेति ।

**प्रकृतसाध्यव्याप्येति ।** अत्र व्याप्यत्वं यदि साध्याभाववदवृत्तित्वरूपम्, तदा वाच्यत्वाद्यभावाप्रसिद्धया इदं वाच्यं ज्ञेयत्वादित्यादिकेवलान्वयिन्यव्याप्तिः, यदि च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मावच्छिन्नसामानाधिकरण्यरूपं, तदा प्रकृतसाध्यव्याप्यताघटितलक्षणस्यार्थान्तरग्रस्तत्वमिति चेदत्रोच्यते—यादृशप्रतियोगित्वावच्छिन्नव्यापकतावच्छेदकं साध्यतावच्छेदकं तादृशप्रतियोगिताकाभावस्यैव अत्र कश्चिदभावपदेन विवक्षितत्वात्, एवञ्च वह्निधूमोभयवान् धूमादित्यत्र वह्निधूमोभयाभावमादायैव लक्षणं संगमनीयम्, तादृशोभयाभावीयप्रतियोगित्वावच्छिन्नाधिकरणे पर्वतादौ वह्निधूमोभयाभावस्याविद्यमानत्वेन वह्निधूमोभयत्वरूपसाध्यतावच्छेदकस्य तादृशप्रतियोगित्वावच्छिन्नव्यापकतावच्छेदकत्वात् । भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यादौ तु भूतत्वमूर्तत्वोभयाभावस्य न लक्षणघटकत्वम्, तादृशोभयाभावीयप्रतियोगित्वावच्छिन्नाधिकरणे गगने मनसि च तादृशोभयाभावस्य सत्त्वेन भूतत्वमूर्तत्वोभयत्वरूपसाध्यतावच्छेदकस्य तादृशप्रतियोगित्वावच्छिन्नव्यापकतानवच्छेदकत्वात् ।

**तच्चिन्त्यमिति ।** चिन्ताबीजन्तु—विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिरेव, विशिष्टसत्ताभावस्य साध्यव्याप्यतावच्छेदकप्रतियोगिताकत्वेन लक्षणघटकतया तादृशाभावे हेत्वधिकरणीभूतगुणाद्यवच्छेदेन प्रतियोगिताश्रयीभूतसत्तासामानाधिकरण्यसत्त्वात् । अन्यत् सुगमम् ।

## ❀ जागदीशी ❀

भूतत्वमात्मभिन्नत्वे सति विशेषगुणवत्त्वम्, तच्च न व्यापकतायाः प्रतियोगिवैयधिकरण्याघटितकल्पे भूतत्वमूर्तत्वोभयस्य व्यापकं तादृशोभयवति घटादौ उत्पत्तिक्षणावच्छेदेन विशेषगुणत्वावच्छिन्नाभावसत्त्वादत उक्तम्—मनोऽन्यत्वेति । साध्यस्याभावमादाय नातिव्याप्तिः सुतरां वस्त्वन्तरस्येति कैमुतिकन्यायेनोक्तं मनोऽन्यत्वेतीत्यपि वदन्ति । अतथात्वादिति ।

स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोग्यसमानाधिकरणत्वादित्यर्थः। मनस्येव व्यभिचारादिति भावः।

❀ दीपिका ❀

यावत्पदोपादानेऽपि भूतत्वाभावमादाय भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यादौ नातिव्याप्तिपरिहारः संभवतीत्याह—**भूतत्वेति। तच्चेति।** आत्मभिन्नत्वे सति विशेषगुणवत्त्वरूपं भूतत्वञ्चेत्यर्थः। अयमाशयः—व्यापकतायाः प्रतियोगिवैयधिकरण्याघटितकल्पे साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकीभूतप्रतियोगिताका यावन्तोऽभावा इत्याद्येव लक्षणं पर्यवस्यति, एवञ्च—भूतत्वमूर्तत्वोभयाधिकरणे घटादौ उत्पत्तिकालावच्छेदेन आत्मभिन्नत्वविशिष्टविशेषगुणवत्त्वरूपभूतत्वाभावस्य सत्त्वात्तादृशविशेषगुणवत्त्वनिष्ठप्रतियोगितायाः प्रतियोगितावच्छेदकत्वेन साध्यव्यापकतावच्छेदकत्वाभावान्न भूतत्वाभावस्य लक्षणघटकत्वम्।

**मनोऽन्यत्वेतीति।** एव च्चयावदन्तर्गतस्य मनोऽन्यत्वाभावस्य हेत्वधिकरणीभूतमनोऽवच्छेदेन मनोभेदात्मकप्रतियोगिसामानाधिकरण्यविरहेण भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यादौ नातिव्याप्तिरिति भावः।

❀ दीधितिः ❀

**साधनसमानाधिकरणगोत्वाद्यभावस्य तत्तत्साध्यव्यक्त्यभावस्य चातथात्वात् साध्यतावच्छेदकेत्यादि।**

❀ जागदीशी ❀

ननु यत्समानाधिकरणा यावन्तोऽभावा व्याप्यवृत्तितानिरूपकप्रतियोगिताश्रयसमानाधिकरणास्तत्त्वमित्यस्यैव सम्यक्त्वे साध्यतावच्छेदकावच्छिन्नेत्यादिकं व्यर्थम्।

( न च साधनसमानाधिकरणगोत्वाद्यभावस्य हेत्वधिकरणावच्छेदेन प्रतियोग्यसमानाधिकरणत्वादसम्भव इति वाच्यम्, तस्यापि पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिसमानाधिकरणत्वात्। न चैवंरीत्या व्यभिचारिण्यतिव्याप्तिरिति वाच्यम्, ) अभावस्य समानाधिकरणधर्मावच्छिन्नस्वीययत्प्रतियोगिताश्रयसामानाधिकरण्यं तदन्यप्रतियोगिताया एव व्याप्यवृत्तितानिरूपकतया धूमाद्यभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावनिष्ठप्रतियोगिताया अतथात्वेन धूमवान् वह्नेरित्यादावतिव्याप्त्ययोगादत

**आह—साधनेत्यादि । गोत्वादीत्यादिशब्देन गगनादिसंग्रहः, तथा च तद्दलानुक्तौ असंभव एव स्यादिति भावः ।**

## ❀ दीपिका ❀

अथ धूमवान् वह्नेरित्यादौ हेतुसमानाधिकरणधूमाभावस्य पूर्वक्षणवृत्तित्वविशिष्ट-स्वा-(धूमाभावा)-भावात्मकप्रतियोगिसामानाधिकरण्यसत्त्वादतिव्याप्तिरिति तन्निरासाय प्रतियोगिसामानाधिकरण्यघटकप्रतियोगितायां व्याप्यवृत्तितानिरूपकत्वमवश्यं निवेशनीयम्, तावतैव सकलसामञ्जस्ये साध्यतावच्छेदकावच्छिन्नेत्यादिदलं व्यर्थमित्याशङ्कते—**नन्विति** । कुण्डलितः पाठः सर्वत्र नोपलभ्यते, निगदव्याख्यातत्वेनास्माभिरपि तद्व्याख्यानमुपेक्ष्यते । अतथात्वेन = व्याप्यवृत्तितानिरूपकत्वाभावेन । स्वीययत्प्रतियोगितेत्यत्र स्वपदं यत्समानाधिकरणत्वेनाभिमताभावपरम्, एवञ्च धूमाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावनिष्ठप्रतियोगिताश्रयसामानाधिकरण्येन धूमनिष्ठप्रतियोगितैव व्याप्यवृत्तितानिरूपिका न तु पूर्वक्षणवृत्तित्वविशिष्टस्वाभावनिष्ठप्रतियोगितेति नातिव्याप्तिः । न च अभावस्य स्वीययत्प्रतियोगिताश्रयसामानाधिकरण्यं तदन्यप्रतियोगिताया एव व्याप्यवृत्तितानिरूपकत्वमित्येतावतैव पूर्वोक्तातिव्याप्तिनिरासंभवे स्वीययत्प्रतियोगितायां समानाधिकरणधर्मावच्छिन्नत्वनिवेशनं व्यर्थमिति वाच्यम्, घटत्वेन वह्न्यभावीयप्रतियोगिताया व्याप्यवृत्तितानिरूपकत्वलाभाय तन्निवेशस्याऽवश्यकत्वात्, अन्यथा तादृशाभावस्य घटत्वावच्छिन्नवह्निनिष्ठप्रतियोगिताश्रयीभूतवह्निसामानाधिकरण्यस्यैव सत्त्वेन तदन्यत्वविरहेण तादृशाभावीयप्रतियोगिताया व्याप्यवृत्तितानिरूपकत्वन्न स्यात्, तन्निवेशे तु समानाधिकरणधर्मावच्छिन्नत्वाभावेन तदन्यत्वस्य सत्त्वाद् व्याप्यवृत्तितानिरूपकत्वमस्ति ।

अथैवं वह्निमान् धूमादित्यादावव्याप्तिः, महानसीयत्वेन वह्न्यभावस्यापि निरुक्तयावदन्तर्गतत्वेन तत्र च व्याप्यवृत्तितानिरूपकमहानसीयत्वावच्छिन्नप्रतियोगिताश्रयीभूतवह्निसामानाधिकरण्यविरहादिति चेन्न, स्वीयपदेन प्रकृतसाध्यव्यापकतावच्छेदकप्रतियोगितायां निरुक्तव्याप्यवृत्तितानिरूपकत्वलाभेन व्याप्यवृत्तितानिरूपकं प्रकृतसाध्यव्यापकतावच्छेदकं यत् प्रतियोगित्वं तदाश्रयसामानाधिकरण्यमित्यर्थलाभेन महानसीयत्वावच्छिन्नायाः प्रतियोगिताया वह्निव्यापकतावच्छेदकत्वाभावेन तादृशाभावस्य लक्षणाघटकत्वात् ।

**गोत्वाद्यभावस्येति** दीधितिः । एवञ्च साध्यतावच्छेदकेत्यादिदलाप्रवेशे गोत्वाभाव-गगनाभावादीनां हेतुसमानाधिकरणत्वेन यावदन्तर्गतानां व्याप्यवृत्ति-

तानिरूपकप्रतियोगिताश्रयीभूतगोत्व—गगनादिसामानाधिकरण्यविरहादसंभवः स्यात्, तत्प्रवेशे तु गोत्वाद्यभावीयप्रतियोगिताया वह्न्यादिरूपसाध्यव्यापकतावच्छेदकत्वाभावेन गोत्वाद्यभावानां न यावदन्तर्गतत्वमिति भावः ।

❀ जागदीशी ❀

नन्वेवं यत्समानाधिकरणा यावन्तः साध्यप्रतियोगिकाभावाः साध्यतावच्छेदकसम्बन्धेन प्रतियोगिसमानाधिकरणास्तत्त्वमित्येवोच्यताम्, तावतैव गोत्वाद्यभावमादायासम्भवस्य व्युदासादित्यत आह—तत्तदिति। तथा चोक्तविवक्षायां द्रव्यत्वाद्येकव्यक्तिसाध्यकसद्धेतौ लक्षणसंभवेऽपि वह्निमान् धूमात् जातिमान् सत्त्वादित्यादौ साध्यप्रतियोगिकानां तत्तद्वह्न्यभावानाम्, आत्मत्वाद्यभावानाञ्च प्रतियोग्यसमानाधिकरणत्वादव्याप्तिरिति भावः । न च साध्यव्यापकप्रतियोगिका इत्यस्यैव सम्यक्त्वे व्यापकतावच्छेदकप्रति योगित्वपर्यन्तं व्यर्थमिति वाच्यम्, तत्तत्साध्यव्यक्तीनां गगनादीनां च प्रमेयत्वादिप्रकारेण साध्यव्यापकतया तदभावमादायासंभवापत्तेः । न च वृत्तिमत्त्वे सति स्वानधिकरणसाध्यवन्निष्ठाभावाप्रतियोगित्वेन साध्यव्यापकत्वं निरुच्य तत्प्रतियोगिकाभावा एव निवेश्यन्तामिति वाच्यम्, तस्य लक्षणान्तरत्वेऽपि उक्तलक्षणस्यादुष्टत्वादिति भावः ।

❀ दीपिका ❀

अथाभावे साध्यप्रतियोगिकत्वविशेषणदानेनैव गोत्वाद्यभावस्य साध्यप्रतियोगिकत्वाभावेन लक्षणाघटकतया नासंभव इत्याशङ्कते—**नन्वेवमिति** । उक्तविवक्षायाम्=अभावे साध्यप्रतियोगिकत्वविवक्षायाम् । **द्रव्यत्वाद्येकेति** । द्रव्यं पृथिवीत्वादित्यादावित्यर्थः, तथा च द्रव्यं पृथिवीत्वादित्यादौ घटत्वादिना द्रव्यत्वाभावमादाय लक्षणसमन्वयेनासंभवासंभवेऽपि वह्निमान् धूमादित्यत्र तत्तद्वह्न्यभावमादायाव्याप्तिरेवेति भावः । संयोगेन साध्यतायामव्याप्तिमुक्त्वा समवायेन साध्यतायामव्याप्तिमाह—**जातिमानिति** । तथा च यत्समानाधिकरणाभावे साध्यप्रतियोगिकत्वमात्रनिवेशे जातिमान् सत्त्वादित्यादौ हेत्वधिकरणे गुणादौ वर्तमानस्याऽऽत्मत्वाद्यभावस्यापि आत्मस्वरूपजातिप्रतियोगिकत्वेन यावदन्तर्गतस्य समवायेन आत्मस्वरूपप्रतियोगिसामानाधिकरण्यविरहेणाव्याप्तिः, साध्यतावच्छेदकेत्यादिप्रवेशे तु जात्यधिकरणे गुणादौ आत्मत्वाद्यभावीयप्रतियोगितावान्नास्तीत्याकारकाभावसत्त्वेन आत्मत्वाभावस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वाभावेन न यावदन्तर्गतत्वमिति

भावः । नन्वेवमपि हेतुसमानाधिकरणाभावे साध्यव्यापकप्रतियोगिकत्वनिवेशेनैव तत्तद्वह्नयभावानामात्मत्वाभावानाञ्च वारणसंभवः, तत्तद्वह्नयादेर्वह्निव्यापकत्वस्याऽत्मत्वादौ च जातिव्यापकत्वस्याभावादिति शङ्कते—**न चेति ।** समाधत्ते—**तत्तत्-साध्येति ।** तथा च साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकधर्मवत्त्वमेव साध्यव्यापकत्वमिति साध्याधिकरणे पर्वतादौ वर्तमानस्य घटाद्यभावस्य प्रतियोगितानवच्छेदकप्रमेयत्वस्य तत्तत्साध्यव्यक्तौ गगनादौ च सत्त्वेन गगनाद्यभावस्यापि साध्यव्यापकप्रतियोगिकतया यावदन्तर्गतत्वेनासंभवतादवस्थ्यमिति भावः ।

ननु प्रतियोग्यनधिकरणं यत्साध्याधिकरणं तद्वृत्त्यभावाप्रतियोगित्वे सति वृत्तिमत्त्वमेव साध्यव्यापकत्वम्, तथा च साध्याधिकरणे पर्वतादौ वर्तमानस्य गगनाद्यभावस्य न साध्यव्यापकप्रतियोगिकत्वमिति न दोष इत्याशंकते—**न चेति ।** अत्र स्वपदेन प्रतियोगिनो ग्रहणं बोध्यम् । **तत्प्रतियोगिकेति ।** स्वानधिकरण-साध्याधिकरण-वृत्त्यभावाप्रतियोगिवृत्तिमत्प्रतियोगिकेत्यर्थः । लक्षणस्य लक्षणान्तरादूषकत्वाभिप्रायेण समाधत्ते—**तस्येति ।**

## ❀ दीधितिः ❀

**येन सम्बन्धेन हेतुस्तेनैव तदधिकरणं बोध्यम्, तेन आत्मत्वे साध्ये समवायेन हेतोर्ज्ञानस्य विषयतयाऽधिकरणे घटादौ वर्तमानस्य साध्याभावस्यातथात्वेऽपि न क्षतिः ।**

## ❀ जागदीशी ❀

यत्समानाधिकरणा इत्यत्र हेत्वधिकरणत्वं विशिनष्टि—येनेत्यादिना । तदधिकरणमिति । तत्सम्बन्धीत्यर्थः । तेन तादात्म्येन हेत्वधिकरणाप्रसिद्धावपि तत्सम्बन्धेन सद्धेतौ नाव्याप्तिः । अतथात्वेऽपीति । प्रतियोग्यधिकरणवृत्तित्वविरहेऽपीत्यर्थः । यद्यपि प्रतियोगिसामानाधिकरण्यमवश्यं स्वविशिष्टहेत्वधिकरणावच्छेदेनाग्रे विवक्षणीयम्, तथा च हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणानुक्तौ कालिकसम्बन्धेन धूमस्याधिकरणे महाकाले वर्तमानस्य प्रलयान्यत्वाभावस्यापि यावदन्तर्गतत्वात् तद्विशिष्टहेत्वधिकरणाप्रसिद्ध्या वह्निमान् धूमादित्यादावपि अव्याप्तिः संभवति, तथापि स्वविशिष्टहेत्वधिकरणेत्यादेरुक्तावनुक्तौ च उभयथाऽपि अयमात्मा

ज्ञानादित्यत्राव्याप्तिः। वह्निमान् धूमादित्यत्र तु स्वविशिष्टेत्याद्युक्तावेव तथा, इत्याशयेन प्रसिद्धोदाहरणं परित्यक्तम्।

❀ दीपिका ❀

अथ अयमात्मा ज्ञानादित्यत्राव्याप्तिः, विषयतासम्बन्धेन ज्ञानाधिकरणे घटादौ वर्तमानस्याऽऽत्मत्वाभावस्यापि यावदन्तर्गततया तत्र च आत्मत्वरूपप्रतियोगिसामानाधिकरण्यविरहादित्यत आह दीधितौ—**येन सम्बन्धेनेति। तेनेति।** हेतुतावच्छेदकसम्बन्धेनैव हेत्वधिकरणत्वविवक्षणेनेत्यर्थः। तथा च हेतुतावच्छेदकीभूतसमवायसम्बन्धेन ज्ञानाधिकरणे आत्मनि आत्मत्वसामान्याभावस्यावर्तमानत्वेन न यावदन्तर्गतत्वमिति भावः।

ननु इदं वाच्यं प्रमेयादित्यत्र तादात्म्येन प्रमेयस्य हेतुत्वेऽव्याप्तिः, तादात्म्यसम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धेन हेत्वधिकरणाप्रसिद्धेरित्यत आह—**तत्सम्बन्धीत्यर्थ इति।** तेन = हेतुतावच्छेदकसम्बन्धेन हेतुसम्बन्धित्वविवक्षणेन। तत्सम्बन्धेन = तादात्म्यसम्बन्धेन। एवञ्च तादात्म्यसम्बन्धेन हेतुसम्बन्धित्वप्रसिद्ध्या नाव्याप्तिरिति भावः।

ननु हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणानुक्तौ वह्निमान् धूमादित्यादिप्रसिद्धस्थलेऽव्याप्तिसंभवे अयमात्मा ज्ञानादित्यप्रसिद्धस्थलानुसरणमसङ्गतम्, तथा हि—कालिकसम्बन्धेन धूमाधिकरणे महाकाले वर्तमानस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकस्य प्रलयत्वस्वरूपस्य प्रलयभेदाभावस्यापि यावदन्तर्गतत्वेन तादृशाभावविशिष्टहेत्वधिकरणाप्रसिद्धेरित्याशङ्कते—**यद्यपीति। अग्रे इति।** कालो गोमान् गोत्वादित्यादावतिव्याप्तिवारणाय कपिसंयोगाभाववान् मेयत्वादित्यादावस्य व्याप्तिवारणाय च स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यस्य निवेशयिष्यमाणत्वादिति। **तद्विशिष्टेति।** प्रलयान्यत्वाभावविशिष्टेत्यर्थः। समाधत्ते—**तथापीति।** तथा च स्वविशिष्टहेत्वधिकरणावच्छेदेनेत्यस्यानुक्तौ वह्निमान् धूमादित्यादौ प्रलयभेदस्य प्रलयभेदाभावस्य चैकत्र सत्त्वेन प्रतियोगिसामानाधिकरण्यसत्त्वान्नाव्याप्तिः, अयमात्मा ज्ञानादित्यत्र तु तदनुक्तावपि अव्याप्तिः आत्मत्वाभावस्य कुत्रापि प्रतियोगिसामानाधिकरण्यस्यासत्त्वादिति भावः।

❀ जागदीशी ❀

यत्तु महाकालस्यैव प्रलयान्यत्वाद्यभावविशिष्टहेत्वधिकरणत्वसंभवात्

स्वविशिष्टेत्याद्युक्तावपि वह्निमान् धूमादित्यत्र नाव्याप्तिः, महाकालस्य हेतुताघटकसंयोगसम्बन्धेन धूमाधिकरणत्वाभावेऽपि धूमसम्बन्धित्वानपायात्, तादात्म्येन हेतोः सङ्ग्रहार्थं हेतुतावच्छेदकसम्बन्धेन यो हेतुसम्बन्धी तद्वृत्तियावदभावानामेव निवेश्यत्वादिति मतम् । तत्तुच्छम् । संयोगमात्रेण धूमहेतोः प्रभामण्डलादौ वह्निव्यभिचारितया पर्वतादिनिरूपितसंयोगेनैव तस्य हेतुत्वात्, तादृशसंयोगेन च धूमस्याधिकरणे पर्वतादौ प्रलयत्वादिस्वरूपस्य प्रलयान्यत्वाद्यभावस्य वैशिष्ट्याप्रसिद्धेरावश्यकत्वात्, विभिन्नकालीनयोर्विषयतान्यसम्बन्धेनाऽधाराधेयभावविरहादिति दिक् ।

❀ दीपिका ❀

प्रसिद्धस्थलत्यागेऽन्यथा बीजमुपपादयतां मतं दूषयितुमुपन्यस्यति—**यत्त्विति** । अयमाशयः—स्वविशिष्टहेत्वधिकरणावच्छेदेनेत्युक्तावपि महाकाले प्रलयभेदाभावस्य धूमस्य च सत्त्वान्न स्वविशिष्टहेत्वधिकरणाप्रसिद्धिरिति हेतुसामानाधिकरण्यघटकहेत्वधिकरणत्वस्य हेतुतावच्छेदकसम्बन्धेनानुक्तावपि स्वविशिष्टहेत्वधिकरणीभूतमहाकालावच्छेदेन प्रतियोगिसामानाधिकरण्यसत्त्वाद् वह्निमान् धूमादित्यादौ नाव्याप्तिरित्यतः प्रसिद्धस्थलं त्यक्तमिति । ननु स्वविशिष्टहेत्वधिकरणेत्यत्रापि हेतुतावच्छेदकसम्बन्धेनैव हेत्वधिकरणं वक्तव्यम्, तथा च 'महाकालः संयोगेन धूमवानि' त्यप्रतीत्या कथं महाकालस्य संयोगेन धूमाधिकरणत्वमित्यत आह—**महाकालस्येति** । तथा च वाच्यं प्रमेयादित्यत्र तादात्म्येन हेतुकस्थले तेन सम्बन्धेन हेत्वधिकरणाप्रसिद्ध्या हेतुसम्बन्धित्वस्यैव निवेशनीयतया महाकालस्य संयोगेन धूमसम्बन्धित्वानपायादिति भावः ।

तन्मतं दूषयति—**तत्तुच्छमिति** । पर्वतादिनिरूपितेत्यस्य पर्वताद्यनुयोगिकेत्यर्थः । तादृशसंयोगेन = पर्वताद्यनुयोगिकसंयोगेन । ननु कालिकेन पर्वतादौ प्रलयभेदाभावस्य वैशिष्ट्यं सेत्स्यतीत्यत आह—**विभिन्नकालीनेति** । विभिन्नकालीनयोरपि विषयतासम्बन्धेनाऽधाराऽधेयभावाभ्युपगमादाह—**विषयतान्येति** ।

❀ दीधितिः ❀

**एवं दलान्तरेऽपि सम्बन्धभेदनिबन्धनो दोषः सम्बन्धैक्यविवक्षया निरसनीयः ।**

❀ जागदीशी ❀

ननु पृथिवीत्ववान् महाकालत्वात्, महाकालकपालान्यतरत्वाद्वा इत्यादावतिव्याप्तिः, साधनसमानाधिकरणस्य महाकालान्यत्वाद्यभावस्यापि हेत्वधिकरणमहाकालाद्यवच्छेदेन कालिकसम्बन्धेनैव प्रतियोगिसमानाधिकरणत्वादत आह—एवमिति । दलान्तरेऽपि = प्रतियोगिसामानाधिकरण्यदलेऽपीत्यर्थः । एकसम्बन्धेन व्यापकत्वमन्यसम्बन्धेन प्रतियोगिसामानाधिकरण्यमित्येवं सम्बन्धभेदनिबन्धनः प्रोक्ताऽतिव्याप्तिरूपो दोषः, साध्यव्यापकताघटकसम्बन्धेन सार्द्धं प्रतियोगिसामानाधिकरण्यघटकसम्बन्धस्य ऐक्यविवक्षया निरसनीय इत्यर्थः ।

❀ दीपिका ❀

अथ पृथिवीत्ववान् महाकालत्वादित्यत्र समवायेन साध्यतायामतिव्याप्तिः, महाकालभेदाभावस्यापि हेतुसमानाधिकरणतया यावदन्तर्गतत्वेन स्वविशिष्टहेत्वधिकरणीभूतमहाकालावच्छेदेन कालिकसम्बन्धेन प्रतियोगिनो महाकालभेदस्य तदभावस्य च सत्त्वेन प्रतियोगिसामानाधिकरण्यसत्त्वादित्याशङ्कते—**नन्विति** । न च धूमवान् वह्नेरित्यत्रैव धूमसामान्याभावस्यापि स्वविशिष्टहेत्वधिकरणीभूतायोगोलकावच्छेदेन कालिकसम्बन्धेन प्रतियोगिनो धूमस्य सामानाधिकरण्यमित्यतिव्याप्तिसम्भवे स्थलान्तरानुधावनमसङ्गतमिति वाच्यम्, जन्यमात्रस्य कालोपाधित्वानभ्युपगमेन तत्र दोषविरहात् । विरुद्धहेतावतिव्याप्तिं प्रदर्श्य व्यभिचारिहेतावतिव्याप्तिमाह—**महाकालकपालेति** । महाकालावच्छेदेनायं हेतुर्व्यभिचारी । केचित्तु—अव्यभिचरितत्वस्य व्याप्तित्वे केवलं व्यभिचारिण एवालक्ष्यत्वम्, विरुद्धं महाकालत्वं लक्ष्यमेवेति सपक्षवृत्तित्वघटितसाधारण्योपपादनायैव तत्त्यागः । वस्तुतो हेतौ साध्यसामानाधिकरण्यनिवेशेनैव विरुद्धवारणं सम्भवतीति तत्त्याग इत्याहुः ।

कालत्वहेतौ पार्थिवरूपाभावमादाय नातिव्याप्तिः, हेत्वधिकरणे महाप्रलये जन्यरूपादेरसत्त्वादतो **महापदम्** । केचित्तु यावदन्तर्गतस्य संयोगाद्यभावस्य हेतुसमानाधिकरणतया स्वविशिष्टहेत्वधिकरणीभूतमहाप्रलयावच्छेदेन स्वप्रतियोगिसंयोगसामानाधिकरण्यविरहान्नातिव्याप्तिरतो **महा**पदमित्याहुः । अन्ये तु साधनसमानाधिकरणस्य जन्याभावस्य स्वविशिष्टहेत्वधिकरणप्रलयावच्छेदेन स्वप्रतियोगिजन्यसमानाधिकरणत्वविरहान्नातिव्याप्तिरतो महापदमित्याहुः ।

❀ जागदीशी ❀

तथा च यत्सम्बन्धेन स्वावच्छिन्नानधिकरणसाध्यवन्निष्ठाभावप्रतियोगितावच्छेदकं यद्यत् तदन्यप्रतियोगिताकः, साध्यवन्निष्ठाभावीययत्सम्बन्धावच्छिन्नप्रतियोगितायाः समानाधिकरणावच्छेदकान्यप्रतियोगिताको वा योऽभावस्तस्य तादृशसम्बन्धेन प्रतियोगिनो यदधिकरणं तद्वृत्तित्वं विवक्षितमिति फलितार्थः। पृथिवीत्वाद्यभावप्रतियोगित्वन्तु न कालिकसम्बन्धेन पृथिवीत्वादिव्यापकतावच्छेदकम्, नित्यपृथिव्यां व्यभिचारात्, किन्तु समवायेनैव, तेन सम्बन्धेन च पृथिवीत्वाद्यभावस्य हेत्वधिकरणमहाकालावच्छेदेन प्रतियोगिसामानाधिकरण्याभावान्नोक्ताऽतिव्याप्तिरिति भावः।

❀ दीपिका ❀

प्रतियोगिवैयधिकरण्यघटितव्यापकत्वाभिप्रायेणाऽह—**यत्सम्बन्धेनेति**। तदघटितव्यापकत्वाभिप्रायेणाऽह—**साध्यवन्निष्ठाभावीयेति**। पृथिवीत्ववान् महाकालत्वादित्यत्रातिव्याप्तिं निराकरोति—**पृथिवीत्वाद्यभावेति**। एवञ्च नित्यपृथिव्यां पृथिवीत्वस्य सत्त्वेन कालिकेन महाकालभेदस्य चासत्त्वान्न महाकालभेदस्य कालिकेन पृथिवीत्वव्यापकत्वम्, अपि तु स्वरूपसम्बन्धेनैव, तथा च साध्यव्यापकताघटकस्वरूपसम्बन्धेन स्वप्रतियोगिमहाकालभेदाधिकरणे द्रव्यादौ महाकालत्वस्यावृत्तित्वान्न महाकालभेदाभावमादायातिव्याप्तिरिति भावः।

❀ जागदीशी ❀

यत्तु येन सम्बन्धेन व्यापकत्वं तेन सम्बन्धेन प्रतियोगिसामानाधिकरण्योक्तावपि नित्यज्ञानं नित्यसर्वविषयकत्वादित्यत्रातिव्याप्तिः, साधनसमानाधिकरणस्य इच्छाभिन्नत्वाद्यभावस्य साध्यव्यापकताघटकविषयितासम्बन्धेन हेत्वधिकरणावच्छेदेन प्रतियोगिसमानाधिकरणत्वादिति। न च येन येन सम्बन्धेन व्यापकत्वं तेन तेन सम्बन्धेन प्रतियोगिसामानाधिकरण्यविवक्षणान्न दोषः, तथा सति यावत्पदवैयर्थ्यापत्तेः। विशेषणतासम्बन्धसामान्येनेव साध्यादिसन्निरूपितविशेषणतयापि वाच्यत्वादेः साध्यव्यापकतया घटत्वादिना वाच्यत्वाद्यभावस्यैव तादृशसम्बन्धेन हेत्वधिकरणावच्छेद्यप्रतियोगिसामानाधिकरण्यविरहाद् धूमवान् वह्नेरित्यादिव्यभिचारिणि अतिव्याप्त्यसम्भवादिति।

## ❀ दीपिका ❀

साध्यव्यापकताघटकसम्बन्धेन प्रतियोगिसामानाधिकरण्योक्तावप्यतिव्याप्तिं वदतां मतं दूषयितुमुपन्यस्यति—**यद्वेति** । अयमाशयः--ईश्वरज्ञानस्य सर्वविषयकतया साध्याधिकरणे नित्यज्ञाने विषयितासम्बन्धेनेच्छाभेदस्यापि सत्त्वेन साध्यव्यापकतया हेत्वधिकरणीभूतेश्वरेच्छायां वर्तमानस्य इच्छाभेदाभावस्य साध्यव्यापकतावच्छेदकीभूतविषयित्वसम्बन्धेन हेत्वधिकरणावच्छेदेनेच्छाभेदात्मकस्य प्रतियोगिनस्तदभावस्य च सत्त्वेन प्रतियोगिसामानाधिकरण्येन भवत्यतिव्याप्तिरिति । अथात्र साध्ये नित्यपदं व्यर्थमिति चेन्न, ज्ञानत्वाधिकरणे इच्छाभेदाविषयकजन्यज्ञाने इच्छाभेदस्य विषयितासम्बन्धेनासत्त्वेन ज्ञानत्वात्मकसाध्यव्यापकत्वाभावाद् विषयितायाः व्यापकताघटकसंसर्गत्वानुपपत्त्या चातिव्याप्तिविरहात्, नित्यपदोपादाने तु ईश्वरज्ञानस्य सर्वविषयकतया न व्यापकत्वहानिरिति । न चैवमपि हेत्वंशे नित्यपदं व्यर्थमिति वाच्यम्, इच्छाभेदाभावस्य विषयितासम्बन्धेन साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वेऽपि स्वविशिष्टे इच्छाभेदाविषयकयत्किञ्चिज्जन्यज्ञाने हेत्वधिकरणीभूते इच्छाभेदात्मकप्रतियोगिनो विषयितासम्बन्धेनासत्त्वेन नातिव्याप्तिरित्यतो हेतौ नित्यपदम् ।

अतिव्याप्तिमुद्धर्तुं शङ्कते—**न चेति** । अस्य न दोष इत्यनेनान्वयः । तथा च स्वरूपसम्बन्धेनापि इच्छाभेदस्य साध्यव्यापकतया तेन सम्बन्धेनेच्छाभेदाधिकरणे नित्यज्ञाने इच्छाभेदाभावस्यासत्त्वेन नातिव्याप्तिरिति भावः । समाधत्ते—**तथा सतीति** । येन येन सम्बन्धेनेत्यादिनिवेशे इत्यर्थः । यावत्पदवैयर्थ्यमेवोपपादयति—**विशेषणतासम्बन्धेति** । साध्यादिमन्निरूपितेत्यस्य महानसाद्यनुयोगिकेत्यर्थः । तादृशसम्बन्धेन = महानसाद्यनुयोगिकस्वरूपसम्बन्धेन । तथा च हेत्वधिकरणेऽयोगोलके महानसाद्यनुयोगिकस्वरूपसम्बन्धेन प्रतियोगिनो वाच्यत्वस्यासत्त्वेन घटत्वेन वाच्यत्वाभावमादाय धूमवान् वह्नेरित्यादावतिव्याप्त्यसम्भवाद् यावत्पदवैयर्थ्यं दुर्वारमेवेति समाधातुराशयः ।

## ❀ जागदीशी ❀

**तन्मन्दम् । विषयितासम्बन्धेन व्यापकताया एवासत्त्वात्, विषयितासम्बन्धेन स्वावच्छिन्नाधिकरणत्वाप्रसिद्ध्या स्वावच्छिन्नानधिकरणसाध्यवन्निष्ठाभाव इत्यादिव्यापकतायास्तेन सम्बन्धेनासम्भवात् । न च तेन सम्बन्धेन स्वावच्छिन्नासम्बन्धित्वमेव व्यापकतायां निवेशनीयम् उक्तातिप्रसङ्गभयेन तस्यानिवेश्यत्वात् । न च तत्सम्बन्धाव-**

च्छिन्नायाः साध्यवन्निष्ठाभावीयप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकधर्मवत्त्वलक्षणं व्यापकत्वं विषयितासम्बन्धेन सुलभम्, साध्यवति नित्यज्ञाने वस्तुमात्रस्यैव विषयितासम्बन्धेन सम्बन्धित्वेऽपि नित्यज्ञानान्यत्वविशिष्टघटादेर्विषयितासम्बन्धेनाभावस्य तत्र सत्त्वे बाधकाभावादिति वाच्यम्, विषयिताया वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः ।

❀ दीपिका ❀

यत्तुमतं दूषयति—**तन्मन्दमिति** । विषयिताया वृत्त्यनियामकतया तेन सम्बन्धेन स्वावच्छिन्नाधिकरणताया अप्रसिद्धया तेन सम्बन्धेनेच्छाभेदस्य न साध्यव्यापकत्वमिति भावः । शङ्कते—**न चेति** । अस्य निवेशनीयमित्यनेन सम्बन्धः । तथा च विषयितासम्बन्धेन स्वावच्छिन्नसम्बन्धित्वस्य प्रसिद्धतया तत्सम्बन्धेन तस्य साध्यव्यापकत्वं सम्भवति । निराकुरुते—**उक्तातीति** । तथा चातिप्रसङ्गनिरासाय कस्यचिन्निवेशनीयत्वेऽपि असम्बन्धित्वपदं निवेश्यातिप्रसङ्गदानस्यायुक्तत्वमिति भावः । प्रतियोगिवैयधिकरण्याघटितव्यापकत्वमाशङ्कते—**न चेति** । तथा च साध्याधिकरणे नित्यज्ञाने विषयितया सकलवस्तुनः सत्त्वेऽपि विषयित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्य नित्यज्ञानान्यत्वविशिष्टघटाद्यभावस्य तत्र सत्त्वेन तदीयप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकत्वस्येच्छाभेदाभावीयप्रतियोगितायां सत्त्वादिच्छाभेदाभावमादायातिव्याप्तिरिति भावः । अतिव्याप्तिं निराकरोति—**विषयिताया इति** । तथा च विषयित्वसम्बन्धावच्छिन्नप्रतियोगिताकनित्यज्ञानान्यत्वविशिष्टघटाद्यभावस्यापि नित्यज्ञानेऽप्रसिद्धया न तेन सम्बन्धेनेच्छाभेदस्य साध्यव्यापकत्वमिति भावः ।

❀ जागदीशी ❀

यदपि—मनस्त्ववान् परमाणुत्वादित्यत्रातिव्याप्तिः, परमाणुत्वसमानाधिकरणस्य मनस्त्वाद्यभावस्यापि साध्यव्यापकताघटकदिक्कृतविशेषणतया सर्वत्रैव परमाणौ प्रतियोगिसमानाधिकरणत्वादिति । तदपि तुच्छम् । नित्यानामव्यावर्तकत्वाज्जन्यानामेव मूर्तानां दिगुपाधितया परमाणौ दिक्कृतविशेषणतया कस्याप्यसत्त्वात् तेनापि सम्बन्धेन साध्यव्यापकत्वविरहात्, अन्यथा वस्तुमात्रस्यैव कालोपाधित्वसम्भवात्तदपि जन्यमात्रस्य न स्यात्, अत एव प्रलयदशायां दिग्देशविभागो नास्तीत्यपि सिद्धान्तः सङ्गच्छते, अन्यथा परमाणूनां सत्त्वात्तदानीमपि दिग्विभागप्रसङ्गादिति दिक् ।

❁ दीपिका ❁

साध्यव्यापकताघटकसम्बन्धेन प्रतियोगिसामानाधिकरण्याङ्गीकारेऽतिव्याप्ति-दोषमुद्भावयतामन्येषां मतं दूषयितुमुपन्यस्यति—**यदपीति। परमाणुत्वेति।** न चात्र परमपदं व्यर्थम्, अणुत्वसमानाधिकरणमनस्त्वाभावस्य दैशिकविशेषणतया हेत्वधिकरणावच्छेदेन मनस्त्वरूपप्रतियोगिसामानाधिकरण्येनातिव्याप्तिसम्भवा-दिति वाच्यम्; यावदन्तर्गतस्य 'द्व्यणुकासमानकालीनतद्व्यक्तिर्नास्ती'त्याकारकाभावस्य हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहेणातिव्याप्त्यसम्भवादिति। तेनापि = दिक्कृतविशेषणतयाऽपि। तथा च मनस्त्वाधिकरणे मनसि परमाणौ दैशिकविशेषणतया मनस्त्वस्यासत्त्वेन न दैशिकविशेषणतायाः साध्यव्यापकता-घटकसंसर्गत्वमिति भावः। अन्यथा = नित्यानामपि दिगुपाधित्वस्वीकारे। तदपि = कालोपाधित्वमपि। तथा च नित्येषु कालिकायोगादिति सिद्धान्तो व्याकुप्येतेति भावः। अत एव = नित्यानां दिगुपाधित्वाभावादेव। अत्रायं निष्कर्षः—दिश एकत्वेन प्राच्यादिव्यवहार उपाधिमन्तरा न सम्भवति, उपाधयस्तु जन्यमूर्तानि एवेति महा-प्रलये तेषामभावान्न प्राच्यादिव्यवहारः, परमाणूनां दिगुपाधित्वस्वीकारे तु परमाणुरूप-दिगुपाधीनां सत्त्वेन महाप्रलयेऽपि प्राच्यादिव्यवहार आपद्येतेति।

❁ जागदीशी ❁

**यदि च स्पन्दो महाकालत्वादित्यादावतिव्याप्तिः, साधनसमानाधि-करणस्य महाकालान्यत्वाद्यभावस्यापि साध्यव्यापकताघटककालिकसम्ब-न्धेन महाकाले प्रतियोगिसमानाधिकरणत्वात्। न चायं स्पन्द इत्याकारक-यत्किञ्चिद्बोधव्यक्तेर्विषयतासम्बन्धेनैव स्पन्दत्वव्यापकत्वात् यावदन्तर्गतस्य तदभावस्यैव व्यापकताघटकविषयतासम्बन्धेन हेत्वधिकरणे महाकाले प्रतियोगिसमानाधिकरणत्वाभावान्नातिव्याप्तिः, न हि तादृशबोधव्यक्तेः कालिकसम्बन्धेनापि स्पन्दत्वव्यापकत्वम्, भाविभूतस्पन्देषु व्यभिचारा-दिति वाच्यम्; विषयताया ज्ञानसमानकालीनतया तद्बुद्धिव्यक्त्यभाव-दशायामेव स्पन्दत्ववति विषयतासम्बन्धेन तद्बुद्धिव्यक्त्यभावसत्त्वाद् विषयतासम्बन्धेनायं स्पन्द इत्याकारकजन्यबुद्धेः साध्यव्यापकत्वासंभवात्।**

❁ दीपिका ❁

अथ स्पन्दो महाकालत्वादित्यादौ महाकालभेदस्य कालिकसम्बन्धेन स्पन्दे सत्त्वेन साध्यव्यापकतया महाकालत्वसमानाधिकरणस्य महाकालभेदाभावस्य हेत्व-

धिकरणीभूतमहाकालावच्छेदेन व्यापकताघटककालिकसम्बन्धेन महाकालभेदात्मकप्रतियोगिसमानाधिकरणत्वादतिव्याप्तिरित्याशङ्कते—**यदि चेति।** अस्य विभाव्यते इत्यनेनान्वयः। न च कालत्वमात्रस्यापि हेतुतायामतिव्याप्तिसम्भवे हेतौ महत्त्वविशेषणं व्यर्थमिति वाच्यम्—हेत्वधिकरणीभूतमहाकाले वर्तमानस्य प्रलयप्रागभावाभावस्य यावदन्तर्गतस्य हेत्वधिकरणप्रलयावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहेणातिव्याप्त्यनवकाशात्, तद्दाने तु महाकाले प्रतियोगिसामानाधिकरण्यसत्त्वात् भवत्यतिव्याप्तिः। अतिव्याप्तिमुद्धर्तुं शङ्कते—**न चेति।** तथा च व्यापकतावच्छेदकविषयतासम्बन्धेन तादृशबोधव्यक्तेर्महाकालेऽसत्त्वेन न तादृशबोधव्यक्त्यभावस्य प्रतियोगिसामानाधिकरण्यमिति भावः। न च तादृशबोधव्यक्तेः कालिकसम्बन्धेनापि स्पन्दे सत्त्वेन व्यापकताघटककालिकसम्बन्धेन प्रतियोगिनस्तादृशबोधव्यक्तेस्तदभावस्य च महाकाले सत्त्वेनातिव्याप्तितादवस्थ्यमिति वाच्यम्—विभिन्नकालीनयोर्विषयताऽन्यसम्बन्धेनाऽऽधाराधेयभावस्यानभ्युपगमेन भाविभूतस्पन्देषु तादृशबोधव्यक्तेरसत्त्वेन साध्यव्यापकत्वासंभवादित्याह—**नहीति।** तादृशबोधव्यक्तेः साध्यव्यापकत्वन्निराकरोति—**विषयताया** इति।

❋ जागदीशी ❋

किञ्च व्यधिकरणधर्मावच्छिन्नाभावस्यासत्त्वेऽपि व्यधिकरणसम्बन्धावच्छिन्नाभावमादायैव केवलान्वयिसाध्यकस्थले लक्षणसमन्वयात् प्रतियोग्यवृत्तिश्चेति मूलस्य दूषकत्वानुपपत्तिः। न च साध्यवन्निष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकधर्मवत्त्वरूपव्यापकतायां व्यधिकरणधर्मावच्छिन्नाभावमादायासम्भववारकस्य सामानाधिकरण्येनेत्यस्य व्यर्थतायामेव तन्मूलग्रन्थस्य तात्पर्यमिति वाच्यम्—सामान्यधर्मेण विशेषाभावमादाय व्यापकत्वाप्रसिद्धिवारणायैव सामानाधिकरण्यदलस्य व्यापकतायामवश्यं निवेशादित्यादिकं विभाव्यते, तदा सम्बन्धैक्यविवक्षयेतिग्रन्थस्य साध्यव्यापकत्वस्य तदवच्छेदकप्रतियोगित्वस्य प्रतियोगिसामानाधिकरण्यघटकीभूतप्रतियोग्यधिकरणत्वस्य चैकसम्बन्धावच्छिन्नत्वविवक्षयेत्यर्थः। तथा च स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नसाध्यव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः स्वप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिसमानाधिकरणा इत्यर्थलाभाद् यावदन्तर्गतस्य समवायादिसम्बन्धेन नित्यज्ञानत्व-मनस्त्व-स्पन्दत्वाभावस्य स्वप्रतियोगिताव-

च्छेदकीभूतसमवायादिसम्बन्धेन यावद्धेत्वधिकरणे प्रतियोग्यसमानाधिकरणत्वात्—नित्यज्ञानं नित्यसविषयकत्वात्, मनस्त्ववान् परमाणुत्वात्, स्पन्दो महाकालत्वादित्यादौ कुत्रापि नातिव्याप्तिः।

## ❀ दीपिका ❀

ननु कालिकेन स्पन्दत्वमव्याप्यवृत्ति, स्पन्दत्ववति स्पन्दरूपकाले स्पन्दत्वानधिकरणदेशावच्छेदेन कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्पन्दत्वाभावस्य स्वरूपेण सत्त्वात्, अत एवोक्तं दीधितिकृता—'देशे कालस्य काले च देशस्यावच्छेदकत्वादि'ति। तथा च स्पन्दत्वाधिकरणे स्पन्दरूपकाले स्पन्दत्वानधिकरणदेशावच्छेदेन कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्पन्दत्वाभावस्य सत्त्वेन कालिकसम्बन्धस्य न साध्यव्यापकतावच्छेदकत्वमिति स्पन्दो महाकालत्वादित्यत्र स्पन्दत्वाभावमादाय ग्रन्थकृतोऽतिव्याप्तिदानमसङ्गतमित्यत आह—**किञ्चेति**। तथा च हेतुसमानाधिकरणस्य समवायेन वाच्यत्वाभावस्य लक्षणघटकतया साध्यव्यापकताघटकस्वरूपसम्बन्धेन प्रतियोगिसामानाधिकरण्यसत्त्वाल्लक्षणसमन्वयसम्भवे 'प्रतियोग्यवृत्तिश्चे'ति दीधितिग्रन्थासङ्गतिः स्पष्टैवेति भावः। **न चेति**। अयमाशयः—प्रतियोगिवैयधिकरण्याघटिते 'साध्यवन्निष्ठाभावीयप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकधर्मवत्त्वमि'ति व्यापकत्वलक्षणे सामानाधिकरण्येनेत्यस्यानुपादानेऽसम्भवः स्यात्, साध्यवति पर्वतादौ वर्तमानोऽभावः स्वरूपसम्बन्धेन वह्न्यभावीयप्रतियोगित्वेन घटो नास्तीत्याकारकः तत्प्रतियोगितावच्छेदकत्वस्यैव तादृशवह्न्यभावीयप्रतियोगितायां सत्त्वेन साध्यव्यापकतावच्छेदकप्रतियोगिताकाभावस्यैवाप्रसिद्धेरिति तन्निरासाय सामानाधिकरण्येनेति पदमुपात्तम्, एवञ्च व्यधिकरणधर्मावच्छिन्नाभावानङ्गीकर्तृदीधितिकारमते तादृशाभावस्य ग्रहीतुमशक्यत्वेन सामानाधिकरण्येनेत्यस्य व्यर्थतायामेव 'प्रतियोग्यवृत्तिश्चे'ति दीधितिग्रन्थस्य तात्पर्यम्, तथा च साध्यव्यापकताघटकसम्बन्धेन प्रतियोगिसामानाधिकरण्योक्तौ न दोष इति। सामानाधिकरण्येनेति पदस्य प्रयोजनं दर्शयति—**सामान्यधर्मेणेति**। तथा च साध्यवति पर्वतादौ वर्तमानस्य वह्न्यभावीयप्रतियोगित्वेन महानसीयवह्न्यभावस्य प्रतियोगितावच्छेदकत्वस्यैव तत्र सत्त्वेन सामान्यरूपेण विशेषाभावमादायासम्भववारणाय सामानाधिकरण्येनेति पदस्याऽवश्यकत्वे केवलान्वयिस्थले समवायेन वाच्यत्वाभावमादायैव लक्षणसमन्वयसंभवे 'प्रतियोग्यवृत्तिश्चेति' दीधितिग्रन्थासङ्गतिर्दुर्वारैवेति भावः। अन्यत् सुगमम्।

## ❀ जागदीशी ❀

न चैवं वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः, व्यधिकरणधर्मावच्छिन्न-वाच्यत्वाद्यभावस्यैव तत्र घटकतया तस्य च प्रतियोगितावच्छेदकसम्बन्ध-सत्त्वे मानाभावादिति वाच्यम्—स्वरूपसम्बन्धेन घटत्वादिना वाच्यत्वं नास्तीत्यादिप्रतीत्यनुरोधेन तादृशाभावस्यापि प्रतियोगितावच्छेदकसम्ब-न्धस्वीकारात्, अन्यथा भूतलं संयोगेन पटत्वावच्छिन्नघटवदित्येवं निर्णयसत्त्वेऽपि भूतले संयोगेन पटत्वेन घटो नास्तीतिप्रत्ययापत्तेः। न चैवमपसिद्धान्तः, व्यधिकरणधर्मावच्छिन्नोऽपि चेदभावः प्रामाणिक-स्तदा सर्वैः सम्बन्धैस्तत्प्रतियोगिता अवच्छिद्यन्तामिति ग्रन्थकृतैव सामा-न्याभावे वक्ष्यमाणत्वात् ।

## ❀ दीपिका ❀

**न चैवमिति** । एवम् = व्यापकतायां प्रतियोगिसामानाधिकरण्यघटकाधिकरण-तायाञ्च स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे । **तस्य चेति** । अत्र तत्पदेन व्यधिकरणधर्मावच्छिन्नाभावस्य ग्रहणम् । षष्ठ्यर्थो निरूपितत्वम्, तथा च व्यधिकरणधर्मावच्छिन्नाभावनिरूपितप्रतियोगितावच्छेदकसम्बन्धस्य सत्त्वे मानाभावा-दित्यर्थः । इदमत्राकूतम्—पर्वतादौ समवायेन वह्न्यभावनिश्चयदशायामपि संयोगेन वह्निमत्त्वज्ञानं जायत इति तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारतानिरूपिततन्निष्ठ-विशेष्यताशालिज्ञानत्वावच्छिन्नं प्रति तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिता-काभावनिष्ठप्रकारतानिरूपिततन्निष्ठविशेष्यताशालिनिश्चयः प्रतिबन्धक इति प्रतिबध्य-प्रतिबन्धकभावानुरोधेनान्यत्र प्रतियोगितायाः सम्बन्धावच्छिन्नत्वमस्तु, व्यधि-करणधर्मावच्छिन्नाभावनिश्चयस्य प्रतिबध्यत्वप्रतिबन्धकत्वयोरभावेन तदीयप्रति-योगितायाः सम्बन्धावच्छिन्नत्वे न किञ्चिन्मानमिति । व्यधिकरणधर्मावच्छिन्ना-भावीयप्रतियोगितायाः सम्बन्धावच्छिन्नत्वं साधयति—**स्वरूपसम्बन्धेनेति** । पदार्थसिद्धौ प्रतीतिरेव नियामिकेति भावः । तादृशाभावस्य = व्यधिकरणधर्मावच्छि-न्नाभावस्य । यदि च प्रतियोगितावच्छेदकसम्बन्धनियामकः प्रतिबध्यप्रतिबन्धक-भाव एवेति दुराग्रहस्तदप्याह—**अन्यथेति** । व्यधिकरणधर्मावच्छिन्नाभावीयप्रति-योगितायाः सम्बन्धावच्छिन्नत्वानङ्गीकारे इत्यर्थः । तथा च संयोगेन पटत्वेन घटो नास्तीत्याकारकबुद्धिं प्रति संयोगेन पटत्वावच्छिन्नघटवदित्याकारकनिश्चयः प्रतिबन्धक

इति प्रतिबध्यप्रतिबन्धकभावस्यात्रापि सत्त्वेन व्यधिकरणधर्मावच्छिन्नाभावीयप्रतियोगिताया अपि सम्बन्धावच्छिन्नत्वमवश्यमभ्युपगन्तव्यमिति भावः।

ननु व्यधिकरणधर्मावच्छिन्नाभावीयप्रतियोगितायाः सम्बन्धावच्छिन्नत्वाभ्युपगमे सिद्धान्तविरोध इत्याह-**न चैवमिति**।सिद्धान्तविरोधं परिहरति-**व्यधिकरणेति**।

## ❀ जागदीशी ❀

**केचित्तु**-सम्बन्धैक्यविवक्षयेत्यस्य साध्यवत्त्वं साध्यव्यापकत्वं प्रतियोगित्वं प्रतियोगिसामानाधिकरण्यघटकीभूतप्रतियोग्यधिकरणत्वञ्चैकेन साध्यतावच्छेदकसम्बन्धेन विवक्षणीयमित्यर्थः।तथा च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यव्यापकतावच्छेदकीभूततादृशसम्बन्धावच्छिन्नप्रतियोगिताका यावन्तोऽभावाः साध्यतावच्छेदकसम्बन्धेन प्रतियोगिसमानाधिकरणा इत्यर्थलाभान्न कुत्राप्यतिव्याप्तिः।

न च प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविवक्षणं व्यर्थमिति वाच्यम्—तदनुक्तौ वाच्यत्वादिभेदमादायैव केवलान्वय्यादौ लक्षणगमनसम्भवेऽपि प्रतियोग्यवृत्तिश्चेतिग्रन्थावतारानुपपत्तेः। नचैवमपि सर्वत्र वाच्यत्वाद्यभावस्येत्यादिग्रन्थविरोधः, वाच्यत्वादेः संयोगादिसम्बन्धेन धूमाद्यव्यापकत्वादिति वाच्यम्—वाच्यत्वाद्यभावस्येत्यादिपदसत्त्वाद्यत्र स्वरूपसम्बन्धेन साध्यता तत्र वाच्यत्वाद्यभावमादाय, संयोगादिसम्बन्धेन साध्यतायाञ्च द्रव्याद्यभावमादायातिव्याप्तिपरतयैव तत्सङ्गतेरित्याहुः।

## ❀ दीपिका ❀

सम्बन्धैक्यविवक्षयेति ग्रन्थमन्यथा व्याचक्षाणानां मतं दूषयितुमुपन्यस्यति—**केचित्त्विति**। एतन्मते अनुगमप्रकारः—साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताविशिष्टप्रतियोगिताकाभावकालीनहेतुतावच्छेदकवत्त्वम्, वै० च स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वावच्छेदकसम्बन्धावच्छिन्नसाध्याधिकरणवृत्त्यभावीयप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन। व्यापकता च स्वविशिष्टहेत्वधिकरणताव्यापकत्वसम्बन्धेन। अधिकरणताव्यापकत्वञ्च-स्वनिष्ठाऽधेयतानिरूपकत्व-स्वनिरूपितप्रतियोगिताविशिष्टनिरूपकताकाधिकरणत्वोभयसम्बन्धेन। प्रतियोगिता वै० च स्वसामानाधिकरण्य-स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेनेति। तथा च नित्यज्ञानं नित्यसविषयकत्वादित्यादौ समवायेन नित्यज्ञानत्वाद्यभावस्य समवायेन नित्यज्ञानत्वा-

धिकरणे नित्यज्ञाने वृत्तित्वविरहान्नातिव्याप्तिरिति भावः । **तदनुक्ताविति** । तथा च प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानुक्तौ केवलान्वयिस्थले वाच्यत्वादिभेदमादाय लक्षणसमन्वयसम्भवे प्रतियोग्यवृत्तिश्चेतिग्रन्थासङ्गतिः स्यात्, तदुपादाने तु वाच्यत्वादिभेदस्य साध्यतावच्छेदकीभूतस्वरूपसम्बन्धावच्छिन्नत्वविरहेण न लक्षणघटकत्वम्, अपि तु घटत्वेन वाच्यत्वाद्यभावस्यैवेति न तद्ग्रन्थासङ्गतिरिति भावः । न च व्यभिचाराद्यवारकतया प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविशेषणस्य वैयर्थ्यं दुर्वारमेवेति वाच्यम्—प्रतियोगितायां तदनुक्तौ साध्यतावच्छेदकसम्बन्धेन साध्यवत्त्वम्, तेन व्यापकत्वम्, व्यापकतावच्छेदकसम्बन्धेन प्रतियोगित्वम्, प्रतियोगितावच्छेदकसम्बन्धेन च प्रतियोगिसामानाधिकरण्यमित्यस्यैव प्रवेशनीयतया समवायेन वह्न्यभावमादाय तत्प्रतियोगितावच्छेदकीभूतसमवायसम्बन्धेन हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहाद् वह्निमान् धूमादित्यादावव्याप्तिप्रसङ्गादिति ।

वस्तुतस्तु निरुक्तानुगमे प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानुपादाने संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाद्यभावस्यापि तथात्वेन तस्य प्रतियोगिसामानाधिकरण्यविरहेणासंभवः स्यात् । न चैवमसम्भवदानस्यैवोचितत्वेन ग्रन्थासङ्गतिदानं सन्दर्भविरुद्धमिति वाच्यम्—साध्यतावच्छेदकसम्बन्धेन साध्यव्यापकत्वम्, तेनैव च सम्बन्धेन प्रतियोगित्वमित्याद्यननुगतरूपेण निवेशकल्पे प्रतियोगितायां तदप्रवेशे ग्रन्थासङ्गतिरित्यतोऽनुगतरूपेणैव तन्निवेश इति ग्रन्थकर्तुराशयादिति ।

व्यापकतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे ग्रन्थासङ्गतिमाशङ्कते—**न चैवमपीति** । ग्रन्थविरोधमुपपादयति—**वाच्यत्वादेरिति** । तथा च संयोगेन धूमाधिकरणे वर्तमानो यः संयोगेन वाच्यत्वाद्यभावस्तत्प्रतियोगित्वस्यैव वाच्यत्वादौ सत्त्वेन घटत्वेन वाच्यत्वाभावस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वाभावेन लक्षणाघटकतया तादृशाभावमादाय धूमवान् वह्नेरित्यादावतिव्याप्तिप्रतिपादनपरस्य तद्ग्रन्थस्य विरोधः स्पष्ट एवेति भावः । ग्रन्थविरोधं परिहरति-**वाच्यत्वाद्यभावेति** ।

## ❀ जागदीशी ❀

तन्मन्दम् । मनोऽन्यत्वाद्यभावस्येत्याद्युक्तग्रन्थविरोधात्, भूतत्वमूर्तत्वोभयस्य समवायेन साध्यतायां मनोऽन्यत्वस्य तत्सम्बन्धेन साध्यव्यापकत्वासम्भवात्, वृत्त्यनियामकसम्बन्धेनाधिकरणत्वस्य प्रतियोगि-

त्वस्य चाप्रसिद्ध्या तेन सम्बन्धेन साध्यतायां धनी चैत्रत्वादित्यादि-सद्धेतावव्याप्तेः, तद्रूपान्यरूपं रूपत्वादित्यादावतिव्याप्तेश्च, साध्यताघटक-समवायसम्बन्धेन साध्यव्यापकतावच्छेदकप्रतियोगिताकानां व्यधिकरण-धर्मावच्छिन्नरूपत्वाद्यभावानां सर्वेषामेव स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यादिति ।

❀ दीपिका ❀

तन्मतं दूषयति—**तन्मन्दमिति** । ग्रन्थविरोधमुपपादयति—**भूतत्वमूर्तत्वोभयस्येति** । तथा च साध्यतावच्छेदकसमवायसम्बन्धेन साध्याधिकरणे पृथिव्यादिचतुष्टये समवायेन मनोऽन्यत्वस्यावर्तमानत्वेन मनोऽन्यत्वाभावस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वाभावेन मनोऽन्यत्वाभावमादायातिव्याप्तिवारण-परकग्रन्थविरोधः स्पष्ट एवेति भावः ।

ननु भूतत्वमनोऽन्यत्वाद्यभावेत्यत्रादिपदेन स्पर्शाभावमादायातिव्याप्तिवारणं संभवति, समवायेम स्पर्शस्य भूतत्वमूर्तत्वोभयात्मकसाध्यव्यापकत्वादित्यत आह—**वृत्त्यनियामकेति** । तेन सम्बन्धेन = वृत्त्यनियामकेन स्वामित्वादिसम्बन्धेन । वृत्त्यनियामकसम्बन्धेन साध्यतायामव्याप्तिमुक्त्वाऽतिव्याप्तिमाह—**तद्रूपान्येति** । अतिव्याप्तिमुपपादयति—**साध्यताघटकेति** । तथा च हेतुसमानाधिकरणस्य घटत्वेन रूपत्वाभावस्य स्वविशिष्टहेत्वधिकरणरूपावच्छेदेन रूपत्वसामानाधिकरण्य-सत्त्वेन तद्रूपान्यरूपत्वाभावस्यापि प्रतियोगिनो रूपत्वस्याधिकरणे तद्रूपे सत्त्वेनातिव्याप्तिः । अस्मन्मते तु स्वरूपेण तद्रूपभेदस्यापि साध्यव्यापकतया यावदन्तर्गतस्य तद्रूपभेदाभावस्य स्वविशिष्टहेत्वधिकरणीभूततद्रूपावच्छेदेन प्रतियोगिनस्तद्रूपभेदस्या-सत्त्वेन प्रतियोगिसामानाधिकरण्यविरहान्नातिव्याप्तिरिति भावः ।

नव्यास्तु दलान्तरेऽपीत्यादिग्रन्थमन्यथा व्याचक्षते, तथा हि—हेतुसमानाधिकरणा इत्यत्र हेत्वधिकरणत्वस्य हेतुतावच्छेदकसम्बन्धेन विवक्षणे अयमात्मा ज्ञानादित्यत्राव्याप्तिरेव, घटत्वेन आत्मत्वाभावस्यापि स्वविशिष्टहेतोर्विषयतयाऽधिकरणे घटादौ व्यापकताघटकसमवायसम्बन्धेन प्रतियोग्यसामानाधिकरण्यादित्यत आह—**दलान्तरेऽपीति** । पश्चादुक्तहेत्वधिकरणावच्छेदेनेत्यत्र हेत्वधिकरणदलेऽपीत्यर्थः । सम्बन्धभेदनिबन्धनो दोषः = एकसम्बन्धेन हेत्वधिकरणवृत्त्यात्मत्वाद्यभावस्यान्यसम्बन्धेन हेत्वधिकरणावच्छेदेन प्रतियोग्यसामानाधिकरण्यप्रयुक्ताव्याप्तिरूपो दोषः । **सम्बन्धैक्यविघटयेति** । हेतुसमानाधिकरणा इत्यत्र हेत्वधिकरणत्वं येन सम्बन्धेन, हेत्वधि-

करणावच्छेदेनेत्यत्रापि हेत्वधिकरणत्वं तेन सम्बन्धेनेति विवक्षयेत्यर्थः । इत्थञ्च दलान्तरपदमपि साधु सङ्गच्छत इति भावः । यद्वा—ननु धूमवान् वह्नेरित्यत्रातिव्याप्तिः, धूमत्वादिना धूमाभावस्यापि हेत्वधिकरणीभूतायोगोलकावच्छेदेन स्वप्रतियोगित्वस्य कालिकसम्बन्धेनाधिकरणीभूतवह्नयादेः समानाधिकरणत्वसत्त्वादित्यत आह—**दलान्तरेऽपीति ।** प्रतियोगिसामानाधिकरण्यमित्यत्र प्रतियोगित्वाश्रयदलेऽपीत्यर्थः । सम्बन्धभेदनिबन्धनो दोषः=प्रकृतसाध्यव्यापकत्वस्य एकसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्य अन्यसम्बन्धेन प्रतियोगिताश्रयीभूतवह्नयादेः सामानाधिकरण्यनिबन्धनो दोषः, सम्बन्धैक्यविवक्षया = यत्सम्बन्धेन व्यापकताया अवच्छेदकत्वं प्रतियोगित्वस्य, प्रतियोगिसामानाधिकरण्यमित्यत्रापि तेन सम्बन्धेन प्रतियोगित्वाश्रयत्वविवक्षया प्रतियोगिपदस्य स्वशक्त्या बोधितयेत्यर्थ इति प्राहुः ।

❀ जागदीशी ❀

यत्तु विशेषणताविशेषेण साध्यव्यापकत्वं तेनैव च प्रतियोगित्वं प्रतियोगिसामानाधिकरण्यं च सम्बन्धैक्यविवक्षयेत्यस्यार्थमाहुः । तदपि गवाद्यभावस्यात्मत्वाद्यभावस्येत्यादिग्रन्थस्यालग्नतापत्तेरुपेक्षितमिति संक्षेपः ।

❀ दीपिका ❀

सम्बन्धैक्यविवक्षयेत्यस्यैवान्यथाव्याख्यानपरं यत्तुमतं दूषयितुमुपन्यस्यति—**यत्त्विति ।** विशेषणताविशेषेण=दैशिकविशेषणतया, तेनैव=दैशिकविशेषणतयैव, तथा च वह्निमान् धूमादित्यादौ साध्यवत्त्वप्रकारकप्रमाविषयत्वाभावमादाय लक्षणसमन्वयो विधेय इति । तन्मतं दूषयति—**तदपीति ।** एवञ्च गवाद्यभावप्रतियोगिनो गवादेः स्वरूपसम्बन्धेन साध्यव्यापकत्वाभावेन तद्ग्रन्थासङ्गतिरिति भावः ।

❀ दीधितिः ❀

**रूपादिसामान्याभावे साध्ये पृथिवीत्वादिकं सद्धेतुरेव, प्रलये परमाणौ उत्पत्तिकाले चावयविनि तत्सत्त्वात् ।**

❀ जागदीशी ❀

नन्वत्र सम्बन्धैक्याविवक्षायां रूपसामान्याभाववान् पृथिवीत्वात्, जन्यपृथिवीत्वाद्वेत्यादिविरुद्धहेतावतिव्याप्तिः, साधनसमानाधिकरणस्य पृथिव्यन्यत्वाद्यभावस्यापि हेत्वधिकरणपृथिव्यवच्छेदेन जन्यपृथिव्यवच्छेदेन वा दिक्कृतविशेषणतया प्रतियोगिसमानाधिकरणत्वात्, मूर्तमात्रस्य दिगुपाधित्वोपगमात् । न च तस्यालक्ष्यत्वे नीरूपमित्याकारकयत्किंचित्प्रमाण्यत्तेः

विषयतासम्बन्धेन साध्यव्यापकत्वात्, यावदन्तर्गतस्य च तदभावस्यैव हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहान्नातिव्याप्तिः, तादृशबुद्धिव्यक्तेभिन्नकालीनतया भाविभूतघटादौ केनापि सम्बन्धेनासत्त्वादिति वाच्यम्—विषयताया ज्ञानसमानकालीनतया तादृशबुद्ध्यभावदशायामेव रूपशून्ये गगनादौ विषयतासम्बन्धेन तद्बुद्ध्यभावप्रतियोगित्वावच्छिन्नाभावसत्त्वात्, तादृशज्ञानव्यक्त्यभावस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वाभावात्।

## ❀ दीपिका ❀

'रूपादिसामान्याभावे साध्ये' इति दीधितिग्रन्थावताराय शङ्कते—**नन्वत्रेति**। **विरुद्धेति**। तथा च प्राचीनमते साध्यव्यापकीभूताभावप्रतियोगित्वरूपस्य विरुद्धत्वस्य रूपसामान्याभावसाध्यकस्थले पृथिवीत्वहेतौ सत्त्वमिति। अतिव्याप्तिमुपपादयति—**साधनेति**। तथा च दिक्कृतविशेषणतासम्बन्धेन पृथिवीभेदस्य साध्यव्यापकतया पृथिवीभेदाभावस्य हेतुसमानाधिकरणत्वेन यावदन्तर्गततया तस्य दिक्कृतविशेषणतासम्बन्धेन पृथिवीभेदात्मकप्रतियोग्यधिकरणे पृथिव्यां जन्यपृथिव्यां वा पृथिवीभेदाभावस्य पृथिवीत्वरूपस्य सत्त्वाद्भवत्यतिव्याप्तिरिति भावः। **मूर्तमात्रेति**। ननु मूर्तमात्रस्य दिगुपाधित्वे धूमवान् वह्नेरित्यत्रैवातिव्याप्तिसंभवे स्थलान्तरानुधावनमसङ्गतम्, दिक्कृतविशेषणतया हेत्वधिकरणेऽयोगोलके धूमस्य सत्त्वादिति चेन्न—विभिन्नकालीनयोर्विषयत्वाद्यन्यसम्बन्धेनाधाराऽधेयभावानभ्युपगमेन धूमासमानकालीनायोगोलके केनापि सम्बन्धेन धूमस्याविद्यमानत्वात्।

रूपसामान्याभाववान् पृथिवीत्वादित्यत्रातिव्याप्तिमुद्धर्तुं शङ्कते—**न चेति**। तादृशबुद्धिव्यक्तेः = नीरूपमित्याकारकयत्किञ्चित्प्रमाव्यक्तेः। तादृशबुद्धिव्यक्तेः साध्यव्यापकत्वं निराकुरुते—**विषयताया इति**। तथा च तादृशप्रमाकाले साध्यवति गगनादौ विषयतासम्बन्धेन तादृशबुद्धिव्यक्तेः सत्त्वेऽपि तादृशबुद्धिविरहकाले विषयतासम्बन्धेनापि गगनादौ तादृशबुद्धिव्यक्तेरसत्त्वेन तादृशबुद्धिव्यक्त्यभावस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वाभावेन न यावदन्तर्गतत्वम्, अपि तु पृथिवीभेदाभावस्यैवेति पूर्वोक्तातिव्याप्तिर्दुरुद्धरैवेति।

## ❀ जागदीशी ❀

स्वावच्छिन्नानधिकरणसाध्यवन्निष्ठेत्यादिव्यापकतायास्तद्बुद्धिव्यक्तौ सत्त्वेऽपि प्रतियोगिवैयधिकरण्याघटितव्यापकत्वगर्भनिरुक्तेरुक्तस्थलेऽति-

व्याप्तेरावश्यकत्वादिति भ्रमं निराकुरुते—रूपादिसामान्येत्यादिना । पृथिवीत्वादिकमिति । नित्यपृथिव्या दिगुपाधित्वे मानाभावाद् आदिपदम्, तेन जन्यपृथिवीत्वाद्युपग्रहः । सद्धेतुत्वप्रतिकूलं विरोधं निरस्यति—प्रलये इति । महाप्रलये इत्यर्थः । खण्डप्रलये तु पार्थिवपरमाणौ रूपमस्त्येव, अन्यथोत्तरसर्गे पार्थिवद्व्यणुकस्य रूपोत्पत्त्यर्थं परमाणौ पाकान्तरकल्पनाऽऽपत्तेरिति प्राञ्चः ।

❀ दीपिका ❀

ननु स्वावच्छिन्नानधिकरणसाध्याधिकरणवृत्त्यभावीयप्रतियोगितानवच्छेदकत्वरूपव्यापकतावच्छेदकत्वं तादृशबुद्धिव्यक्त्यभावीयप्रतियोगितायां वर्तते, तादृशबुद्धिदशायां गगनादौ तादृशबुद्धिव्यक्त्यभावीयप्रतियोगित्वावच्छिन्नायास्तादृशबुद्धिव्यक्तेरधिकरणतायाः सत्त्वेन स्वपदेन तादृशबुद्धिव्यक्त्यभावीयप्रतियोगित्वस्य धर्तुमशक्यतया घटाद्यभावीयप्रतियोगित्वावच्छिन्नानधिकरणसाध्याधिकरणे गगनादौ वर्तमानस्य 'घटाद्यभावीयप्रतियोगितावान्नास्ती'त्याकारकाभावस्य प्रतियोगितानवच्छेदकत्वस्य तादृशबुद्धिव्यक्त्यभावीयप्रतियोगितायां सत्त्वादित्यत आह—**स्वावच्छिन्नेति** । तथा च साध्याधिकरणवृत्त्यभावीयप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकधर्मवत्त्वरूपव्यापकत्वघटितलक्षणस्यातिव्याप्तिरिति भावः । केचित्तु–नवीनमतानुसरणेऽप्यवतरणं सम्भवति, तथा हि—ननु पृथिव्यां रूपसामान्याभावसत्त्वेऽपि रूपसामान्याभावे साध्ये पृथिवीत्वं विरुद्धम्, पृथिवीत्वे रूपाऽत्मकसाध्याभावव्याप्यत्वस्य यत्समानाधिकरणा इत्यादिरूपस्य सत्त्वात्, साध्याभावस्य च रूपसामान्याभावात्मकप्रतियोगिसामानाधिकरण्यादत आह—**रूपादीति । सद्धेतुरेवेति** । प्रतियोगिव्यधिकरणसाध्याभावव्याप्यत्वमेव विरुद्धत्वम्, अन्यथा कपिसंयोगी एतद्वृक्षत्वादित्यादौ विरुद्धलक्षणस्यातिव्याप्त्यापत्तेरिति भाव इत्याहुः । अन्ये तु—पृथिव्यामुत्पत्तिकालावच्छेदेन रूपसामान्याभावसत्त्वेऽपि तत्कालावच्छेदेन प्रतियोगिव्यधिकरणसाध्याभाववति तत्कालावच्छेदेन वृत्तित्वरूपकालिकव्यभिचारितयाऽसद्धेतौ तत्साध्यकपृथिवीत्वेऽतिव्याप्तिरत आह—**रूपादीति । सद्धेतुरेवेति** । दैशिकव्यभिचारित्वाभावादेवेत्यर्थः । दैशिकव्याप्तेर्दैशिकव्यभिचारिण एवालक्ष्यतया कालिकव्यभिचारिणोऽपि सद्धेतुत्वेन लक्ष्यतया तत्र लक्षणगमनं न दोषाय, कालिकव्याप्तिस्तु 'यद्यत्कालावच्छेदेन हेतुसमानाधिकरणा यावन्तः साध्यव्यापकतावच्छेदकप्रतियोगिताकाभावास्तत्तत्कालावच्छेदेन प्रतियोगिसमानाधिकरणास्तत्त्वमि'त्या-

कारकतया स्थितिकालमन्तर्भाव्य हेतुसमानाधिकरणस्य साध्याभावस्य लक्षणघटकतया तत्काले प्रतियोगिसामानाधिकरण्याभावान्नातिव्याप्तिरित्याशय इत्याहुः। अपरे तु-सम्बन्धैक्याविवक्षणे रूपसामान्याभाववान् पृथिवीत्वादित्यादावतिव्याप्तिः, साध्याभावपृथिव्यन्यत्वाद्यभावानां स्वविशिष्टहेत्वधिकरणावच्छेदेन कालिकदैशिकविशेषणताभ्यां प्रतियोगिसामानाधिकरण्यादतः सम्बन्धैक्यं विवक्षणीयमिति कस्यचिन्मतं निराकरोति—**रूपादीतीत्याहुः**। ननु रूपसामान्याभावसाध्यकपृथिवीत्वहेतोः सद्धेतुत्वप्रतिपादकः 'प्रलये परमाणौ'''तत्सत्त्वादि'ति दीधितिग्रन्थोऽसङ्गतः, सर्गाद्यकाले पार्थिवद्व्यणुकरूपोत्पत्तये परमाणौ रूपान्तरोत्पादकल्पने गौरवेण खण्डप्रलये पार्थिवपरमाणौ पूर्वसर्गोत्पन्नस्यैव रूपस्य स्वीकारादित्यत आह—**महाप्रलये इत्यर्थ इति**। अन्यथा = खण्डप्रलये रूपास्वीकारे।

## ❀ जागदीशी ❀

**प्रलये इत्यस्य पाकेन रूपादेः प्रलयदशायामित्यर्थः, तेन महाप्रलयानभ्युपगमेऽपि न क्षतिः। उत्पत्तिकाले चेत्यत्र चकारेण निरुक्तप्रलयस्याप्यनुकर्षणाद् अवयविन्यपि पाकदशायां तत्सत्त्वान्न ग्रन्थन्यूनतेत्यपरे। ननु विरोधविरहेऽपि घटाद्यवच्छेदेन व्यभिचारात् कुतः सद्धेतुत्वमत आह—**उत्पत्तीति। **यद्यपि पाकेन श्यामादिरूपनाशकालेऽप्यवयविनि तस्य सत्त्वं; तथापि पीलुपाकवादिमते तदसम्भवात्, अपच्यमानावयव्यनुरोधाच्चोत्पत्तिकालमात्रानुसरणम्।** तत्सत्त्वादिति। **रूपादिसामान्याभावसत्त्वादित्यर्थः।**

## ❀ दीपिका ❀

ननु मानाभावेन महाप्रलयो नाभ्युपेयते, किञ्च पाकेन पूर्वरूपनाशोत्पत्तिकाले रूपान्तरस्याप्यभावेन तदानीं रूपसामान्याभावस्य सम्भवेन प्रलयपर्यन्तानुधावनमपि व्यर्थम्। न च श्यामरूपनाशोत्पत्तिदशायां रक्तरूपोत्पत्तेः सत्त्वात् कथं तत्र रूपसामान्याभाव इति वाच्यम्, पूर्वरूपस्य रूपान्तरोत्पत्तिं प्रति प्रतिबन्धकतया तदानीं रक्तरूपोत्पत्त्यसम्भवादित्यत आह—**प्रलये इत्यस्येति। इत्यर्थ इति।** तथा च प्रकृष्ट उत्पद्यमानो लयो रूपादिध्वंसो यत्रेति विग्रहेण प्रलयपदस्य पाकेन पूर्वरूपनाशोत्पत्तिदशायामित्यर्थ इति भावः। तेन = प्रलयपदस्य पाकेन पूर्वरूपनाशदशायामित्यर्थस्वीकारेण। निरुक्तप्रलयस्य = पाकेन पूर्वरूपनाशस्य। तत्सत्त्वात् = रूपसामान्याभावसत्त्वात्। ग्रन्थन्यूनता = तदकथनज्ञानज्ञाप्यतदज्ञानवत्पुरुषोच्चरित-

ता । **अपरे इति** । अत्रास्वरसबीजन्तु पूर्वोक्तदिशा प्रलयशब्देनैव तादृशार्थलाभसम्भव इति बोध्यम् ।

ननु रूपस्य रूपप्रतिबन्धकत्वं पूर्वमुक्तमिति घटादौ पाकेन श्यामादिनाशकाले कस्यचन रूपस्यासत्त्वेन तदानीं रूपसामान्याभावस्य सत्त्वेनोत्पत्तिकालमात्रानुसरणं दीधितिकृतोऽसङ्गतमित्याह—**यद्यपीति** । पाकेन = रूपादिपरावृत्तिजनकतेजःसंयोगेन । तस्य = रूपसामान्याभावस्य । पीलुपाकवादिमताभिप्रायेण समाधत्ते—**तथापीति** । तदसम्भवात् = घटादौ रूपसामान्याभावासम्भवात् । **अनुरोधाच्चे**-त्यत्र चो हेतौ, तथा च यतोऽवयवी अपच्यमानः अतस्तत्र रूपसामान्याभावो न सम्भवतीति भावः । पीलुपाकवादिवैशेषिकाणामयमाशयः—रूपादिनाशं प्रति साक्षात्परम्परासाधारणसर्वावयवावच्छेदेन तेजःसंयोगस्य हेतुतयाऽवयविनाऽवष्टब्धेषु अवयवेषु पाको न संभवतीति वह्निसंयोगेनावयविषु विनष्टेषु स्वतन्त्रेषु परमाणुषु पाकः, पुनश्च पक्वपरमाणुसंयोगाद् द्व्यणुकादिक्रमेण पुनर्महावयविपर्य्यन्तमुत्पत्तिः, तेजसामतिशयवेगवशात् पूर्वव्यूहनाशो झटिति व्यूहान्तरोत्पत्तिश्चेति न संस्थानभेदप्रतीतिः । न च विद्यमानेऽपि घटादौ सर्वावयवावच्छेदेन तेजःसंयोगः कुतो नोत्पद्यत इति वाच्यम्, तथा सत्यारम्भकसंयोगावच्छेदेनावयविनि तेजःसंयोगोत्पादकाले तदवच्छेदेनावयवेष्वपि नोदनाभिघातयोरन्यतरस्योत्पादनियमेनावयवेषु विभागजनकक्रियोत्पादेनाऽरम्भकसंयोगनाशादवयविविनाशाऽपत्तेः । न चावयवेषु तेजोऽभिघातानन्तरं पञ्चमक्षणे एवावयविनो विनाशसंभवेन तत्पूर्वमवयविनि रूपनाशोत्पादाभ्युपगमे बाधकाभाव इति वाच्यम्—तत्र पूर्वावयविनाशावयव्यन्तरोत्पादयोरावश्यकत्वात् पूर्वावयविनि रूपादिपरावृत्तिजनकविजातीयतेजःसंयोगस्य मानाभावेनाकल्पनात्, अवयविरूपनाशे आश्रयनाशस्य हेतुत्वात् पाकजन्यत्वस्य कार्यतावच्छेदककोटिप्रवेशे गौरवेणावयविविनाशं विनाऽवयविरूपनाशासंभवात्, अवयविनीलादौ अवयवनीलादेरसमवायिकारणतया व्यभिचाराऽपत्त्या पाकेनावयविनि नीलाद्युत्पादासम्भवाच्चेति ।

❀ दीधितिः ❀

**न च प्रतियोगिवद् ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वम्, मानाभावात् ।**

❀ जागदीशी ❀

विरोधित्वम् = एकदा एकदेशावृत्तित्वम् । मानाभावादिति । **प्रलयाद्य**-

वच्छेदेन परमाण्वादौ रूपादिसामान्याभावे तु योग्यसन्निकर्षाभावात् प्रत्यक्षासंभवेऽप्यनुमानादिकमेव मानमस्तीत्याशयः।

यत्तु—घटादौ उत्पत्तिकालावच्छेदेन रूपसामान्याभावस्य प्रत्यक्षमेव सम्भवति, तदानीं चक्षुःसंयुक्तविशेषणतायास्तत्रासत्त्वेऽपि द्रव्यसमवेतवृत्त्यभावप्रत्यक्षहेतोश्चक्षुःसंयुक्तसमवेतविशेषणतायाः सत्त्वेन सन्निकर्षसम्भवादिति। तत्तुच्छम्। चक्षुःसंयुक्तसमवेतद्व्यणुकविशेषणतया रूपाद्यभावचाक्षुषाऽपत्त्या चक्षुःसंयुक्तयोग्यसमवेतविशेषणताया एवाभावग्राहकत्वेन द्रव्यान्यद्रव्यसमवेतवृत्त्यभावचाक्षुषत्वस्यैव तज्जन्यतावच्छेदकत्वोपगमात्, अन्यथा त्रसरेणुवृत्त्यभावचाक्षुषे व्यभिचारापत्तेरिति भावः।

## ❀ दीपिका ❀

ननु सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावस्यात्यन्ताभावात्मकतया रूपप्रागभाववति उत्पत्तिकालावच्छेदेनावयविनि, रूपध्वंसवति प्रलयावच्छिन्नपरमाणौ च कथं रूपसामान्याभावसंभवः, ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वादित्याशङ्कां निरसितुं दीधितौ आह—**न चेति**। नहीत्यर्थः। तस्य विरोधित्वमित्यनेनान्वयः। तथा च—यथा प्रतियोगिनः एककालावच्छिन्नैकदेशावृत्तित्वरूपा स्वात्यन्ताभावेन विरोधिता तथा ध्वंसप्रागभावयोरत्यन्ताभावेन विरोधिता नेति फलितार्थः। विरोधित्वाभावे हेतुमाह—दीधितौ-**मानाभावादिति**। तयोरत्यन्ताभावविरोधित्वे इत्यादिः।

ननु त्वन्मते प्रलयाद्यवच्छिन्नपरमाण्वादौ रूपसामान्याभावसत्त्वे किं मानमित्यत आह—**प्रलयाद्यवच्छेदेनेति**। तथा च योग्यसन्निकर्षघटितायाः प्रत्यक्षसामग्र्याः प्रलयेऽभावेन प्रत्यक्षप्रमाणासद्भावेऽपि 'पार्थिवपरमाणुः प्रलये रूपसामान्याभाववान् तदा रूपसामान्याभावबाधाभाववत्त्वात्, यो यदा यद्बाधाभाववान् स तदा तद्वान्, इति सामान्यव्याप्तिमूलकमनुमानमेव तत्र प्रमाणमिति भावः।

उत्पत्तिकालावच्छेदेनावयविनि रूपाभावसत्त्वे प्रत्यक्षमेव प्रमाणमिति कस्यचिन्मतं दूषयितुमुपन्यस्यति—**यत्त्विति**। ननु घटादिवृत्त्यभावप्रत्यक्षे इन्द्रियसंयुक्तविशेषणतासन्निकर्षस्यैव हेतुत्वेन क्लृप्ततया उत्पत्तिकाले घटादेरिन्द्रियसंयुक्तत्वाभावात् कथं तदानीं रूपसामान्याभावस्य प्रत्यक्षमित्यत आह—**द्रव्यसमवेतेति**। तथा च घटीयरूपादिवृत्त्यभावप्रत्यक्षाय द्रव्यसमवेतवृत्त्यभावप्रत्यक्षे चक्षुःसंयुक्तसमवेतविशेषणतासन्निकर्षस्य हेतोरपि क्लृप्ततया उत्पत्तिकालावच्छिन्नघटादौ चक्षुःसंयुक्तकपालसम-

वेतघटविशेषणताऽऽत्मकसन्निकर्षस्य सत्त्वेन तदानीं घटे रूपसामान्याभावप्रत्यक्षे न किञ्चिद्बाधकमिति भावः।

तन्मतन्दूषयति—**तत्तुच्छमिति**। अयमाशयः—द्रव्यसमवेतवृत्त्यभावचाक्षुषं प्रति चक्षुःसंयुक्तसमवेतविशेषणताया हेतुत्वाभ्युपगमे चक्षुःसंयुक्तपरमाणुसमवेतद्व्यणुकवृत्त्यभावस्यापि चाक्षुषाऽपत्तिः, अतः चक्षुःसंयुक्तयोग्यसमवेतविशेषणताया एव हेतुत्वं कल्पनीयम्, एवमपि त्रसरेणुवृत्त्यभावचाक्षुषन्न स्यादिति तदीयकार्यतावच्छेदककोटौ द्रव्यान्यद्रव्यसमवेतत्वं निवेशनीयम्, तथा च घटादेः द्रव्यसमवेतत्वेऽपि द्रव्यान्यत्वाभावेन कार्यतावच्छेदकानाक्रान्ततया चक्षुःसंयुक्तयोग्यसमवेतविशेषणतया नोत्पत्तिकालावच्छेदेन घटादिवृत्तिरूपसामान्याभावस्य चाक्षुषप्रत्यक्षमिति।

अथात्र चक्षुःसंयुक्तपरमाणुसमवेतद्व्यणुकविशेषणतया द्व्यणुके रूपाभावचाक्षुषाऽपत्तिवारणाय कारणतावच्छेदककोटौ समवेतांशे योग्यत्वं निवेशनीयम्, तथा च त्रसरेणुवृत्त्यभावचाक्षुषत्वस्यापि तज्जन्यतावच्छेदकतया व्यतिरेकव्यभिचारविरहेण कार्यतावच्छेदककोटौ द्रव्यसमवेतांशे द्रव्यान्यत्वविशेषणं व्यर्थम्, एवञ्च घटादौ उत्पत्तिकालावच्छेदेन रूपसामान्याभावस्य चाक्षुषवारणं जगदीशस्य नोचितमिति चेन्न—द्रव्यसमवेतवृत्त्यभावचाक्षुषं प्रति चक्षुःसंयुक्तसमवेतविशेषणतायाः कारणत्वं वाच्यम्, अत्र कारणतावच्छेदककोटौ संयुक्तांशे समवेतांशे च योग्यत्वं निवेशनीयम्, तत्र—संयुक्तांशे योग्यत्वानिवेशे परमाणौ चक्षुःसंयोगदशायां द्रव्यत्वादौ रूपसामान्याभावस्य चाक्षुषाऽपत्तिः, चक्षुसंयुक्ते परमाणौ योग्यसमवेतस्य द्रव्यत्वस्य सत्त्वेन तत्र चक्षुःसंयुक्तयोग्यसमवेतविशेषणतासन्निकर्षस्य सत्त्वात्, अतः संयुक्तांशे योग्यत्वं निवेशनीयम्, तथा च परमाणौ योग्यत्वाभावान्न द्रव्यत्वादौ रूपसामान्याभावस्य तदानीं चाक्षुषापत्तिः। एवं समवेतांशे योग्यत्वानिवेशे घटनिष्ठगुरुत्ववृत्तिरूपाभावस्य चक्षुःसंयुक्तघटसमवेतगुरुत्वविशेषणतासन्निकर्षेण चाक्षुषाऽपत्तिरिति समवेतांशेऽपि योग्यत्वं निवेशनीयम्, तथा च त्रसरेणुवृत्त्यभावस्य चाक्षुषं न स्यात्, चक्षुःसंयुक्तस्य द्व्यणुकस्य योग्यत्वाभावादिति कार्यतावच्छेदककोटौ समवेतांशे द्रव्यान्यत्वस्यावश्यन्निवेशनीयतयोत्पत्तिकालावच्छिन्नघटादौ रूपसामान्याभावस्य चाक्षुषवारणं जगदीशस्य नासङ्गतमिति हृदयम्।

## ❀ जागदीशी ❀

वस्तुतः—स्वोत्पत्तेः पूर्वं चक्षुःसंयुक्तसमवेतस्य घटादेरसत्त्वात्तद्विशेषणताया अपि तदानीमसत्त्वादुक्तक्रमेणैव प्रत्यक्षासंभवादिति ध्येयम्।

❀ दीपिका ❀

तत्र द्रव्यान्यत्वाद्यनिवेशेऽपि न तस्य चाक्षुषमित्याह —**वस्तुत इति**। घटोत्पत्ति-पूर्वकाले सन्निकर्षसत्त्वे एवोत्पत्तिदशायां तत्र रूपसामान्याभावस्य चाक्षुषं सम्भवति, किन्तु घटोत्पत्तितः पूर्वकाले चक्षुःसंयुक्तकपालसमवेतघटादेरेवासत्त्वेन तद्विशेषणतायाः सुतरामभावेन नोत्पत्तिकालावच्छेदेन घटादौ रूपसामान्याभावस्य चाक्षुषमिति तत्त्वम्।

❀ दीधितिः ❀

**अत एवान्तरा श्यामे रक्तं रूपं नास्तीति प्रत्ययः। न चैष रक्तिमध्वंसाद्यवगाही, पूर्वापररक्तिमध्वंसप्रागभाववति रक्तेऽपि तथा प्रत्ययप्रसङ्गात्।**

❀ जागदीशी ❀

अत एवेति। ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वे मानाभावादेवे-त्यर्थः। रक्तिमध्वंसप्रागभावयोः सत्त्वमावेदयितुमन्तरापदम्। रक्तं रूप-मिति। न च 'गुणे शुक्लादयः पुंसी'त्यनुशासनाद्रक्तो नास्तीत्येव प्रयोगो युक्त इति वाच्यम्, वस्त्वन्तराविशेषणस्यैव शुक्लादिगुणबोधकपदस्य पुंस्त्वानुशासनात्। अत एव शुक्लं रूपमिति प्रयोगः समासवादे मणिकृ-तैव वक्ष्यते इति ध्येयम्।

एषः=रक्तं रूपं नास्तीति प्रत्ययः। पूर्वेत्यादि। पूर्वरक्तस्य ध्वंसवति उत्तररक्तस्य प्रागभाववति इदानीं रक्तेऽपीत्यर्थः। न च रक्ततादशायां वर्तमानस्यापि रक्तान्तरध्वंसादेस्तदानीं रक्तत्वावच्छिन्नप्रतियोगिताकत्ववि-रहान्न तादृशप्रत्ययस्तस्याव्याप्यवृत्तित्वादिति वाच्यम्, ध्वंसादिप्रतियोगि-त्वस्य सामान्यधर्मानवच्छेद्यत्वात्तत्तदनन्तध्वंसप्रागभावादिषु रक्तत्वाव-च्छिन्नप्रतियोगिताकत्वकल्पनामपेक्ष्य रक्तत्वावच्छिन्नात्यन्ताभावसम्ब-न्धस्यैवान्तराश्यामादिदशायां कल्पनाया लघुत्वाच्च।

❀ दीपिका ❀

ननु रूपध्वंसप्रागभावावच्छिन्नाधिकरणे रूपात्यन्ताभावस्य वृत्तौ प्रमाणाभावः, घटाद्युत्पत्तिक्षणे तद्द्वितीयक्षणे च घटप्रत्यक्षासंभवेन घटवृत्तितया रूपात्यन्ता-भावप्रत्यक्षस्य सुतरामसम्भवेन द्वितीयादिक्षणावच्छेदेन रूपस्यैव तत्रोत्पत्त्या तदभावीयविशेषणताया असत्त्वेन तृतीयक्षणादावपि तादृशप्रत्यक्षासम्भवात्, अनुभवे

विप्रतिपन्नस्य प्रत्यक्षप्रमाणमनुद्भाव्य निरसितुमशक्यत्वात्, अनुमानञ्चाप्रयोजकमिति ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वमर्थादायातमित्यत आह दीधितौ— **अत एवेति ।** ध्वंसाद्यवगाहीत्यत्राऽऽदिपदेन प्रागभावस्य परिग्रहः । तथा= रक्तं रूपं नास्तीति । वर्तमानरक्ततादशायां पूर्वरक्तिमध्वंसस्य भाविरक्तिमप्रागभावस्य च सत्त्वेन तादृशप्रतीतौ न किञ्चिद्बाधकमित्यभिप्रायः ।

ननु रक्तं रूपं नास्तीति प्रतीतिः रक्तत्वावच्छिन्नप्रतियोगिताकध्वंसादिकमेवावगाहते, वर्तमानरक्तिमदशायां रक्तान्तरध्वंसादेः रक्तत्वावच्छिन्नप्रतियोगिताकत्वाभावेन न तथा प्रतीतिरित्याशङ्कते—**न चेति ।** तस्य=रक्तत्वावच्छिन्नप्रतियोगिताकत्वस्य । **अव्याप्यवृत्तित्वादिति ।** यदा न रक्तं रूपं तत्कालावच्छेदेनैव ध्वंसे रक्तत्वावच्छिन्नप्रतियोगिताकत्वं स्वीक्रियत इति भावः । समाधत्ते—**ध्वंसादिप्रतियोगित्वस्येति ।** न च प्राचीनैः ध्वंसीयप्रतियोगितायां सामान्यधर्मावच्छिन्नत्वमभ्युपेयते अत एव सिद्धान्तलक्षणे हेतुसमानाधिकरणसंसर्गाभावं निवेश्य गोत्वावच्छिन्नप्रतियोगिताकगोध्वंसमादाय कालो गोमान् गोत्वादित्यादावतिव्याप्तिनिरासोऽपि सङ्गच्छत इत्यत आह—**तत्तदनन्तध्वंसेति । प्रागभावादीति ।** अत्राऽऽदिपदेन तद्ध्वंसप्रागभावसमनियतात्यन्ताभावादेः परिग्रहः । तथा च विनिगमनाविरहेणान्तरा श्यामतादशायां रक्तत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्यैव स्वीकारेण न ध्वंसादिना विरोध इति भावः ।

## ❀ जागदीशी ❀

न च यावन्ति रक्तरूपाणि तत्तद्व्यक्तित्वेतरधर्मानवच्छिन्नतत्तद्व्यक्तिनिष्ठप्रतियोगिताकाभावकूटैरेव रक्तं रूपं नास्तीति प्रत्ययः क्रियते, प्रकृते च विद्यमानरक्तरूपप्रतियोगिताकस्य तादृशाभावस्यासत्त्वान्न तथा प्रतीतिरिति वाच्यम्—

तथा सति अन्तरा श्यामे रक्तं रूपं नास्तीत्याकारकनिर्णयेऽपि तत्र रक्तं रूपमस्तीति प्रत्ययापत्तेः, विरोधिनः सामान्याभावस्यानिश्चयाद् विशेषाभावकूटनिश्चयस्याप्रतिबन्धकत्वात्, अन्यथा सामान्याभाव एव न सिद्ध्येदिति भावः ।

प्राञ्चस्तु—प्रतियोगितासम्बन्धेन रूपत्वमात्रावच्छिन्नप्रकारताकः संसर्गाभावविशेष्यकः प्रत्ययो रूपत्वावच्छिन्नप्रकारताकबुद्धेर्विरोधीति रूपत्वं प्रतियोगितावच्छेदकमेव नेति श्यामतादशायां रूपत्वावच्छिन्नाभाव एव

रूपं नास्तीति प्रतीतेर्न विषयः, किमनुरोधेन रूपध्वंसादिमति तदत्यन्ताभावसिद्धिरिति प्राहुः। तन्मन्दम्। अन्तरा श्यामे समवायेन रक्तं रूपं नास्तीति प्रतीतेः प्रामाण्यानुरोधादेव ध्वंसात्यन्ताभावयोर्न विरोधः, अन्यथा समवायावच्छिन्नप्रतियोगिताकध्वंसाद्यप्रसिद्ध्या तत्प्रतीतेर्भ्रमत्वाऽपत्तेरिति तु परमार्थः।

## ❀ दीपिका ❀

अथ विशेषाभावकूटस्यैव रक्तं रूपं नास्तीति प्रतीतिविषयतामभ्युपगम्य वर्तमानरक्तिमदशायां तादृशप्रतीतिविरहसम्भवेऽत्यन्ताभावसम्बन्धकल्पनं नोचितमित्याशङ्कते—**न च यावन्तीति**। समाधत्ते—**तथा सतीति**। तादृशप्रतीतेर्विशेषाभावकूटस्यैव विषयत्वे सतीत्यर्थः। अन्यथा = विशेषाभावकूटनिश्चयस्यापि प्रतिबन्धकत्वाङ्गीकारे।

ध्वंसप्रागभावयोरत्यन्ताभावेन समं विरोधं मन्वानानां प्राचां मतं दूषयितुमुपन्यस्यति—**प्राञ्चस्त्विति**। 'रूपवान्' इत्याकारकरूपत्वावच्छिन्नप्रकारताकबुद्धिं प्रति प्रतियोगितासम्बन्धेन रूपवान् संसर्गाभाव इत्याकारकप्रतियोगित्वसंसर्गावच्छिन्नरूपत्वावच्छिन्नप्रकारताकसंसर्गाभावविशेष्यताकनिश्चयः प्रतिबन्धक इति प्रतिबध्यप्रतिबन्धकभावस्वीकारेणान्तराश्यामतादशायां रक्तं रूपं नास्तीत्याकारकप्रत्ययस्यानापादानं सम्भवति, एवञ्च ध्वंसप्रागभावीयप्रतियोगितायाः सामान्यधर्मावच्छिन्नत्वास्वीकारेऽपि अन्तराश्यामे रक्तं रूपं नास्तीति प्रत्ययस्य न रक्तत्वावच्छिन्नप्रतियोगिताकाभावो विषयः, अपि तु रक्तध्वंसादिरेवेति ध्वंसप्रागभावाधिकरणेऽत्यन्ताभावसत्त्वे न किञ्चिन्मानमिति निष्कर्षः।

तन्मतं दूषयति—**तन्मन्दमिति**। दूषणप्रकारमाह—**अन्तरेति**। अन्यथा-ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वस्वीकारे।

अयमाशयः—प्राचीनैरपि ध्वंसप्रागभावीयप्रतियोगितायां सम्बन्धावच्छिन्नत्वन्नाभ्युपेयते, एवञ्च अन्तराश्यामे समवायेन रक्तं रूपं नास्तीति प्रतीतेः प्रमात्वरक्षायै प्राचीनमतेऽपि समवायसम्बन्धावच्छिन्नरक्तत्वावच्छिन्नप्रतियोगिताकात्यन्ताभाव एव विषयो वाच्यः, तादृशप्रतीतेः समवायसम्बन्धावच्छिन्नप्रतियोगिताकध्वंसादिविषयकत्वाङ्गीकारे तु भ्रमत्वाऽपत्तिर्दुर्वारा स्यादिति ध्वंसप्रागभावाधिकरणेऽत्यन्ताभावसत्त्वे न किञ्चिद्बाधकमिति।

❀ दीधितिः ❀

**तत्सामानाधिकरण्यञ्च स्वविशिष्टहेत्वधिकरणावच्छेदेन बोध्यम् ।**

❀ जागदीशी ❀

तत्सामानाधिकरण्यं चेति । प्रतियोगिसामानाधिकरण्यं चेत्यर्थः । स्वविशिष्टेति । स्वपदं लक्षणघटकसाध्यव्यापकतावच्छेदकप्रतियोगिताकतत्तदभावव्यक्तिपरम्, तथा च तत्तदभावाश्रयीभूतं यद्धेतुतावच्छेदकसम्बन्धेन हेतुतावच्छेदकावच्छिन्नाधिकरणं तदवच्छेदेन तत्तदभावे स्वस्वप्रतियोगिसामानाधिकरण्यं ग्राह्यमित्यर्थः । तेन हेतुसमानाधिकरणस्य घटत्वेन वह्न्यभावस्य कालिकादिसम्बन्धेन धूमाद्यधिकरणस्पन्दादौ व्यापकताघटकसंयोगादिसम्बन्धेन प्रतियोगिसामानाधिकरण्याभावेऽपि वह्निमान् धूमादित्यादौ नाव्याप्तिः, न वा द्रव्यं विशिष्टसत्त्वादित्यादौ घटत्वादिना द्रव्यत्वाद्यभावस्य हेत्वधिकरणावच्छेदेन प्रतियोग्यसमानाधिकरणत्वेऽपि क्षतिः, गुणानां विशिष्टसत्तात्वावच्छिन्नाऽनधिकरणत्वात् । यद्यपि व्याप्यवृत्तेरवच्छेदकत्वे मानाभावात् वाच्यत्वाद्यभावनिष्ठं यत्प्रतियोगिसामानाधिकरण्यं तदवच्छेदकत्वं न हेत्वधिकरणस्येत्यसम्भवः, कथितातिव्याप्तितादवस्थ्यञ्च ।

❀ दीपिका ❀

अथ कालो गोमान् गोत्वादित्यत्राऽतिव्याप्तिः, हेतुसमानाधिकरणः साध्यव्यापकतावच्छेदकप्रतियोगिताकोऽभावो गोत्वावच्छिन्नप्रतियोगिताकगवाद्यभावस्तस्य 'इदानीं चत्वरे गौर्नास्ती'ति प्रतीत्या गवाद्यनधिकरणचत्वरावच्छेदेन गवादिमति काले सत्त्वेन प्रतियोगिसमानाधिकरणत्वादित्यत आह दीधितौ—**तत्सामानाधिकरण्यं चेति** । स्वविशिष्टेत्यत्र स्वपदेन प्रतियोगिसामानाधिकरण्यपरामर्शेऽसङ्गतिरित्यत आह—**स्वपदमिति** । हेतुतावच्छेदकसम्बन्धेनेत्यस्योपादानफलमाह—**तेनेति** । हेतुतावच्छेदकसम्बन्धेनेत्यस्यानुपादाने तु वह्निमान् धूमादित्यत्राव्याप्तिः, कालिकसम्बन्धेन धूमत्वावच्छिन्नाधिकरणे स्पन्दे व्यापकतावच्छेदकसंयोगसम्बन्धेन प्रतियोगिनो वह्नेरसत्त्वेन घटत्वेन वह्न्यभावस्य हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहात्, तदुपादाने तु हेतुतावच्छेदकीभूतसंयोगसम्बन्धेन धूमाधिकरणपर्वताद्यवच्छेदेन संयोगेन वह्नेरपि सत्त्वाद् घटत्वेन वह्न्यभावस्य प्रतियोगिसामानाधिकरण्यं सूपपन्नम् । हेतुतावच्छेदकावच्छिन्नेत्यस्य प्रयोजनमाह—**न वेति** ।

अस्य क्षतिरित्यनेनान्वयः। क्षतिः = अव्याप्तिः। तथा च हेत्वधिकरणावच्छेदेने-त्येतावन्मात्रोक्तौ द्रव्यं विशिष्टसत्त्वादित्यत्राऽव्याप्तिः, विशिष्टसत्तायाः शुद्धसत्तानतिरेकितया हेत्वधिकरणीभूतगुणादौ द्रव्यत्वरूपप्रतियोगिनो व्यापकतावच्छेदकसम्बन्धेनाऽसत्त्वात्, हेतुतावच्छेदकावच्छिन्नाधिकरणत्वोपादाने तु हेतुतावच्छेदकीभूत-विशिष्टसत्तात्वावच्छिन्नाऽऽधेयतानिरूपिताऽधिकरणतायाः द्रव्ये एव सत्त्वेन तत्र च द्रव्यत्वस्य सत्त्वेन घटत्वेन द्रव्यत्वाभावे वर्तते प्रतियोगिसामानाधिकरण्यमिति नाऽव्याप्तिः। स्वविशिष्टहेत्वधिकरणावच्छेदेनेत्यस्य प्रवेशे दोषमाशङ्कते—**यद्यपीति**। अत्रायमाशयः-अवच्छेदकत्वं स्वरूपसम्बन्धविशेषः, तथा च घटत्वेन वाच्यत्वाभाव-निष्ठप्रतियोगिसामानाधिकरण्यस्य व्याप्यवृत्तितया व्याप्यवृत्तेश्चाऽवच्छेदकाऽनङ्गीकारेण स्वविशिष्टहेत्वधिकरणावच्छिन्नत्वाभाव इति। ननु हेतुसमानाधिकरणाभावनिष्ठस्य प्रतियोगिसामानाधिकरण्यस्याऽव्याप्यवृत्तित्वस्वीकारेण व्याप्यवृत्तेरपि प्रातीतिकावच्छेदकस्वीकारेण वा नाऽसम्भव इत्यत आह—**कथितातीति**। तथा च कालो गोमान् गोत्वादित्यादावतिव्याप्तितादवस्थ्यम्, सृष्टिकालरूपहेत्वधिकरणावच्छेदेन गवात्यन्ताभावस्य गोरूपप्रतियोगिसामानाधिकरण्यादिति भावः।

## ❀ जागदीशी ❀

**न च स्वविशिष्टहेत्वधिकरणताव्यापकप्रतियोग्यधिकरणतावद्वृत्तित्वं वाच्यम्, स्वविशिष्टपदस्य व्यर्थताऽऽपत्तेः। स्वप्रतियोग्यधिकरणीभूतस्वविशिष्टयावद्धेत्वधिकरणवृत्तित्वस्योक्तौ च द्रव्यं तद्घटत्वादित्यादावव्याप्तिर्यावद्धेत्वधिकरणाऽप्रसिद्धेः। तथापि यावन्तो हेतुमद्वृत्तिधर्माः हेत्वधिकरणत्वानि वा यावन्ति तत्प्रत्येकाश्रयीभूतप्रतियोग्यधिकरणवृत्तित्वस्य विवक्षितत्वान्न दोषः। एकमात्रवृत्तिहेतावपि तत्तत्क्षणवृत्तित्वविशिष्टस्य बहुतराधिकरणत्वस्य सत्त्वादिति ध्येयम्। न च (निरुक्त)प्रतियोग्यधिकरणवृत्तिस्वविशिष्टयावद्धेत्वधिकरणताकत्वमात्रं सम्यक्, हेतुसमानाधिकरणा इत्यस्य स्वविशिष्टपदस्य च व्यर्थत्वापातात्।**

## ❀ दीपिका ❀

निरुक्तातिव्याप्तिमुद्धर्तुमाशङ्कते—**न चेति**। तथा च स्वविशिष्टहेत्वधिकरणतायाः प्रलयेऽपि सत्त्वेन तत्र च गवादिरूपप्रतियोग्यधिकरणता नास्तीति सृष्टिकालवृत्तिगवाद्यधिकरणतायाः स्वविशिष्टहेत्वधिकरणताव्यापकत्वाभावेन नातिव्याप्तिरिति भावः। **स्वविशिष्टपदस्येति**। व्याप्यवृत्तेरवच्छेदकस्वीकारेऽस्वीकारे च

स्वविशिष्टपदवैयर्थ्यं दुर्वारमेव, स्वीकारपक्षे संयोगनिष्ठसंयोगाभावात्मकप्रतियोगि-सामानाधिकरण्यस्य हेत्वधिकरणावच्छेदेन सत्त्वेनाऽव्याप्त्यभावात्, अस्वीकारपक्षे च संयोगनिष्ठसंयोगाभावसामानाधिकरण्यस्य संयोगविशिष्टहेत्वधिकरणावच्छिन्नत्वा-भावेन स्वविशिष्टपददानेऽप्यव्याप्तितादवस्थ्यमिति भक्षितेऽपि लशुने न शान्तो व्याधिरिति न्यायापात इति ।

**स्वप्रतियोग्यधिकरणीभूतेति** । स्वप्रतियोग्यधिकरणीभूतानि स्वविशिष्ट-यावद्धेत्वधिकरणानि तन्निरूपितवृत्तित्वमित्यर्थः । स्वपदं तत्तदभावपरम्, एवञ्च घटत्वेन वह्न्याद्यभावस्य प्रतियोगी वह्निः तदधिकरणीभूतानि यावद्धेत्वधिकरणानि पर्वतादयः तन्निरूपितवृत्तित्वं घटत्वेन वह्न्याद्यभावे वर्तते इति लक्षणसमन्वयः । कालो गोमान् गोत्वादित्यत्र गवात्यन्ताभावस्य प्रतियोगी गौः तदधिकरणीभूतानि न यावद्धेत्वधिकरणानि, यावदन्तर्गते प्रलये गवादिरूपप्रतियोगिनोऽधिकरणत्वाभावा-दिति नातिव्याप्तिः । न वा स्वविशिष्टपदवैयर्थ्यम्, कपिसंयोगाभाववान् मेयत्वादित्यत्र संयोगाभावात्मकप्रतियोग्यधिकरणीभूतयावद्धेत्वधिकरणान्तर्गतगुणादिवृत्तित्वस्य संयो-गात्मकाभावेऽसत्त्वेनाव्याप्तिवारणाय तन्निवेशस्याऽऽवश्यकत्वात् । एतादृशेऽप्यर्थे दोष-माह—**द्रव्यं तद्घटत्वेति** । तथा च तद्घटत्वस्याधिकरणं तद्घट एवेति यावद्धेत्व-धिकरणस्याऽप्रसिद्धयाऽव्याप्तिरिति भावः ।

यद्यपीत्यादिनोक्तदोषान्निराकरोति—**तथापीति** । यावन्तो हेतुमद्वृत्तिधर्मा-स्तत्प्रत्येकाश्रयीभूतप्रतियोग्यधिकरणवृत्तित्वस्य विवक्षितत्वादित्यर्थः । तथा चाभावे हेत्वधिकरणवृत्तिधर्मकूटवत्त्वमिति पर्यवसितोऽर्थः । अभावे कूटवत्ता च—स्वाश्रयवृत्ति-त्वसम्बन्धेन, वृत्तिता च-स्वप्रतियोग्यधिकरणत्व-स्वाश्रयत्वोभयसम्बन्धेन । एवञ्च द्रव्यं तद्घटत्वादित्यादौ हेत्वधिकरणे तद्घटे वर्तमानानां घटत्वद्रव्यत्वादीनां यावत्त्वात् तत्प्रत्येकाश्रयीभूतप्रतियोग्यधिकरणे तद्घटे व्यधिकरणधर्मावच्छिन्नद्रव्यत्वाभावस्य सत्त्वा-न्नाऽव्याप्तिः । **हेत्वधिकरणत्वानि वेति** । अत्र कल्पे स्वविशिष्टहेत्वधिकरणे यः स न हेत्वधिकरणत्वयावदाश्रयः, अतः स्ववैशिष्ट्यं सामानाधिकरण्यसम्बन्धेन वक्तव्यम्, तथा च स्वविशिष्टहेत्वधिकरणत्वानि यावन्ति तदाश्रयीभूतप्रतियोग्यधिकरणनिरूपित-वृत्तित्वस्य कपिसंयोगाद्यात्मकाभावे सत्त्वेन कपिसंयोगाभाववान् मेयत्वादित्यादौ नाऽ-व्याप्तिः । द्रव्यं पूर्वक्षणवृत्ति तद्रूपादित्यत्र यावद्धेत्वधिकरणत्वाऽप्रसिद्धया वाकारोऽ-नास्थायामिति ।

द्रव्यं तद्घटत्वादित्यत्र पूर्वोक्तामव्याप्तिमुद्धरति—**एकमात्रवृत्तिहेतावपीति** । **न चेति** । अस्य सम्यगित्यनेनान्वयः । **निरुक्तेति** । प्रतियोगितावच्छेदकावच्छिन्ना-

धिकरणे वृत्तिः स्वविशिष्टयावद्धेत्वधिकरणता येषामभावानाम्, तस्य भाव इत्यर्थः। एतस्मिन्नर्थे दोषमुद्भावयति— **हेतुसमानेति**। चो हेतौ, यतः स्वविशिष्टपदं व्यर्थम् अतो हेतुसमानाधिकरणा इत्यंशोऽपि व्यर्थः। अयमाशयः-संयोगाभाववान् मेयत्वादित्यत्र कपिसंयोगाभावात्मकप्रतियोग्यधिकरणे द्रव्यादौ यावन्मेयत्वाधिकरणताया वर्तमानत्वेन लक्षणगमनसम्भवे स्वविशिष्टपदं व्यर्थम्। एवञ्च आत्मा ज्ञानादित्यत्राऽऽत्मत्वाभावप्रतियोग्यधिकरणे आत्मनि यावज्ज्ञानाधिकरणतायाः सत्त्वेनाऽव्याप्त्यभावात् हेतुसमानाधिकरणा इत्यंशोऽपि व्यर्थः स्यादिति।

❀ दीधितिः ❀

**तेन गोत्वजन्यद्रव्यत्वप्रलयावृत्तित्वादिना गवादेरभावस्य गवाद्यनधिकरणधर्म्यवच्छेदेन तद्वति काले महाकाले वा वृत्तावपि यदा गोत्वं तदा गौः, यत्र कालत्वं तत्र जन्यद्रव्यं प्रलयाऽवृत्तिर्वेत्यादौ नातिप्रसङ्गः; हेतुमति प्रलये तत्सामानाधिकरण्याभावात्।**

❀ जागदीशी ❀

प्रागुक्तमपि स्वविशिष्टपदं हेत्वधिकरणावच्छेदेनेत्यस्य प्रवेशे एवार्थवद्भविष्यतीत्यतः पश्चादुक्तस्यापि तस्य प्रथमं प्रयोजनमाह—तेनेति। गोत्वादिना गवाद्यभावस्य तद्वति काले वृत्तावपि यदा गोत्वं तदा गौरित्यादौ नातिप्रसङ्ग इति योजना।

इदमुपलक्षणम्—तत्तदयोगोलकान्यत्वाभावस्यापि काले प्रतियोगिसमानाधिकरणत्वाद् धूमवान् वह्नेरित्यत्रातिप्रसङ्गो द्रष्टव्यः। गवाद्यभावस्य प्रतियोग्यधिकरणे दैशिकसम्बन्धेनापि वृत्तित्वमुपपादयितुमाह—गवाद्यनधिकरणेति। इदानीं चत्वरे गौर्नास्तीति प्रत्ययात् गोमत्यपि काले कालिकसम्बन्धेन गवाद्यभावस्य गवाद्यनधिकरणचत्वराद्यवच्छेदेन वृत्तौ न विरोधः।

❀ दीपिका ❀

अथ स्वविशिष्टहेत्वधिकरणावच्छेदेनेत्यत्र स्वविशिष्टपदस्यैव प्राथम्येन तस्यैव प्रयोजनं प्रथमं वक्तव्यमिति तथाऽनुक्तिरनुचितेत्यत आह—**प्रागुक्तमपीति**। इदमत्राकूतम्-हेत्वधिकरणावच्छेदेनेत्यस्याऽप्रवेशे द्रव्यावच्छेदेन संयोगात्मकाभावे संयोगाभावात्मकप्रतियोगिसामानाधिकरण्यसत्त्वेन कपिसंयोगाभाववान् मेयत्वादित्यत्राऽव्याप्तिविरहात् स्वविशिष्टपदं सार्थकं भवति, हेत्वधिकरणावच्छेदेनेत्यस्य प्रवेशे तु मेयं

स्वाधिकरणगुणाद्यवच्छेदेन प्रतियोगिसामानाधिकरण्यविरहेण तत्राऽव्याप्तिवारणाय स्वविशिष्टपदं सार्थकं भवतीति ।

दीधितौ—**तेनेति** । हेत्वधिकरणावच्छेदेनेत्यस्य प्रवेशेनेत्यर्थः । अत्र-यदा, तदा इति कालिकसम्बन्धेन साध्यहेतुत्वलाभाय । **गोत्वादिनेति** । तथा च कालिकसम्बन्धेन गोत्वादिना गवादौ साध्ये प्रलयान्तर्भावेण व्यभिचारिणि गोत्वादिहेतौ लक्षणघटकगोत्वावच्छिन्नप्रतियोगिताकाभावानां गवादिरूपप्रतियोगिमति सृष्टिकाले सत्त्वेन प्रतियोगिसामानाधिकरण्याद् भवति कालो गोमान् गोत्वादित्यत्राऽतिव्याप्तिः, हेत्वधिकरणावच्छेदेनेत्यस्य प्रवेशे तु हेत्वधिकरणे प्रलये प्रतियोगिनो गवादेरसत्त्वेन हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहान्नातिव्याप्तिरिति भावः ।

अथ हेतुसमानाधिकरणतत्तदयोगोलकभेदाभावस्य कालावच्छेदेन तत्तदयोगोलकभेदात्मकप्रतियोगिसामानाधिकरण्यसत्त्वाद् धूमवान् वह्नेरित्यत्राऽप्यतिव्याप्तिसंभवे प्रसिद्धस्थलत्यागे बीजाभाव इत्यत आह—**इदमुपलक्षणमिति** । उपलक्षणत्वञ्च-स्वबोधकत्वे सति स्वेतरबोधकत्वम् । धूमवान् वह्नेरित्यत्राऽतिव्याप्तिं सङ्गमयति—**तत्तदयोगोलकेति** ।

ननु प्रतियोगिसामानाधिकरण्यघटकवृत्तित्वं स्वरूपसम्बन्धेनैव वाच्यम्, एवञ्च सृष्टिकाले कालिकसम्बन्धावच्छिन्नप्रतियोगिताकगवाद्यभावस्य स्वरूपसम्बन्धेनावर्तमानतया न प्रतियोगिसामानाधिकरण्यमित्यत आह—**गवाद्यभावस्येति** । प्रतियोग्यधिकरणे = गवादिमति सृष्टिकाले, दैशिकसम्बन्धेन = स्वरूपसम्बन्धेन । सृष्टिकाले गवाद्यभावस्य स्वरूपसम्बन्धेन वृत्तित्वमुपपादयति—**इदानीमिति** । कालिकसम्बन्धेनेत्यस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकत्वमर्थः । **वृत्ताविति** । दैशिकविशेषणतयेत्यादिः ।

## ❃ जागदीशी ❃

**न चैतत्प्रत्ययस्य चत्वरे एव एतत्कालावच्छेदेन गवात्यन्ताभावो विषय इति वाच्यम्–देशे वृत्तौ कालस्येव काले वृत्तौ देशस्याप्यवच्छेदकत्वानुभवात्, एकशेषस्य कर्तुमशक्यत्वात्, इदानीं गगने गौर्नास्तीति प्रतीतेर्गवाद्यभावस्य एतत्कालावच्छेदेन गगनवृत्तित्वावगाहितायां भ्रमत्वाऽऽपत्तेश्च, गवाद्यभावस्य गगनादौ सार्वकालिकत्वेन व्याप्यवृत्तितया कालावच्छेद्यत्वाऽसम्भवादिति भावः । तद्वतीति । गवादिमतीत्यर्थः । काले= जन्यकाले ।**

ननु चरमध्वंसात्मकस्य महाप्रलयात्यन्ताभावाभावस्यापि यावदन्तर्गतत्वात् तस्य च सृष्टिकाले प्रतियोगिसामानाधिकरण्याभावान्नातिव्याप्तिरत आह—महाकाले वेति। तथा च तस्यापि महाकाले प्रतियोगिसामानाधिकरण्यम्, तस्य कालिकसम्बन्धेन जगदाधारत्वादिति भावः।

ननु गोत्वादिजातेः प्रलये कालिकसम्बन्धेन सत्त्वे प्रमाणाभावाद् यदा गोत्वं तदा गौरिति सद्धेतुरेवेति यदि ब्रूयात्तदाऽप्याह—यत्र कालत्वमिति। उक्तविवक्षाऽनादरे घटादिसाधारणरूपेणापि गोः साध्यतायामतिव्याप्तिरित्याशयेन साध्यान्तरमाह—जन्यद्रव्यमिति। द्रव्यस्य साध्यतायां कालत्वं सद्धेतुरेव, प्रलये कालिकसम्बन्धेन परमाण्वादेः सत्त्वात्, कार्यद्रव्यानधिकरणीभूतत्वे सति द्रव्यवत्त्वेनैव धर्मिग्राहकप्रमाणेन तत्सिद्धेरित्यतो व्यभिचारित्वसम्पत्तये जन्यपदम्।

ननु महाप्रलयानङ्गीकारे प्रागुक्तहेतुद्वयमेव लक्ष्यम्, खण्डप्रलयेऽपि ब्रह्माण्डान्तरे जन्यद्रव्यसत्त्वादतः साध्यान्तरमाह—प्रलयाऽवृत्तिर्वेति। खण्डप्रलयाऽवृत्तिर्वेत्यर्थः।

## ❀ दीपिका ❀

एतत्कालावच्छेदेन चत्वरवृत्तिगवाद्यभावस्य निरुक्तप्रतीतिविषयत्वमभ्युपगम्याऽऽह—**इदानीं गगन इति। भ्रमत्वाऽऽपत्तेश्चेति।** तथा च इदानीं गगने गौर्नास्तीति प्रतीतेर्गगनाद्यवच्छेदेन एतत्कालवृत्तिगवाद्यभाव एव विषयो वाच्यः, एवञ्च प्रतियोगिमति सृष्टिकाले गवाद्यभावसत्त्वेन न कोऽपि विरोध इति तत्त्वम्।

'महाकाले वे'ति दीधितिग्रन्थोत्थितौ बीजमाह—**नन्विति।** महाप्रलयस्वरूपन्तु पूर्वमेवोक्तम्। तस्य = महाप्रलयाऽत्यन्ताभावाभावस्य। **नातिव्याप्तिरिति।** तथा च गोत्वसमानाधिकरणस्य महाप्रलयात्मकाभावस्यापि लक्षणघटकत्वेन सृष्टिकाले महाप्रलयस्यावर्तमानत्वेन प्रतियोगिसामानाधिकरण्यविरहेणातिव्याप्त्यभावाद्धेत्वधिकरणावच्छेदेनेत्यस्य प्रवेशो निष्फल इति ध्येयम्। **तथा चेति।** महाकालस्य कालिकसम्बन्धेन जगदाधारत्वान्महाकाले महाप्रलयस्य तदभावस्य च सत्त्वेन भवत्यतिव्याप्तिरिति भावः।

यत्र कालत्वमिति दीधितिग्रन्थमवतारयति—**नन्विति। प्रमाणाभावादिति।** कालवृत्तितायां देशस्यावच्छेदकतया प्रलयकाले गोस्वरूपदेशस्यासत्त्वेन गोत्वादिहेतोः सद्धेतुत्वेन गवाद्यभावे प्रतियोगिसामानाधिकरण्यं नातिव्याप्तिप्रयोजकमिति भावः।

इदमत्रालोचनीयम्—प्रलये गोत्वादिजातेरस्वीकारे जातेः सदातनत्वानुपपत्तिः, 'यो वृत्तिमत्त्वे सति यत्कालाऽवृत्तिः स तत्कालवृत्तिध्वंसप्रागभावाऽन्यतरप्रतियोगी'ति सामान्यव्याप्त्या गोत्वादिजातेरनित्यत्वाऽऽपत्तिश्च, ध्वंसभिन्नत्वे सति ध्वंसाऽप्रतियोगित्वस्यैव नित्यत्वादिति। केचित्तु—साङ्कर्याद् गोत्वस्य जातित्वानभ्युपगमेनावयवविलक्षणं संयोगवत्त्वरूपावयवसंस्थानमेव गोत्वम्, तथा चाऽस्य सद्धेतुत्वमेवेत्यत आह दीधितौ—**जन्यद्रव्यमिति**। अत एवात्रगोत्वजातेरभावेन हेतुत्वासम्भवाद्धेत्वन्तरानुसरणस्वारस्यमपीत्याहुः। वस्तुतस्तु गोशब्दस्य नानार्थकत्वेन सास्नावन्मात्रबोधकताया निर्णायकाभावेन दिगिन्द्रियादीनामपि गोपदार्थत्वेन तत्साध्यत्वे गोत्वस्य सद्धेतुत्वमेवेत्यत आह—**जन्यद्रव्यमिति**। **उक्तविवक्षानादर इति**। गोत्वरूपेण गोः साध्यत्वानादरेऽपि घटादिसाधारणजन्यद्रव्यत्वरूपेण गवादेः साध्यतायामतिव्याप्तिरिति भावः।

प्रलयाऽवृत्तिर्वेत्यादिग्रन्थमवतारयति—**ननु महाप्रलयेति**। **प्रागुक्तहेतुद्वयमिति**। गोत्वं कालत्वञ्चेत्यर्थः। **लक्ष्यमिति**। तथा च तत्र लक्षणगमनमिष्टमेवेति भावः। **प्रलयाऽवृत्तिर्वेतीति**। एवञ्च कालः खण्डप्रलयाऽवृत्तिमान् गोत्वात् कालत्वाद्वेत्यादौ हेत्वधिकरणावच्छेदेनेत्यस्याऽप्रवेशेऽतिव्याप्तिः, प्रलयाऽवृत्तित्वावच्छिन्नाभावस्य स्वप्रतियोग्यधिकरणे महाकाले कालिकसम्बन्धेन वृत्तित्वात्, हेत्वधिकरणावच्छेदेनेत्यस्य प्रवेशे तु यावद्धेत्वधिकरणान्तर्गतखण्डप्रलये प्रलयावृत्तिस्वरूपप्रतियोगिनोऽसत्त्वेन नातिव्याप्तिरिति भावः।

## ❁ जागदीशी ❁

यद्यपि प्रतियोगिनो यदधिकरणं तद्वृत्तित्वस्य दैशिकविशेषणतासम्बन्धेन विवक्षायामपि यदा गोत्वं तदा गौरित्यादावतिव्याप्तिवारणं सम्भवति, प्रलयाऽवृत्तित्वावच्छिन्नाभावस्य स्वप्रतियोग्यधिकरणमहाकालादौ दैशिकविशेषणतासम्बन्धेन वृत्तित्वविरहात्। न च द्रव्यं महाकालत्वादित्यत्राऽव्याप्तिः, कालिकसम्बन्धेन महाकालनिष्ठस्य द्रव्यत्वाद्यभावस्य स्वप्रतियोग्यधिकरणे दैशिकविशेषणतया वृत्त्यभावादिति वाच्यम्—हेतुसमानाधिकरणत्वस्यापि तादृशविशेषणतया निवेशनीयत्वात्। तथापि रूपभिन्नं गुणत्वादित्यादौ साधनसमानाधिकरणस्य रूपान्यत्वाद्यभावस्य रूपभिन्नत्वप्रकारकप्रमाविशेष्यत्वाद्यभावस्य च रूपत्वादिस्वरूपत्वात्तस्य दैशिकविशेषणतासम्बन्धेन वृत्तित्वविरहेण यावदनन्तर्गतत्वात्, घटत्वादिना रूपभिन्नत्वाद्य-

भावस्य च सर्वस्यैव महाकालादौ स्वप्रतियोगिसमानाधिकरणत्वादति-व्याप्तिरतः स्वविशिष्टहेत्वधिकरणेत्यादिविवक्षानुसरणमिति वदन्ति।

❀ दीपिका ❀

अथ हेत्वधिकरणावच्छेदेनेत्यस्य प्रवेशापेक्षया लाघवात् प्रतियोगिसामानाधिकरण्यघटकवृत्तितायां दैशिकविशेषणताविशेषसम्बन्धावच्छिन्नत्वमेव निवेश्यताम्, एवञ्च प्रलयाऽवृत्तित्वावच्छिन्नाभावस्य महाकाले कालिकसम्बन्धेन वृत्तित्वेऽपि प्रलयाऽवृत्तिस्वरूपप्रतियोगिनः सत्त्वेन दैशिकविशेषणतया तदभावस्याऽवृत्तित्वान्न पूर्वोक्तस्थलेषु अतिव्याप्तिरित्याशङ्कते—**यद्यपीति**। प्रतियोगिसामानाधिकरण्यघटकवृत्तित्वे स्वरूपसम्बन्धावच्छिन्नत्वनिवेशे द्रव्यत्वसाध्यकमहाकालत्वादिसद्धेतावव्याप्तिमाशङ्कते—**न चेति**। अस्य वाच्यमित्यनेनान्वयः। अव्याप्तिं निराकरोति—**हेतुसमानाधिकरणत्वस्यापीति**। तादृशविशेषणतया = स्वरूपसम्बन्धेन। तथा च महाकाले द्रव्यत्वस्य सत्त्वेन न तदभावस्य स्वरूपेण वृत्तित्वमिति व्यधिकरणधर्मावच्छिन्नद्रव्यत्वाभावस्यैव हेतुसमानाधिकरणतया तत्र च प्रतियोगिसामानाधिकरण्यसत्त्वेन नाऽव्याप्तिरिति भावः। न च दैशिकविशेषणतासम्बन्धेन प्रतियोगिसामानाधिकरण्यनिवेशेऽपि पूर्वोक्तस्थलेऽतिव्याप्तिस्तदवस्थैव, प्रलयान्यत्वाभावस्य प्रलयमात्रवृत्तेरभावाधिकरणतया अभावाधिकरणकाभावस्याधिकरणस्वरूपत्वनियमेन प्रलयात्मकाधिकरणस्वरूपत्वात् तस्य च प्रलयान्यत्वरूपप्रतियोग्यधिकरणे परमाणौ वृत्तेरिति वाच्यम्—एवमपि प्रलयान्यत्वप्रकारकप्रमाविशेष्यत्वाद्यभावस्य प्रलयातिरिक्तगगनादावपि वर्तमानस्य प्रलयानात्मकतया प्रतियोगिसामानाधिकरण्यस्य दुरुपपादतयाऽतिव्याप्त्यनवकाशात्। **तथापीति**। प्रतियोगिसामानाधिकरण्यघटकवृत्तितायां स्वरूपसम्बन्धावच्छिन्नत्वनिवेशेऽपीत्यर्थः। **वृत्तित्वविरहेणेति**। हेत्वधिकरणे गुणादाविति शेषः।

❀ जागदीशी ❀

वस्तुतो दैशिकविशेषणताघटितस्य लक्षणान्तरत्वादेकेनाऽपरस्याऽन्यथा कर्तुमशक्यत्वादुक्तलक्षणे न वैयर्थ्यमिति ध्येयम्।

यत्तु विशेषणतया हेतुसमानाधिकरणानां निरुक्तयावदभावानां तादृशसम्बन्धेन प्रतियोगिवृत्तित्वमेव वक्तुमुचितम्, न तु प्रतियोग्यधिकरणवृत्तित्वप्रवेशो गौरवात्, सर्वत्र व्यभिचारिस्थलाऽन्यत्वाभावस्यैव प्रतियोग्यवृत्तित्वेनातिव्याप्त्यसम्भवादिति। तत्तुच्छम्। स्ववृत्तित्वविशिष्टानां केवलान्वयिधर्माणामत्यन्ताभावस्य यावदन्तर्गतस्य स्वप्रतियोग्यवृत्तित्वेन

सद्धेतावसंभवापत्तेः, नहि वाच्यत्वादिवृत्तित्वविशिष्टानां वाच्यत्वादीनामभावो वाच्यत्वादिरूपप्रतियोगिवृत्तिरिति दिक् ।

## ❀ दीपिका ❀

ननु रूपभिन्नं गुणत्वादित्यादौ तद्व्यक्तित्वाभावाभावस्य स्वरूपसम्बन्धेन हेतुसमानाधिकरणतया लक्षणघटकत्वेन तत्र च प्रतियोगिसामानाधिकरण्याभावेन नातिव्याप्तिरित्यत आह—**वस्तुत इति** ।

नव्यास्तु—दैशिकविशेषणतया प्रतियोगिसामानाधिकरण्यनिवेशेऽपि दैशिकविशेषणतासम्बन्धेन प्रलयावृत्तिसाध्यके कालत्वादिहेतावतिव्याप्तिर्दुर्वारैव, तत्र प्रलयमात्रस्य व्यभिचारनिरूपकाधिकरणतया साध्यतावच्छेदकसंबन्धेन साध्यं प्रति व्यापकतावच्छेदिका यदभावीयप्रतियोगिता, व्यापकताघटकसम्बन्धावच्छिन्नप्रतियोगिताकस्य तस्य प्रलयमात्रवृत्तितया प्रलयात्मकत्वात् परमाणौ प्रतियोगिसामानाधिकरण्यात्, इतरसम्बन्धावच्छिन्नाभावस्य प्रलयानात्मकत्वेऽपि प्रलयान्यवृत्तितया सुतरामेव प्रतियोगिसामानाधिकरण्यादिति हेत्वधिकरणावच्छेदेनेत्यस्य विवक्षणमावश्यकम् । एतदभिप्रायेणैव प्रलयावृत्तिसाध्यकानुसरणं ग्रन्थकृत इत्याहुः ।

अथ यावत्सु तादृशाभावेषु प्रतियोगिसामानाधिकरण्यं निवेश्य पूर्वोक्तस्थलेषु अतिव्याप्तिनिरासाय स्वविशिष्टहेत्वधिकरणावच्छेदेनेत्यस्य प्रवेशापेक्षया लाघवात् दैशिकविशेषणतासम्बन्धेन यत्समानाधिकरणाः साध्यव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः दैशिकविशेषणतासम्बन्धेन प्रतियोगिवृत्तयस्तत्त्वमित्येव लक्षणमस्तु, एवञ्च कालो गोमान् गोत्वादित्यादौ यावदन्तर्गतस्य प्रलयभेदाभावादेः स्वरूपसम्बन्धेन प्रतियोगिनि प्रलयभेदेऽवृत्तित्वान्नातिव्याप्तिरिति केषाञ्चिन्मतं दूषयितुमाह—**यत्त्विति** । विशेषणतया = दैशिकविशेषणतया । **निरुक्तेति** । साध्यव्यापकतावच्छेदकप्रतियोगिताकेत्यर्थः । तादृशसम्बन्धेन=दैशिकविशेषणतासम्बन्धेन । असम्भवापत्त्या तन्मतं दूषयति—**तत्तुच्छमिति** । असम्भवमेवाह—**स्ववृत्तित्वेति** । अयमाशयः—वाच्यत्वादिवृत्तित्वविशिष्टवाच्यत्वाद्यभावस्य हेतुसमानाधिकरणस्य यावदन्तर्गतस्य वाच्यत्वादिरूपप्रतियोगिवृत्तित्वविरहेण वह्निमान् धूमादित्यादावसम्भवः स्यादिति । दीधितौ-**हेतुमति प्रलये इति** । हेत्वधिकरणसामान्यान्तर्गतप्रलयान्तर्भाविणेत्यर्थः । तत्सामानाधिकरण्याभावात् = गवादिरूपप्रतियोगिसामानाधिकरण्यविरहात् । अत्र गवादेरभावस्येत्यनुषञ्जनीयम् ।

❀ दीधितिः ❀

स्वविशिष्टेति विशेषणात् कपिसंयोगाभाववान् मेयत्वादित्यादौ संयोगाद्यात्मकस्य साध्याभावस्य सकलहेत्वधिकरणावृत्तित्वेऽपि नाव्याप्तिः ।

❀ जागदीशी ❀

प्राचां मते संयोगसामान्याभावसाध्यकं मेयत्वं द्रव्ये एव व्यभिचारीत्यतः कपिपदम् । प्रतियोगिवैयधिकरण्यघटितमेव साध्यव्यापकत्वमत्र निवेशितं यथासन्निवेशे वैयर्थ्यविरहात्, अतस्तदनवच्छेदकत्वं संयोगाभावनिष्ठप्रतियोगित्वेऽप्यक्षतमित्याशयेन संयोगाद्यात्मकाभावाभिधानम्, तदघटितसाध्यव्यापकतायाः प्रवेशे तु गगनत्वादिविशिष्टस्य गगनाद्यभावस्याभावो यावदन्तर्गत इति तस्यैव हेत्वधिकरणीभूतगगनावच्छेदेन प्रतियोग्यसमानाधिकरणत्वादव्याप्तिरतः स्वविशिष्टपदं बोध्यम्, एतदभिप्रायेणैव संयोगाद्यात्मकाभावेत्यादि पदम् ।

वस्तुतः सत्तावान् द्रव्यत्वात्, गुणत्ववान् रूपत्वादित्यादौ काले जन्यरूपे च हेतुसमानाधिकरणस्य सत्ताभावस्य गुणत्वसामान्याभावस्य च केनापि सम्बन्धेनाऽऽत्मगगनादौ नित्यरूपे चावृत्तित्वाद् हेत्वधिकरणावच्छेदेन तस्यैव यावदन्तर्गतस्य प्रतियोगिसामानाधिकरण्यविरहादव्याप्तिः स्याद्यदि स्वविशिष्टपदं न स्यादिति दिक् ।

❀ दीपिका ❀

हेत्वधिकरणे स्ववैशिष्ट्यदलप्रवेशस्य फलमाह- दीधितौ—**स्वविशिष्टेतीति** । अत्र स्वपदेन लक्षणघटकत्वेनाभिमतोऽभावो ग्राह्यः, तथा च स्वविशिष्टपदानुपादाने हेतुसमानाधिकरणस्य कपिसंयोगाभावाभावस्यापि यावदन्तर्गतत्वेन हेत्वधिकरणयावदन्तर्गतगुणादौ कपिसंयोगात्मकाभावस्यासत्त्वेन प्रतियोगिसामानाधिकरण्यविरहात् कपिसंयोगाभाववान् मेयत्वादित्यादावव्याप्तिः, तदुपादाने तु कपिसंयोगात्मकाभावविशिष्टं हेत्वधिकरणं द्रव्यमेव, तदवच्छेदेन कपिसंयोगाभावात्मकप्रतियोगिनस्तदभावस्य च सत्त्वान्नाव्याप्तिरिति भावः ।

ननु संयोगाभावसाध्यकमेयत्वहेतोरपि सद्धेतुतया तत्राव्याप्तिसम्भवे साध्यांशे कपिपदं व्यर्थमित्यत आह—**प्राचां मत इति** । तथा च साम्प्रदायिकैः द्रव्ये संयोग-

सामान्याभावस्यानङ्गीकारात् तदवच्छेदेन मेयत्वहेतोर्व्यभिचारित्वं स्यादिति सद्धेतुत्वरक्षायै कपिपदमिति भावः। दीधितौ-संयोगाद्यात्मकस्य = कपिसंयोगाद्यात्मकस्य।

ननु कपिसंयोगाभावसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकस्यैव साध्यव्यापकतावच्छेदकतया कपिसंयोगाभावाधिकरणे द्रव्ये कपिसंयोगाभावनिष्ठप्रतियोगितावान्नास्तीत्याकारकाभावस्य सत्त्वेन तादृशप्रतियोगितायाः प्रतियोगितावच्छेदकत्वेन कपिसंयोगात्मकाभावस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वाभावेन न यावदन्तर्गतत्वमिति तादृशाभावमादायाव्याप्तिविरहेण स्वविशिष्टपदं व्यर्थमित्यत आह—**प्रतियोगिवैयधिकरण्येति**। तथा च स्वावच्छिन्नानधिकरणेत्यादिपूर्वोक्तसाध्यव्यापकतावच्छेदकत्वस्य कपिसंयोगाभावनिष्ठप्रतियोगितायां सत्त्वान्न स्वविशिष्टपदस्य वैयर्थ्यमिति भावः।

नन्वेवमपि प्रतियोगिवैयधिकरण्याघटितकल्पे तस्य वैयर्थ्यं तदवस्थमेवेत्यत आह—**तदघटितेति। गगनत्वादिविशिष्टस्येति।** अत्र वैशिष्ट्यं सामानाधिकरण्येन बोध्यम्। गगनवृत्तित्वविशिष्टस्येति फलितोऽर्थः, गगनाभावस्य केवलान्वयित्वात् गगनेऽपि वृत्तेः। तस्यैव = गगनवृत्तित्वविशिष्टगगनाभावाभावस्यैव। **प्रतियोग्यसमानाधिकरणेति।** गगने गगनवृत्तित्वविशिष्टगगनाभावस्यैव सत्त्वेन तदभावस्यासत्त्वान्न प्रतियोगिसामानाधिकरण्यमिति भावः।

ननु साध्यव्यापकतावच्छेदकप्रतियोगितायां वैशिष्ट्यानवच्छिन्नत्वनिवेशेनापि तादृशाभाववारणं सम्भवतीत्यत आह—**वस्तुत इति।**

### ❀ दीधितिः ❀

**जलादिवृत्तित्वविशिष्टगोत्वाद्यभावस्याभावस्तु जलत्वाद्यभावो न तु धूमाद्यभावः, जलादावपि तदभावप्रत्ययप्रसङ्गात्।**

### ❀ जागदीशी ❀

ननु धूमाद्यभावनिष्ठो जलादिवृत्तित्वविशिष्टस्य गोत्वाद्यभावस्याभावो धूमाद्यभाव एव, अभावप्रतियोगिकस्य अभावाधिकरणकाभावस्याधिकरणस्वरूपत्वात्, तथा च धूमवान् वह्नेरित्यादावतिव्याप्तिः, धूमाद्यभावस्यापि हेत्वधिकरणावच्छेदेनैव गोत्वाभावरूपप्रतियोगिसमानाधिकरणत्वादत आह—जलादिवृत्तीति। न च तादृशाभावस्य धूमाभावस्वरूपत्वेऽपि जलादेर्न तादृशाभावत्वावच्छिन्नाधिकरणत्वमिति न प्रत्ययाति-

प्रसङ्ग इति वाच्यम्—एवं सत्यभावमात्रस्यैव प्रायेणाभेदप्रसङ्गात्, उक्तक्रमेणैवातिप्रसङ्गस्य वारणसंभवादिति भावः।

## ❀ दीपिका ❀

जलादिवृत्तित्वेतिदीधितिग्रन्थोत्थितौ बीजमाह—**नन्विति**। धूमाभावप्रतियोगित्वं गोत्वाभावेऽप्युपपादयति—**धूमाद्यभावेति**। तथा च धूमाभावे जलवृत्तित्वविशिष्टगोत्वाभावो नास्तीतिप्रतीतिसिद्धस्याभावस्याभावाधिकरणकाभावप्रतियोगिकाभावतयाऽधिकरणीभूतधूमाभावस्वरूपत्वेन तत्प्रतियोगित्वं गोत्वाभावेऽक्षतम्, विशिष्टशुद्धयोरनतिरेकादिति भावः। धूमवान् वह्नेरित्यत्रातिव्याप्तिमुपपादयति—**धूमाद्यभावस्यापीति**। ननु जलादिवृत्तित्वविशिष्टगोत्वाभावाभावस्य धूमाभावस्वरूपत्वेऽपि यावदन्तर्गतस्यायोगोलकभेदाभावस्य स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यविरहादेवातिव्याप्तिवारणसंभवात्, अभावाधिकरणकस्यैवाभावस्याधिकरणस्वरूपतया अयोगोलकत्वादिवृत्तेर्जलादिवृत्तित्वविशिष्टगोत्वाभावाभावस्यायोगोलकत्वाद्यनात्मकत्वात् कथं तादृशाभावस्य धूमाद्यभावस्वरूपत्वखण्डनं दीधितिकृता कृतमिति चेन्न—गगनाभावभिन्नं प्रमेयत्वादित्यत्रातिव्याप्तेः, यावदन्तर्गतस्य गगनाभावभेदाभावस्यापि तादात्म्येन गगनाभावात्मकतया तद्वृत्तेर्जलादिवृत्तित्वविशिष्टगोत्वाभावाभावस्य गगनाभावात्मकतया तत्प्रतियोगिना गोत्वाभावेन समं सामानाधिकरण्यात्। दीधितौ—**जलत्वाद्यभाव इति**। इदमत्राकूतम्—विशिष्टाभावो विशेषणाभावस्वरूपो विशेष्याभावस्वरूपो वेति नियमः, तथा च जलवृत्तित्वविशिष्टगोत्वाभावस्याभावो जलत्वादिविशेषणाभावस्वरूप एव न तु धूमाभावस्वरूप इति तत्प्रतियोगिनो जलत्वस्यायोगोलकेऽसत्त्वान्नातिव्याप्तिरिति। तादृशविशिष्टाभावस्य धूमाभावस्वरूपत्वाभ्युपगमे दोषमाह दीधितौ—**जलादावपीति**। **तदभावेति**। जले धूमाभावस्य सत्त्वेन जलं जलवृत्तित्वविशिष्टगोत्वाभावस्याभाववदिति प्रतीत्यापत्तिः स्यादिति भावः।

निरुक्तप्रत्ययातिप्रसङ्गं निषेधति—**न चेति**। तादृशाभावस्य = जलवृत्तित्वविशिष्टगोत्वाभावाभावस्य। तथा च जले धूमाभावत्वावच्छिन्नाऽधेयतानिरूपिताधिकरणतायाः सत्त्वेऽपि जलं जलवृत्तित्वविशिष्टगोत्वाभावस्याभाववदिति प्रतीतेः जलवृत्तित्वविशिष्टगोत्वाभावाभावत्वावच्छिन्नाऽधेयतानिरूपिताधिकरणतावज्जलस्यैव विषयत्वेन जले तादृशाधिकरणताया बाधेन न तादृशप्रतीतिः। **अभेदप्रसङ्गादिति**।

तथा चाभेदप्रसङ्गभिया तादृशविशिष्टाभावो न धूमाभावस्वरूपोऽपि तु जलत्वाभाव-स्वरूप एवेति न धूमवान् वह्नेरित्यादावतिव्याप्तिरिति तत्त्वम् ।

❀ जागदीशी ❀

ननु तथापि धूमवान् वह्नेरित्यादावतिव्याप्तिः, समनियताभावानामैक्याद् धूमाभावस्य धूमत्वेन प्रमेयाभावादभिन्नस्य, अयोगोलकान्यत्वाभावादेश्चायोगोलकभेदत्वादिना भेदसामान्याभावादभिन्नस्य हेत्वधिकरणावच्छेदेन वह्न्यादिभेदाद्यात्मकप्रतियोगिसमानाधिकरणत्वादिति चेत्—अत्राहुः—यावत्पदस्य फलतः प्रतियोगिताविशेषणत्वेन साध्यव्यापकतावच्छेदकीभूतयद्यत्प्रतियोगिताकोऽभावस्तस्य स्वविशिष्टहेत्वधिकरणावच्छेदेन तत्तत्प्रतियोगिताश्रयसामानाधिकरण्यं विवक्षितम् । तथा च धूमादिसामान्याभावस्य धूमनिष्ठतादृशप्रतियोगिताकस्य धूमादिनिष्ठप्रतियोगित्वाश्रयेण धूमादिना हेत्वधिकरणावच्छेदेन सामानाधिकरण्यविरहान्नातिव्याप्तिः ।

❀ दीपिका ❀

अथ तादृशविशिष्टाभावस्य जलत्वाद्यभावस्वरूपत्वेऽप्यतिव्याप्तिस्तदवस्थैव, तथा हि—समनियताभावानामैक्यात् धूमाभाव-धूमत्वावच्छिन्नप्रमेयाभावयोरभिन्नतया हेतुसमानाधिकरणधूमाभावस्य प्रतियोगी यथा धूमस्तथा प्रमेयोऽपीति अयोगोलके द्रव्यत्वादिरूपप्रतियोगिना समं धूमाभावस्य सामानाधिकरण्यात्, एवम् अयोगोलकभेदाभाव—अयोगोलकभेदत्वावच्छिन्नप्रतियोगिताकभेदाभावयोः समनियतयोरभेदेनायोगोलकभेदाभावस्य प्रतियोगिना भेदसामान्यान्तर्गतवह्निभेदेन साकं हेत्वधिकरणायोगोलकावच्छेदेन सामानाधिकरण्यादतिव्याप्तिरिति शङ्कते—**नन्विति** । तथापि = निरुक्तविशिष्टाभावस्य जलत्वाद्यभावस्वरूपत्वमभ्युपगम्यातिप्रसङ्गवारणेऽपि ।

अतिव्याप्तिन्निराकुरुते—**यावत्पदस्येति** । **नातिव्याप्तिरिति** । तथा च समनियताभावानामैक्येऽपि प्रतियोगिता विभिन्नैवेति धूमाभावीयधूमनिष्ठप्रतियोगित्व-धूमत्वेन प्रमेयाभावीयप्रतियोगित्वयोश्च भिन्नतया धूमनिष्ठप्रतियोगिताश्रयधूमसामानाधिकरण्यविरहान्नातिव्याप्तिरिति भावः ।

अथात्र वह्निमान् धूमादित्यत्राव्याप्तिः, हेतुसमानाधिकरणस्य वह्न्यभावस्य यथा वह्निनिष्ठा प्रतियोगिता तथा कालिकसम्बन्धावच्छिन्नवह्न्यभावाभावनिष्ठापि प्रतियोगिता, सापि प्रतियोगिवैयधिकरण्याघटितव्यापकतावच्छेदिका तादृशाभावस्य

वह्निस्वरूपतया स्वरूपेण साध्यवदवृत्तित्वात्, तत्कल्पे स्वरूपसम्बन्धेन साध्यवन्निष्ठत्वस्याभावविशेषणत्वात्, तथा च स्वविशिष्टहेत्वधिकरणावच्छेदेन यावदन्तर्गतताहशप्रतियोगिताश्रयसामानाधिकरण्यविरहादिति चेन्न—व्यापकतावच्छेदकप्रतियोगित्वेऽभावावृत्तित्वस्य निवेशनीयत्वात्। न चैवं जातिसामान्याभावाभावस्य लक्षणाघटकत्वेन भावभिन्नपदं व्यर्थमिति वाच्यम्—भावभिन्नपदेनापि ताहशविशेषणस्यैव लाभात्।

## ❀ जागदीशी ❀

**न चैवं यत्समानाधिकरणा इत्यस्य वैयर्थ्यमिति वाच्यम्—आत्मत्वसामान्याभावीयप्रतियोगिताया अपि साध्यव्यापकतावच्छेदकतया तत्प्रतियोगिताकस्य आत्मत्वसामान्याभावस्य ताहशप्रतियोगित्वाश्रयसामानाधिकरण्यविरहाद् अयमात्मा ज्ञानादित्यादावव्याप्तिवारकत्वात्। जलादिवृत्तित्वविशिष्टेत्यादिग्रन्थस्तु वस्तुगतिमनुरुध्यैवोक्तः, तेन जलादिवृत्तित्वविशिष्टगोत्वाभावाभावस्य धूमाभावस्वरूपत्वेऽपि तस्य हेत्वधिकरणावच्छेदेन साध्यव्यापकतावच्छेदकीभूतधूमनिष्ठप्रतियोगिताव्यक्त्याश्रयसामानाधिकरण्यविरहादेवातिव्याप्त्यसम्भवेऽपि नासङ्गतिः।**

## ❀ दीपिका ❀

अथ साध्यव्यापकतावच्छेदिका यावत्यः प्रतियोगिताः स्वविशिष्टहेत्वधिकरणावच्छेदेन कस्मिंश्चिदभावे प्रत्येकं तत्तत्प्रतियोगिताश्रयसामानाधिकरण्यविवक्षणेनैव सामञ्जस्ये यत्समानाधिकरणदलस्य वैयर्थ्यम्, अयमात्मा ज्ञानादित्यादौ साध्यव्यापकतावच्छेदकप्रतियोगिताश्रयाऽत्मत्वसामानाधिकरण्यस्य व्यधिकरणधर्मावच्छिन्नाभावे सत्त्वात्। एवं स्वविशिष्टदलमपि व्यर्थम्, कपिसंयोगाभाववान् मेयत्वादित्यत्र ताहशप्रतियोगित्वाश्रयकपिसंयोगाभावसामानाधिकरण्यस्य गुणाद्यवच्छेदेनापि व्यधिकरणधर्मावच्छिन्नसाध्याभावे सत्त्वादिति शङ्कते—**न चैवमिति**। एवम् = यावत्त्वस्य प्रतियोगिताविशेषणत्वस्वीकारे। यत्समानाधिकरणा इति स्वविशिष्टदलस्याप्युपलक्षणम्। तद्दलसार्थक्यं सम्पादयति—**आत्मत्वसामान्याभावीयेति**। एतद्ग्रन्थस्यायमाशयः—यत्समानाधिकरणाभावीयसाध्यव्यापकतावच्छेदकप्रतियोगितात्वव्यापको योऽभावस्तत्कालीनहेतुतावच्छेदकवत्त्वमेव व्याप्तिः, व्यापकता च स्वविशिष्टहेत्वधिकरणतात्वव्यापकत्व-स्वनिरूपितत्वोभयसम्बन्धेन। अत्र स्वपदेन लक्षणघटकीऽभावो ग्राह्यः। स्वविशिष्टहेत्वधिकरणतात्वव्यापकता च स्वाश्रयसामानाधि-

करण्य-स्वनिरूपकाभाववद्वृत्तित्वोभयसम्बन्धेन। अत्र स्वपदेन व्यापकतावच्छेदकप्रतियोगिता ग्राह्या। एवञ्च यत्समानाधिकरणा इत्यनुक्तौ—आत्मत्वसामान्याभावीयप्रतियोगित्वस्य न हेत्वधिकरणतात्वव्यापकत्वम्, स्वम् आत्मत्वनिष्ठप्रतियोगित्वम्, तन्निरूपकोऽभाव आत्मत्वाभावस्तदधिकरणं पृथिव्यादि, तत्र ज्ञानाधिकरणताया अवृत्तित्वेन स्वनिरूपकाभाववद्वृत्तित्वरूपसम्बन्धाभावात्, आत्मत्वाभावविशिष्टज्ञानाधिकरणताया अप्रसिद्धिश्चेति अयमात्मा ज्ञानादित्यादावव्याप्तिरतो यत्सामानाधिकरण्यदलमुपात्तम्। एवं स्वविशिष्टदलानुक्तौ—कपिसंयोगाभावनिष्ठप्रतियोगिता न गुणादिनिष्ठहेत्वधिकरणतात्वव्यापिका, स्वं कपिसंयोगाभावनिष्ठप्रतियोगित्वम्, तन्निरूपकोऽभावः कपिसंयोगात्मकोऽभावस्तदधिकरणं द्रव्यम्, तत्र गुणादिनिष्ठहेत्वधिकरणताया अवृत्तेः स्वनिरूपकाभाववद्वृत्तित्वविरहादिति कपिसंयोगाभाववान् मेयत्वादित्यत्राव्याप्तिरतः स्वविशिष्टदलमपि देयम्। न च स्वविशिष्टहेत्वधिकरणतात्वदले स्वनिरूपकाभाववद्वृत्तित्वनिवेशनमनुचितमिति वाच्यम्—स्वविशिष्टपदसार्थक्याय तन्निवेशात्, अन्यथा यावत्त्वस्याभावविशेषणत्वेऽपि हेत्वधिकरणताव्यापकप्रतियोग्यधिकरणतावद्वृत्तित्वनिवेशेनापि सामञ्जस्ये स्वविशिष्टपदवैयर्थ्यभयेन तदर्थं त्यक्त्वा हेत्वधिकरणत्वानि यावन्तीत्यादिना गुरुतरार्थकरणस्यानौचित्यात्।

परे तु यत्समानाधिकरणाभावीयसाध्यव्यापकतावच्छेदकप्रतियोगितात्वव्यापकप्रतियोगिताकालीनहेतुतावच्छेदकवत्त्वमेव व्याप्तिः, व्यापकता च स्वतादात्म्य-हेत्वधिकरणताव्यापकस्वाश्रयाधिकरणतावद्वृत्त्यभावीयत्वोभयसम्बन्धेन। एवञ्च यत्सामानाधिकरण्यदलानुक्तौ अयमात्मा ज्ञानादित्यत्राव्याप्तिः, साध्यव्यापकतावच्छेदकाऽत्मत्वनिष्ठप्रतियोगितात्वव्यापकत्वस्य आत्मत्वसामान्याभावीयप्रतियोगितायामसत्त्वात्, तथा हि—ज्ञानाधिकरणताव्यापिका या आत्मनिष्ठाऽधिकरणता तदाश्रय आत्मा तत्राऽत्मत्वाभावस्यावर्तमानत्वात्, अतस्तद्दलमुपात्तम्। न च संसर्गताघटकाभावीयत्वमनिवेश्याभावकालीनत्वनिवेशे यत्सामानाधिकरण्यदलस्य वैयर्थ्यमेवेति वाच्यम्—एतदस्वरसेनैव वस्तुतस्तु इत्यादिग्रन्थावतारादित्याहुः।

ननु जलादिवृत्तित्वविशिष्टगोत्वाभावाभावस्य जलत्वाद्यभावस्वरूपत्वेऽपि धूमवद्वृत्तित्वविशिष्टगोत्वाभावाभावस्य धूमाभावस्वरूपतायामविवादाद् गोत्वाभावरूपप्रतियोगिसामानाधिकरण्यमादाय धूमवान् वह्नेरित्यत्रातिव्याप्तितादवस्थ्यमिति साध्यव्यापकतावच्छेदकप्रतियोगितायां यावत्त्वनिवेश आवश्यकः, एवञ्च जलवृत्तित्वविशिष्टगोत्वाभावाभावस्य धूमाभावस्वरूपत्वेऽपि यावदन्तर्गतधूमनिष्ठप्रतियोगित्वाश्रयसामानाधिक-

रण्यविरहेणातिव्याप्तिविरहाज्जलादिवृत्तित्वविशिष्टेत्यादिदीधितिग्रन्थोऽसङ्गत इत्यत आह—**जलादिवृत्तित्वविशिष्टेत्यादिग्रन्थस्त्विति । वस्तुगतिमनुरुध्यैवेति ।** यथा जलवृत्तित्वविशिष्टगोत्वाभावस्याभावो जलत्वाभावस्वरूपस्तथा धूमवद्वृत्तित्वविशिष्टगोत्वाभावाभावो धूमाभावस्वरूप इति ग्रन्थार्थः, न तु धूमाद्यभाव इति ग्रन्थस्तु एवकारव्यावृत्ततया फलकथनपरः। तथा च प्रतियोगितायां यावत्त्वनिवेशान्न तत्रातिव्याप्तिरिति दीधितिकारस्याशयः ।

## ❀ जागदीशी ❀

न च धूमत्वेन धूमाभावस्य धूमनिष्ठं यत् प्रतियोगित्वं तदेव धूमत्वेन प्रमेयसामान्याभावस्य प्रमेयसामान्यनिष्ठं प्रतियोगित्वं लाघवात् न तु तद्भिन्नं प्रतियोगित्वान्तरं गौरवात्, इत्युक्तविवक्षयाप्यप्रतीकार इति वाच्यम्—स्वरूपसम्बन्धात्मिकायाः प्रतियोगितायाः सामान्याभावस्थले प्रतियोगिभेदेनैव भिन्नत्वादिति साम्प्रदायिकाः ।

वस्तुतस्तु साध्यव्यापकतावच्छेदकस्वन्यूनवृत्तिधर्मानवच्छिन्नयादृशप्रतियोगितानिरूपकोऽभावः स्वविशिष्टहेत्वधिकरणावच्छेदेन तादृशप्रतियोगित्वाश्रयसमानाधिकरण इत्येव वक्तव्यम् । तथा च धूमत्वादिना प्रमेयसामान्याभावस्य धूमादिसामान्याभावानतिरेकित्वेऽपि तदीयं प्रमेयसामान्यनिष्ठं प्रतियोगित्वं स्वन्यूनवृत्तिधूमत्वादिधर्मेणावच्छिन्नमतो न तादृशप्रतियोगित्वाश्रयसामानाधिकरण्यमादायातिप्रसङ्ग इति युक्तमुत्पश्यामः ।

## ❀ दीपिका ❀

अथ नानाप्रतियोगित्वाङ्गीकारापेक्षया लाघवादेकधर्मावच्छिन्ना प्रतियोगिता एकैव स्वीक्रियते, तथा च धूमत्वावच्छिन्नधूमाभावीयप्रतियोगित्वाभिन्ना या धूमत्वावच्छिन्नप्रमेयसामान्याभावीयप्रतियोगिता तदाश्रयीभूतप्रमेयात्मकप्रतियोगिसामानाधिकरण्यमादाय प्रतियोगितायां यावत्त्वनिवेशेऽप्यतिप्रसङ्गो दुर्वार एवेति शङ्कते—**न चेति । उक्तविवक्षयेति ।** प्रतियोगितायां यावत्त्वनिवेशेनापीत्यर्थः । एकधर्मावच्छिन्नप्रतियोगितायाः ऐक्यमभ्युपेत्यापि स्वमतेऽतिप्रसङ्गन्निराकरोति—**वस्तुतस्त्विति । साध्यव्यापकेति ।** साध्यव्यापकतावच्छेदिका या स्वन्यूनवृत्तिधर्मानवच्छिन्ना प्रतियोगिता तन्निरूपकोऽभाव इत्यर्थः । **तादृशेति ।** स्वन्यूनवृत्तिधर्मानवच्छिन्नेत्यर्थः । स्वन्यूनवृत्तित्वन्तु—स्वसमानाधिकरणत्वे सति स्वाश्रय-

वन्निष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकत्वम्। एवञ्च—धूमत्वेन प्रमेयसामान्याभावीयप्रतियोगितायाः स्वन्यूनवृत्तिधूमत्वावच्छिन्नत्वेन न तादृशप्रतियोगिताश्रयसामानाधिकरण्यमादायातिव्याप्तिरिति तत्त्वम्।

## ❀ जागदीशी ❀

यत्तु समनियताभावैक्यमते धूमवान् वह्नेरित्यादावतिव्याप्तिवारणार्थं येन येन सम्बन्धेन साध्यव्यापकता तैः प्रत्येकं प्रतियोगिसामानाधिकरण्यं विवक्षितम्, तथा च व्यभिचारिमात्रे एव यत्राधिकरणे व्यभिचारस्तदन्यत्वस्य स्वात्मकस्वरूपसम्बन्धेनापि साध्यव्यापकत्वात्, तदभावस्य च हेत्वधिकरणावच्छेदेन तादृशान्यत्वनिरूपितस्वरूपसम्बन्धेन प्रतियोगिसामानाधिकरण्यस्याभावान्नातिव्याप्तिः। अत एव विषयितासम्बन्धस्य व्यापकताघटकत्वेऽपि नित्यज्ञानं नित्यसविषयकत्वादित्यादौ नातिव्याप्तिः, नित्यज्ञानत्वाभावस्य व्यापकताघटकीभूतेन समवायसम्बन्धेन प्रतियोग्यसमानाधिकरणत्वादिति मतम्। तत्तुच्छम्। घटत्वादिना वाच्यत्वाद्यभावस्यैव घटत्वादिना अयःपिण्डान्यत्वाभावस्वरूपतया तस्य च व्यापकताघटकेनायःपिण्डान्यत्वादिनिरूपितस्वरूपसम्बन्धेन यावद्धेत्वधिकरणे प्रतियोगिसामानाधिकरण्यविरहादेव धूमवान् वह्नेरित्यादावतिव्याप्तिविरहात्, यावन्त इत्यस्य स्वविशिष्ट इत्यस्य यत्समानाधिकरणा इत्यस्य च व्यर्थतापातादिति दिक्।

## ❀ दीपिका ❀

समनियताभावीयप्रतियोगिसामानाधिकरण्यमादाय प्रसक्तामेवातिव्याप्तिं प्रकारान्तरेण वारयतां केषाञ्चिन्मतं दूषयितुमुपन्यस्यति—**यत्त्विति**। व्यभिचारिमात्रे = धूमवान् वह्नेरित्यादौ सर्वत्र। यत्राधिकरणे = अयोगोलकादौ। व्यभिचारः = हेतोः साध्याभाववद्वृत्तित्वम्। तदन्यत्वस्य=अयोगोलकादिभेदस्य। **स्वात्मकेति**। अयोगोलकादिभेदरूपेत्यर्थः। तदभावस्य=अयोगोलकादिभेदाभावस्य। **तादृशान्यत्वेति**। अयोगोलकादिभेदप्रतियोगिकेत्यर्थः। तथा च स्वरूपसम्बन्धेनायोगोलकभेदस्यापि साध्यव्यापकतया यावदन्तर्गतायोगोलकभेदाभावस्य स्वरूपसम्बन्धेन प्रतियोगिसामानाधिकरण्यविरहादेव धूमवान् वह्नेरित्यादौ नातिव्याप्तिरिति तत्त्वम्। अत एव = साध्यव्यापकतावच्छेदकप्रत्येकसम्बन्धेन प्रतियोगिसामानाधिकरण्यविवक्षणादेव। **नातिव्याप्तिरिति**। अयमाशयः—व्यापकताघटकप्रत्येकसम्बन्धेन प्रतियोगिसामा-

नाधिकरण्याविवक्षणे नित्यज्ञानं नित्यसविषयकत्वादित्यादौ ईश्वरेच्छान्तर्भावेण व्यभिचारिणि नित्यज्ञानत्वस्य व्यापकतावच्छेदकविषयित्वसम्बन्धेनाधिकरणे ईश्वरेच्छायां नित्यज्ञानत्वाभावस्य सत्त्वादतिव्याप्तिः स्यात्, तथा विवक्षणे तु समवायस्यापि साध्यव्यापकतावच्छेदकसंसर्गतया तेन सम्बन्धेन ईश्वरेच्छायां प्रतियोगिनो नित्यज्ञानत्वस्यासत्त्वान्नातिव्याप्तिरिति ।

दूषयति—**तत्तुच्छमिति** । दूषणप्रकारमाह—**घटत्वादिनेति** । घटत्वेन वाच्यत्वाभावस्य घटत्वेनायोगोलकभेदाभावस्य च व्यधिकरणधर्मावच्छिन्नत्वेन समनियततयाऽभिन्नत्वमिति भावः । तस्य = घटत्वेन अयोगोलकभेदाभावस्य । **व्यर्थतापातादिति** । अयमाशयः—घटत्वेनायोगोलकभेदाभावादि—व्यधिकरणधर्मावच्छिन्नाभावमादाय धूमवान् वह्नेरित्यादावतिव्याप्तेर्वारणायाभावे यावत्त्वं निवेश्यते, परन्तु समनियताभावानामैक्यपक्षे घटत्वेन वाच्यत्वाभावस्य घटत्वेनायोगोलकभेदाभावस्य चाभिन्नतया घटत्वेनायोगोलकभेदाभावीयप्रतियोगिनो वाच्यत्वादेः साध्यव्यापकतावच्छेदकस्यायोगोलकभेदप्रतियोगिकस्वरूपसम्बन्धस्य व्यधिकरणतया तेन सम्बन्धेन वाच्यत्वादेः कुत्राप्यसत्त्वेन व्यधिकरणधर्मावच्छिन्नाभावे प्रतियोगिसामानाधिकरण्यविरहादेवातिव्याप्तिवारणसम्भवे यत्तुमते यावत्त्वनिवेशो व्यर्थः स्यात् । यावत्त्वानिवेशे च व्यधिकरणधर्मावच्छिन्नाभावमादाय कपिसंयोगाभाववान् मेयत्वादित्यादौ अयमात्मा ज्ञानादित्यादौ च लक्षणसमन्वयसम्भवे स्वविशिष्टपदस्य यत्सामानाधिकरण्यदलस्य च वैयर्थ्यं स्पष्टमेवेति ।

इति यतीन्द्रस्वामिश्रीरामप्रपन्नाचार्यविरचितायां दीपिकायां व्यधिकरणधर्मावच्छिन्नाभावीयप्रथमलक्षणं समाप्तम् ।

—०ᐤ०—

❀ दीधितिः ❀

**यत्समानाधिकरणानां साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकानां यावदभावानां प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं तत्त्वं वा तत्।**

❀ जागदीशी ❀

ननु व्यधिकरणधर्मावच्छिन्नाभावासत्त्वेऽपि सर्वत्र सद्धेतौ गगनवाच्यत्वोभयाभावं गगनत्वादिविशिष्टवाच्यत्वाद्यभावं वाऽऽदायोक्तलक्षणसमन्वयसम्भवे प्रतियोग्यवृत्तिश्चेत्यादिमूलावतारानुपपत्तिः। न च वैशिष्ट्य-व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन व्यापकतावच्छेदकीभूतप्रतियोगिताया विशेषणीयत्वान्नैवमिति वाच्यम्—व्यभिचारावारकत्वेन तादृशविशेषणस्य व्यर्थत्वात्, अन्यथा व्यधिकरणधर्मावच्छिन्नाभावकालीनत्वेन हेतुं विशिष्य ग्रन्थावतरणं कुतो न समर्थयेदतो लक्षणान्तरमाह—यत्समानाधिकरणानामिति।

❀ दीपिका ❀

यत्समानाधिकरणानामित्यादिद्वितीयलक्षणस्यावतरणिकां रचयति—**ननु व्यधिकरणेति**। व्यधिकरणधर्मावच्छिन्नाभावस्याप्रामाणिकत्वेनानङ्गीकारेऽपीत्यर्थः। लक्षणसमन्वयस्तु गगनस्यावृत्तितामते गगनवाच्यत्वोभयाभावस्य केवलान्वयित्वेन हेतुसमानाधिकरणतया यावदन्तर्गततादृशोभयाभावस्य पर्वताद्यवच्छेदेन प्रतियोगिना वाच्यत्वेन समं सामानाधिकरण्यं वर्तते इति। **मूलावतारेति**। नन्वत्र धूमवान् वह्नेरित्यत्र धूमाभावसमनियतं धूमत्वेन प्रमेयसामान्याभावमादायातिव्याप्तेर्वारणाय साध्यव्यापकतावच्छेदकप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वं निवेशितम्, स्वन्यूनवृत्तित्वं तु—स्वसामानाधिकरण्ये सति स्वाश्रयसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वमेव, स्वपदेन प्रतियोगिता ग्राह्या। तथा च गगनवाच्यत्वोभयत्वे स्व( प्रतियोगिता )सामानाधिकरण्यस्य प्रतियोगिताश्रयीभूतवाच्यत्वाधिकरणे गगनवाच्यत्वोभयाभावसत्त्वेन तत्प्रतियोगितावच्छेदकत्वस्य च सत्त्वेन तादृशोभयत्वस्य स्वन्यूनवृत्तिधर्मत्वेन तदनवच्छिन्नप्रतियोगितापदेन गगनवाच्यत्वोभयाभावीयप्रतियोगिताया धर्तुमशक्यतया व्यधिकरणधर्मावच्छिन्नाभावमादायैव लक्षणे सङ्गमनीये द्वितीयलक्षणानुसरणे बीजाभाव इति चेन्न—गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वकल्पे वह्निमान् धूमादित्यत्राव्याप्तेरेव बीजत्वात्, तथा हि—साध्यसमानाधिकरणा-

त्यन्ताभावप्रतियोगितानवच्छेदकत्वमेव साध्यव्यापकतावच्छेदकत्वम् , एवञ्च साध्याधिकरणे पर्वतादौ वर्तमानस्य घटत्वावच्छिन्नघटनिष्ठप्रतियोगिताकानास्तीत्याकाराभावस्य प्रतियोगितावच्छेदकत्वं लाघवाद् घटत्वे एवाभ्युपेयते इति घटत्वावच्छिन्नघटनिष्ठप्रतियोगितायास्तदनवच्छेदकत्वेन साध्यीभूतवह्निव्यापकतावच्छेदकतया तन्निरूपकस्य यावदन्तर्गतस्य घटाभावस्य प्रतियोगिना घटेन सामानाधिकरण्यविरहेणाव्याप्तिरिति ।

**न चेति ।** तथा च गगनवृत्तित्वविशिष्टवाच्यत्वाभावीयप्रतियोगिताया वैशिष्ट्यावच्छिन्नत्वेन गगनवाच्यत्वोभयाभावीयप्रतियोगितायाश्चोभयत्वात्मकव्यासज्यवृत्तिधर्मावच्छिन्नत्वेन न तादृशाभावानां लक्षणघटकत्वमिति भावः । व्यासज्यवृत्तित्वञ्च—एकत्वानवच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगित्वम् ।

दीधितौ—**यत्समानाधिकरणेति ।** षष्ठ्यन्तत्रयसमभिव्याहारेणाभावत्वं धर्मितावच्छेदकीकृत्य यत्सामानाधिकरण्य-साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वयोरन्वयः, यत्सामानाधिकरण्यतादृशप्रतियोगिताकत्वाभावत्वैतत्त्रितयधर्माणां धर्मितावच्छेदकीकृत्य यावत्त्वमन्वयः, यावत्त्वञ्च अनुयोगितावच्छेदकव्यापकत्वरूपम् । तादृशयावदभावमुद्दिश्य प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं विधीयते । वह्नित्वादिना घटाद्यभावमादाय वह्निमान् धूमादित्यादौ लक्षणं सङ्गमनीयम् । उभयत्वस्य साध्यव्यापकतावच्छेदकरूपाभावान्न गगनवाच्यत्वोभयाभावादेर्यावदन्तर्गतत्वम् ।

ननु प्रथमलक्षणोक्तरीतिं विहाय षष्ठ्यन्तत्वेन निवेशो व्यर्थ इति चेदत्रोच्यते—प्रतियोगिसमानाधिकरणतादृशाभावे किं हेतुसामानाधिकरण्यं विधीयते, हेतुसमानाधिकरणतादृशाभावे प्रतियोगिसामानाधिकरण्यं वा विधीयते इति सन्देहनिरासार्थं षष्ठ्यन्तत्वेन निवेश इति । केचित्तु यत्समानाधिकरणा निरुक्तयावन्तोऽभावाः प्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणा इत्युक्तौ विवक्षणीयहेत्वधिकरणावच्छेदेनेत्यस्य समानाधिकरणपदार्थैकदेशे सामानाधिकरण्येऽन्वयानुपपत्तिरतो षष्ठ्यन्ततयोक्तिरित्याहुः ।

अथ यत्समानाधिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताका यावन्तोऽभावाः प्रतियोगिवृत्तयस्तत्त्वमित्यस्यैव सम्यक्त्वे स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यनिवेशो व्यर्थ इति चेन्न—अभावप्रतियोगिकाभावाधिकरणकाभावस्याधिकरणस्वरूपत्वे गगनाभावभिन्नत्वम्

अभावत्वादित्यादावतिव्याप्तेः। केचित्तु अधिकरणभेदेनाभावस्य भिन्नत्वाद् वह्निमान् धूमादित्यादौ पर्वतरूपहेत्वधिकरणे वृत्तिर्यो वह्नित्वेन घटाभावः स न प्रतियोगिवृत्तिरित्यव्याप्तिभिया तन्निवेश इत्याहुः।

❀ जागदीशी ❀

**वह्निमान् धूमात्, सत्तावान् द्रव्यत्वादित्यत्राव्याप्तिः, साध्यव्यापकप्रतियोगिकानां जलत्वविशिष्टद्रव्यत्वाभाव-गुणत्वविशिष्टसत्ताद्यभावानां स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगितावच्छेदकीभूतजलत्वविशिष्टद्रव्यत्वत्वाद्यवच्छिन्नसामानाधिकरण्याभावादत उक्तम्—व्यापकतावच्छेदकरूपावच्छिन्नेति। तथा च जलत्वविशिष्टद्रव्यत्वत्वादेः साध्यव्यापकतानवच्छेदकत्वाददोषः।**

❀ दीपिका ❀

अथ साध्यव्यापकप्रतियोगिकयावदभावनिवेशेनैव सामञ्जस्ये व्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वनिवेशो व्यर्थ इत्यत आह—**वह्निमान् धूमादित्यादि**। तथा च तदनिवेशे जलवृत्तित्वविशिष्टद्रव्यत्वाभावादेः साध्यव्यापकीभूतद्रव्यत्वप्रतियोगिकतया यावदन्तर्गतत्वेन तत्र च प्रतियोगितावच्छेदकीभूतजलवृत्तित्वविशिष्टद्रव्यत्वत्वावच्छिन्नसामानाधिकरण्यविरहः, स्वविशिष्टहेत्वधिकरणे पर्वतादौ जलवृत्तित्वविशिष्टद्रव्यत्वस्यासत्त्वादिति वह्निमान् धूमादित्यादावव्याप्तिः, तन्निवेशे तु साध्याधिकरणे पर्वतादौ जलवृत्तित्वविशिष्टद्रव्यत्वाभावस्य सत्त्वेन तादृशद्रव्यत्वत्वस्य प्रतियोगितावच्छेदकतया साध्यव्यापकतावच्छेदकरूपत्वाभावेन तादृशद्रव्यत्वाभावस्य न लक्षणघटकत्वमिति भावः।

ननु साध्यतावच्छेदकसम्बन्धेन साध्यव्यापकता, तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य तेन सम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यमितिकल्पादरे साध्यव्यापकतावच्छेदकरूपावच्छिन्नत्वानिवेशेऽपि वह्निमान् धूमादित्यादौ नाव्याप्तिः, साध्यतावच्छेदकीभूतसंयोगसम्बन्धेन द्रव्यत्वस्य वह्निव्यापकत्वाभावेन निरुक्ताभावस्य लक्षणाघटकत्वादित्यत आह—**सत्तावानिति**।

केचित्तु—द्रव्यत्वं द्रव्येतरासमवेतमात्रम्, तथा च साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्य तादृशाभावे सत्त्वात्तादृशाभावमादायाव्याप्तिवारणासंभवः, अतः संयोगसम्बन्धेन साध्यतायामव्याप्तिमुक्त्वा समवायेन साध्यतायामव्याप्तिमाह—सत्तावान् द्रव्यत्वादितीत्याहुः। अत्र गुणवृत्तित्वविशिष्टसत्ताऽभावमादाया-

व्याप्तिरुपपादनीया, तादृशाभावप्रतियोगिन्याः सत्तायाः साध्यतावच्छेदकीभूत-समवायसम्बन्धेन साध्यव्यापकत्वात् ।

नन्वत्र रूपावच्छिन्नत्वानुपादाने जलवृत्तित्वविशिष्टवाच्यत्वाभावमादायासम्भव-सम्भवेऽव्याप्त्यभिधानं जगदीशस्यानुचितमिति चेन्न, साध्यतावच्छेदकसम्बन्धेन साध्यव्यापकतेत्यादिकल्पादरे कालो घटवान् महाकालत्वादित्यादौ अभावमात्रस्य साध्यतावच्छेदकीभूतकालिकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकर-ण्यसत्त्वेन लक्षणसमन्वयादिति ।

❀ जागदीशी ❀

यत्तु साध्यव्यापकप्रतियोगिकस्य घटत्वेन वह्न्यभावस्य यावद्धेत्वधि-करणे घटत्वावच्छिन्नसामानाधिकरण्याभावाद् व्यापकतावच्छेदकरूपावच्छि-न्नेति । तदत्यन्तमसत् । घटत्वेन वह्न्यभावस्यैव वह्नित्वेन घटाभाव-तया तस्यापि यावद्धेतुमति स्वप्रतियोगितावच्छेदकीभूतवह्नित्वावच्छिन्न-समानाधिकरणत्वात् ।

❀ दीपिका ❀

रूपावच्छिन्नत्वदलस्यान्यथा व्यावृत्तिमुपपादयतां मतं दूषयितुमुपन्यस्यति—यत्त्विति । व्यापकतावच्छेदकरूपावच्छिन्नेतीति । तथा च घटत्वस्य साध्य-व्यापकतावच्छेदकरूपत्वाभावान्न तादृशोऽभावो यावदन्तर्गत इत्यदोष इति भावः ।

दूषणप्रकारमाह—घटत्वेन वह्न्यभावस्यैवेति । समनियताभावस्यैकत्वादिति भावः । तस्यापि = घटत्वेन वह्न्यभावस्यापि । एवञ्च तदनिवेशेऽपि न घटत्वेन वह्न्यभावमादायाव्याप्तिरिति भावः ।

❀ चिन्तामणिः ❀

**प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदकः ।**

❀ दीधितिः ❀

**ज्ञेयत्वत्वादिना वाच्यत्वादीनामभावः सुलभ एव । शेषं दर्शितदिशाऽवसेयमत आह—प्रतियोग्यवृत्तिश्चेति ।**

## ❀ जागदीशी ❀

समवायित्वस्य वाच्यत्वव्यापकतानवच्छेदकत्वात्तदवच्छिन्नस्य वाच्यत्वाद्यभावस्य मूलोक्तस्यैतल्लक्षणाघटकत्वादाह—ज्ञेयत्वत्वादिनेति। शेषमित्यादि। येन सम्बन्धेन हेतुस्तेन सम्बन्धेन हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणवृत्तित्वमभावे ग्राह्यम्, तेनायमात्मा ज्ञानाद् घटान्यत्वे सति आत्मघटसंयोगाद्वेत्यादौ आत्मत्वसामान्याभावस्यातथात्वेऽपि नाव्याप्तिः। एवं येन सम्बन्धेन व्यापकता तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य स्वप्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं बोध्यम्, अतो न व्यधिकरणधर्मावच्छिन्नाभावस्यासत्त्वेऽपि व्यधिकरणसम्बन्धावच्छिन्नवाच्यत्वाद्यभावमादाय लक्षणसमन्वयसम्भवात् प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थावतारानुपपत्तिः, न वा जलत्वादेः समवायेन साध्यतायां महाकालत्वादावतिव्याप्तिः। प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं च स्वविशिष्टहेत्वधिकरणावच्छेदेन बोध्यम्, तेन द्रव्यं सत्त्वादित्यादौ द्रव्यत्वाभावस्य काले हेतुमति प्रतियोगिसामानाधिकरण्येऽपि नातिव्याप्तिः।

## ❀ दीपिका ❀

नन्वत्र लक्षणे समवायित्वेन वाच्यत्वाभावीयप्रतियोगितावच्छेदकीभूतसमवायित्वस्य वाच्यत्वादिरूपसाध्यव्यापकतावच्छेदकरूपत्वाभावाद् वाच्यत्वादिसाध्यकसद्धेतौ समवायित्वेन वाच्यत्वाभावस्य न लक्षणघटकता सम्भवति, तथा च तत्र साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभाव एव दुर्लभ इत्याह—**समवायित्वस्येति**। वाच्यत्वाधिकरणे सामान्यादौ वर्तमानस्य 'समवायी नास्ती'त्याकारकस्याभावस्य प्रतियोगितावच्छेदकमेव समवायित्वमिति प्रतियोगितानवच्छेदकत्वरूपव्यापकतावच्छेदकत्वस्याभाव इति भावः। दीधितौ—**वाच्यत्वादीनामिति**। अत्राऽदिपदेन घटादेः परिग्रहः। तथा च ज्ञेयत्वत्वादेः वाच्यत्वव्यापकतावच्छेदकतया तेन रूपेण वाच्यत्व-घटादीनामभावमादाय केवलान्वयिस्थले लक्षणं समन्वेयम्।

अत्रापि लक्षणे हेतुतावच्छेदकसम्बन्धेन हेतुतावच्छेदकावच्छिन्नाधिकरणं यत् तन्निरूपितवृत्तित्वात्मकमेव हेतुसामानाधिकरण्यमभावे ग्राह्यमित्याह—**येन सम्बन्धेन हेतुरिति**। तेन = हेतुतावच्छेदकसम्बन्धेन हेतुतावच्छेदकावच्छिन्नाधिकरणत्वविवक्षणेन। सम्बन्धनिवेशस्य फलमाह—**अयमात्मा ज्ञानादिति**।

अयमाशयः—हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणत्वानिवेशे विषयतया ज्ञानाधिकरणे घटादौ वर्तमानस्य साध्यव्यापकतावच्छेदकीभूताऽऽत्मत्वत्वावच्छिन्नप्रतियोगिताकाऽऽत्मत्वाभावस्य यावदन्तर्गतस्य आत्मत्वरूपप्रतियोगिसामानाधिकरण्यविरहाद् अयमात्मा ज्ञानादित्यत्राव्याप्तिः, तन्निवेशे तु हेतुतावच्छेदकीभूतसमवायसम्बन्धेन ज्ञानाधिकरणे आत्मनि आत्मत्वाभावस्यावर्तमानत्वेन न लक्षणघटकत्वमिति। हेतुतावच्छेदकधर्मावच्छिन्नत्वनिवेशफलमाह—**घटान्यत्वे सतीत्यादि**। तथा च हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणवृत्तित्वमात्रोक्तौ अयमात्मा घटान्यत्वे सति आत्मघटसंयोगाद्वेत्यत्राव्याप्तिः, विशिष्टस्य शुद्धानतिरेकितया समवायेन हेत्वधिकरणं घटोऽपि तत्र वर्तमानस्याऽऽत्मत्वसामान्याभावस्य यावदन्तर्गतस्य प्रतियोगिसामानाधिकरण्यविरहात्। तन्निवेशे तु हेतुतावच्छेदकीभूतघटान्यत्वविशिष्टाऽऽत्मघटसंयोगत्वावच्छिन्नाधिकरणमात्मा एव तत्राऽऽत्मत्वसामान्याभावस्यावर्तमानत्वेन न लक्षणघटकत्वमिति भावः।

एवं साध्यव्यापकता, अभावीयप्रतियोगिता, प्रतियोगिसामानाधिकरण्यघटकप्रतियोग्यधिकरणता चैकेनैव सम्बन्धेन विवक्षणीयेत्याह—**एवमिति। तत्सम्बन्धावच्छिन्नेति**। साध्यव्यापकतावच्छेदकसम्बन्धावच्छिन्नेत्यर्थः। प्रतियोगितायां साध्यव्यापकतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशफलमाह—**अतो नेति**। असत्त्वेऽपि = अनङ्गीकारेऽपि। व्यापकतावच्छेदकसम्बन्धेनैव प्रतियोग्यधिकरणत्वनिवेशफलमाह—**न वा जलत्वादेरिति**। तथा च तदनिवेशे जलत्वसामान्याभावादेः कालिकेन प्रतियोग्यधिकरणे महाकाले समवायसम्बन्धावच्छिन्नजलत्वाभावस्य स्वरूपेण सत्त्वाद् भवति जलत्वादिसाध्यकस्थलेऽतिव्याप्तिः, तन्निवेशे तु व्यापकतावच्छेदकीभूतसमवायेन प्रतियोगिनोऽधिकरणत्वस्य महाकालेऽसत्त्वेन न जलत्वाभावस्य हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यमिति नातिव्याप्तिरिति भावः।

**तेनेति**। हेत्वधिकरणावच्छेदेनेत्यस्य प्रवेशेनेत्यर्थः। तथा च तदप्रवेशे द्रव्यत्वाभावस्य काले प्रतियोगिसामानाधिकरण्येन द्रव्यं सत्त्वादित्यादावतिव्याप्तिः, तत्प्रवेशे तु हेत्वधिकरणीभूतगुणादौ द्रव्यत्वस्यासत्त्वान्न हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यमिति भावः।

**प्रतियोग्यवृत्तिश्चेति** चिन्तामणिः अत्रानुमानाकारस्तु—प्रतियोगिता

स्वाश्रयावृत्तिधर्मानवच्छिन्ना, प्रतियोगितावच्छेदकविशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकप्रकारतावच्छेदकानुयोगितानिरूपितत्वादिति ।

## ❀ जागदीशी ❀

इदन्त्ववधातव्यम् । साध्यवन्निष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकत्वरूपमेव व्यापकतावच्छेदकत्वमत्र पूर्वत्र च प्रवेश्यम् , न तु प्रतियोगिवैयधिकरण्यघटितम् , तथा सति व्यधिकरणधर्मावच्छिन्नाभावासत्त्वेऽपि सर्वं प्रमेयमित्याकारकयत्किञ्चिज्जन्यज्ञानविषयतासामान्याभावमादायैव सर्वत्र लक्षणसमन्वयसम्भवे प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थावतारानुपपत्तेः, जन्यज्ञानव्यक्तिविषयत्वस्य तादृशज्ञानदशायामेव सत्त्वेन तदसत्त्वदशायामेव तादृशज्ञानविषयत्वाभावस्य हेतुसमानाधिकरणत्वात् । एवञ्चात्र स्वविशिष्टपदं न कपिसंयोगाद्यात्मकं गगनत्वादिविशिष्टस्य वाऽभावमुपादाय कपिसंयोगाभाववान् मेयत्वादित्यादावव्याप्तिवारकम् , कपिसंयोगाभावत्वादेरुक्तव्यापकताऽनवच्छेदकत्वात् , किन्तु हेतुमति काले वर्तमानस्य सत्तासामान्याभावस्यापि निरुक्तरूपशालित्वात्तस्य चाऽत्मादावसत्त्वेन यावद्धेत्वधिकरणे प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यविरहात् सत्तावान् द्रव्यत्वादित्यादावव्याप्तिवारकमेव स्वविशिष्टपदम् ।

## ❀ दीपिका ❀

**प्रतियोगिवैयधिकरण्येति ।** स्वावच्छिन्नानधिकरणीभूतसाध्याधिकरणवृत्त्यभावीयप्रतियोगितावच्छेदकं यद्यत् तद्भिन्नत्वरूपमित्यर्थः । अत्र स्वपदेन प्रतियोगितावच्छेदकीभूतधर्मो ग्राह्यः । तथा सति = प्रतियोगिवैयधिकरण्यघटितव्यापकतावच्छेदकत्वप्रवेशे । तथा च तादृशजन्यज्ञानविषयतात्वावच्छिन्नाधिकरणमेव साध्याधिकरणमिति साध्याधिकरणवृत्त्यभावो न तादृशविषयत्वाभावोऽपि तु अवृत्तिगगनाद्यभाव एव तदीयप्रतियोगितावच्छेदकभिन्नत्वस्य तादृशविषयतात्वे सत्त्वेन तादृशविषयत्वाभावस्य यावदन्तर्गतत्वमिति भावः । तादृशज्ञानदशायामेव='सर्वं प्रमेयमि'त्याकारकयत्किञ्चिज्जन्यज्ञानदशायामेव, विषयताया ज्ञानसमानकालीनत्वात् । तथा च हेत्वधिकरणे घटादौ तादृशविषयतायास्तदभावस्य च सत्त्वेन प्रतियोगिसामानाधिकरण्याद् वाच्यं ज्ञेयत्वादित्यादौ लक्षणसमन्वयसम्भवे 'प्रतियोग्यवृत्तिश्चे'तिग्रन्थावतारानुपपत्तिः स्पष्टैव । प्रतियोगिवैयधिकरण्याघटितव्यापकतावच्छेदकतायाः प्रवेशे

तु साध्याधिकरणीभूतघटादौ तादृशज्ञानशून्यकाले तादृशज्ञानविषयत्वाभावस्य सत्त्वेन तादृशविषयतात्वस्य प्रतियोगितावच्छेदकतया न व्यापकतावच्छेदकत्वमिति ज्ञेयत्वत्वादिना वाच्यत्वाद्यभावमादायैव लक्षणस्य सङ्गमनीयत्वे तद्ग्रन्थावतरणमुपपद्यत इति। **एवञ्चेति।** प्रतियोगिवैयधिकरण्याघटितस्यैव व्यापकतावच्छेदकत्वस्य प्रवेशे चेत्यर्थः। **उक्तव्यापकतेति।** प्रतियोगिवैयधिकरण्याघटितव्यापकतेत्यर्थः। तथा च वाच्यत्वाधिकरणे द्रव्ये वर्तमानस्य कपिसंयोगाभावाभावस्य गगनाभावस्य वा प्रतियोगितावच्छेदकमेव कपिसंयोगाभावत्वं गगनत्वं वेति न तदवच्छिन्नाभावस्य लक्षणघटकत्वमिति भावः। **निरुक्तरूपेति।** साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वादिरूपेत्यर्थः। तथा च सत्ताधिकरणे गुणादौ सत्ताऽभावस्याविद्यमानतया वर्तमानस्य घटाद्यभावस्य प्रतियोगितानवच्छेदकं सत्तात्वमिति भावः।

## ❀ जागदीशी ❀

**न च साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकयत्किञ्चिदभावो यद्धेत्वधिकरणावच्छेदेन स्वावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणस्तत्त्वमित्येव सम्यक्, वाच्यत्वत्वादिना घटाद्यभावमादायैव वाच्यं ज्ञेयत्वादित्यादौ लक्षणसमन्वयादिति वाच्यम्—स्वरूपसम्बन्धेन प्रमेयत्वावच्छिन्नाभावाप्रसिद्ध्या प्रमेयवान् ज्ञेयत्वादित्यादावव्याप्तेः, गुरुधर्मावच्छिन्नप्रतियोगित्वाप्रसिद्ध्या प्रमेयवह्निमान् धूमादित्यादावव्याप्तेः, वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकतया गोमांश्चैत्रत्वादित्यादौ स्वामित्वादिसम्बन्धेन गवादेः साध्यतायामव्याप्तेश्चेति दिक्।**

## ❀ दीपिका ❀

प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं प्रतियोगिनश्चाधिकरणं तेनैव सम्बन्धेनेति मत्वा स्वविशिष्टपदस्य वैयर्थ्यं शङ्कते—**न चेति।** अस्य वाच्यमिति परेणान्वयः। साध्यतावच्छेदकसम्बन्धेनेत्यत्र तृतीयार्थोऽवच्छिन्नत्वम्, तस्य च प्रतियोगितायामन्वयः। स्वावच्छेदकसम्बन्धेन = प्रतियोगितावच्छेदकसम्बन्धेन, साध्यतावच्छेदकसंसर्गेणेति फलितोऽर्थः। एवञ्च समवायसम्बन्धावच्छिन्नसत्तात्वावच्छिन्नप्रतियोगिताकसत्तासामान्याभावस्य हेतुसामानाधिकरण्यविरहेण लक्षणाघटकतया सत्तावान् द्रव्यत्वादित्यादावव्याप्तिविरहेण स्वविशिष्टपदं व्यर्थम्, कपिसंयोगाभाव-

वान् मेयत्वादित्यादौ कपिसंयोगात्मकसाध्याभावस्य लक्षणघटकत्वेऽपि द्रव्यावच्छेदेन प्रतियोगिसामानाधिकरण्यसत्त्वादेव नाव्याप्तिरिति भावः। वाच्यत्वत्वेन घटाद्यभावमादाय लक्षणस्य सङ्गमनीयत्वे तद्ग्रन्थावतारानुपपत्तिरपि नेति।

निषेधति—**स्वरूपसम्बन्धेनेति**। सुबोधोऽयं ग्रन्थः।

## ❀ जागदीशी ❀

ननु वह्नित्वेन धूमवद्वृत्तिसामान्याभावो धूमीयसंयोगेन द्रव्यसामान्याभावो वा धूमाभाव एव, तथाऽयोगोलकभेदतदभावान्यतरत्वेनायोगोलकान्यवृत्तेरभावोऽयोगोलकान्यत्वनिरूपितस्वरूपसम्बन्धेन भेदसामान्याभावो वाऽयोगोलकान्यत्वाभाव एव, समनियताभावानामैक्यात्, तथा च धूमाद्यभावस्य प्रतियोगितावच्छेदकं यद्वह्नित्वादिकं तदवच्छिन्नेन समं यावद्धेत्वधिकरणे धूमाद्यभावस्य प्रतियोगिसमानाधिकरणत्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिः, सामान्यधर्मेण विशेषाभावाभ्युपगमे तु सुतरां तथा, धूमत्वेन धूमाद्यभावानामेव प्रमेयत्वेन धूमाद्यभावतया तस्य च प्रतियोगितावच्छेदकीभूतप्रमेयत्वावच्छिन्नसमानाधिकरणत्वादिति चेत्—अत्रापि यावत्त्वस्य फलतः प्रतियोगिताविशेषणत्वेन साध्यव्यापकतावच्छेदकरूपावच्छिन्नयद्यत्प्रतियोगिताको यत्समानाधिकरणोऽभावः स्वविशिष्टहेत्वधिकरणावच्छेदेन तत्तत्प्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणस्तत्त्वं पर्य्यवसितार्थः। तथा च धूमादिनिष्ठतादृशधूमत्वाद्यवच्छिन्नप्रतियोगिताकाभावस्य धूमादिनिष्ठं यत्प्रतियोगित्वं तदवच्छेदकीभूतधूमत्वाद्यवच्छिन्नेन समं हेत्वधिकरणावच्छेदेन सामानाधिकरण्यविरहान्नातिप्रसङ्ग इति सम्प्रदायः।

## ❀ दीपिका ❀

समनियताभावानामैक्यमते धूमवान् वह्नेरित्यादावतिव्याप्तिमाशङ्कते—**नन्विति**। वह्नित्वेन धूमवद्वृत्तिसामान्याभावादेः यावति धूमसामान्याभावाधिकरणेऽयोगोलकादौ सत्त्वेन धूमसामान्याभावसमनियतत्वम्। धूमीयसंयोगेनेत्यस्य धूमप्रतियोगिकसंयोगेनेत्यर्थः। तदभावेत्यस्यायोगोलकभेदाभावेत्यर्थः। वह्नित्वादिकमित्यत्रादिपदेन द्रव्यत्व-अयोगोलकभेदतदभावान्यतरत्व-भेदत्वानां ग्रहणम्। सुतरां तथा=अतिव्याप्तिः। अन्यत् स्पष्टम्। अतिव्याप्तिं निराकरोति—**अत्रापीति**। द्वितीयलक्षणेऽपीत्यर्थः। समनिय-

साभावानामैक्येऽपि अवच्छेदकभेदेन प्रतियोगिताया भिन्नत्वान्नातिव्याप्तिरिति भावः ।

## ❀ जागदीशी ❀

वस्तुतोऽत्रापि साध्यव्यापकतावच्छेदकरूपावच्छिन्नायाः स्वन्यूनवृत्तिधर्मानवच्छिन्नयादृशप्रतियोगितायाः निरूपकोऽभावः स्वविशिष्टहेत्वधिकरणावच्छेदेन तादृशप्रतियोगितायां यदवच्छेदकं तदवच्छिन्नसामानाधिकरण्यं वक्तव्यम्, धूमत्वादिना धूमाद्यभावस्तु न प्रमेयत्वादिना धूमाद्यभावः, सामान्यधर्मेण विशेषाभावानभ्युपगमात्, तदभ्युपगमे तु यादृशप्रतियोगिताकाभावे तादृशप्रतियोगितावच्छेदकावच्छिन्नत्रद्वृत्तित्वस्य जगद्वृत्तिभिन्नत्वस्य च द्वयोर्व्यतिरेकः साध्यव्यापकतावच्छेदकरूपावच्छिन्नतादृशप्रतियोगिताकाभावानां तादृशप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं वाच्यमतो न कश्चिद्दोष इति ध्येयम् ।

## ❀ दीपिका ❀

स्वमतेऽतिव्याप्तिं निराकरोति—**वस्तुत इति** । साध्यव्यापकतावच्छेदकरूपावच्छिन्नायां प्रतियोगितायां प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यघटकप्रतियोगितायाञ्च स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वनिवेशने जगदीशस्य तात्पर्यम् । तथा च यत्समानाधिकरणसाध्यव्यापकतावच्छेदकरूपावच्छिन्नस्वन्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगिताको यावदभावः स्वविशिष्टहेत्वधिकरणावच्छेदेन स्वन्यूनवृत्तिधर्मानवच्छिन्नस्वीयप्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणस्तत्त्वमिति पर्यवसितोऽर्थः । अत्र द्वितीयप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वनिवेशेन मूलोक्तातिव्याप्तिवारणम्, तथा हि स्वन्यूनवृत्तित्वञ्च—स्वसमानाधिकरणत्वे सति स्वाश्रयसमानाधिकरणभेदप्रतियोगितावच्छेदकतावच्छेदकत्वम्, तच्च संसर्गसाधारणम्, धर्मपदन्तु स्वरूपकीर्तनपरम् । एवञ्च धूमप्रतियोगिकसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकद्रव्यसामान्याभावीयप्रतियोगितासामानाधिकरण्यस्य, तादृशप्रतियोगित्वाश्रयाधिकरणीभूतघटादौ 'धूमप्रतियोगिकसंयोगसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकद्रव्यवान्'त्याकारकभेदस्य वर्तमानत्वेन तादृशप्रतियोगितावच्छेदकतावच्छेदकत्वस्य च द्रव्यत्वादौ सत्त्वेन तदनवच्छिन्नत्वस्य तत्प्रतियोगितायामसत्त्वेन न द्रव्यत्वावच्छिन्नसामानाधिकरण्यमादाय धूमवान् वह्नेरित्यादावतिव्याप्तिः । एवं वह्नित्वेन धूमवद्वृत्त्यभावीयप्रतियोगितायाः स्वन्यूनवृत्तिवह्नित्वावच्छिन्नत्वेन तदनव-

च्छिन्नत्वाभावेन न तादृशप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यमादाय निरुक्तातिव्याप्तिः। प्रथमप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वानिवेशे वह्नित्वेन धूमवद्वृत्त्यभावस्यापि यावदन्तर्गततया तन्निरूपितस्वन्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगिताया अप्रसिद्ध्या वह्निमान् धूमादित्यादावव्याप्तिः, तन्निवेशे तु निरुक्ताभावस्य स्वन्यूनवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वेन न लक्षणघटकत्वमिति।

ननु स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वमित्यस्य स्वन्यूनवृत्तिधर्मभिन्ननिष्ठावच्छेदकतानिरूपितत्वमित्यर्थो वाच्यः, तथा च तद्वह्निमद्वृत्तिवाच्यत्वप्रतियोगिकस्वरूपसम्बन्धेन वाच्यत्वाभावस्य स्वन्यूनवृत्तिधर्मभिन्नतादृशसम्बन्धनिष्ठावच्छेदकताकप्रतियोगिताकतया यावदन्तर्गतस्य वाच्यत्वरूपप्रतियोगिसामानाधिकरण्यविरहाद् वह्निमान् धूमादित्यत्राव्याप्तिः, धूमवान् वह्नेरित्यादौ धूमप्रतियोगिकसंयोगेन प्रमेयाभावीयप्रतियोगितामादायातिव्याप्तिश्चेति चेन्न-स्वन्यूनवृत्तिधर्मनिष्ठावच्छेदकत्वानिरूपकत्वार्थकस्यैव स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वस्य प्रतियोगिताद्वये निवेशात्।

अथैवमपि धूमत्वेन धूमाभाव एव प्रमेयत्वेन धूमाभाव इति हेतुसमानाधिकरणधूमाभावे स्वन्यूनवृत्तिधर्मानवच्छिन्नप्रतियोगिताक–प्रमेयत्वेन धूमाभावीयप्रतियोगितावच्छेदकीभूतप्रमेयत्वावच्छिन्नसामानाधिकरण्यसत्त्वाद् धूमवान् वह्नेरित्यत्रातिव्याप्तितादवस्थ्यमित्यत आह—**धूमत्वादिनेति**। प्रमेयत्वादिना धूमाद्यभावस्वरूपत्वानङ्गीकारे हेतुमाह—**सामान्यधर्मेणेति**। **तदभ्युपगम इति**। सामान्यरूपेण विशेषाभावाभ्युपगमे इत्यर्थः। एवञ्च धूमत्वावच्छिन्नधूमनिष्ठप्रतियोगिताकधूमाभावे तादृशप्रतियोगितावच्छेदकीभूतधूमत्वावच्छिन्नवन्महानसादिवृत्तित्वाभावप्रयुक्तोभयाभावसत्त्वात्तादृशप्रतियोगितावच्छेदकीभूतं धूमत्वमेव न प्रमेयत्वमिति धूमत्वावच्छिन्नसामानाधिकरण्यविरहान्नातिव्याप्तिरिति। अत्र धूमसामान्याभावस्य यावदन्तर्गतत्वसम्पादनाय तादृशप्रतियोगितावच्छेदकावच्छिन्नवद्वृत्तित्वनिवेशः। व्यधिकरणधर्मावच्छिन्नाभावसङ्ग्रहाय जगद्वृत्तिभिन्नत्वनिवेशः।

अथ यादृशप्रतियोगिताकाभावे तादृशप्रतियोगितावच्छेदकावच्छिन्नवद्वृत्तित्वविशिष्टजगद्वृत्तिभिन्नत्वाभावनिवेशेनैव सामञ्जस्ये उभयाभावनिवेशो व्यर्थः। न च विशिष्टाभावे उभयाभावापेक्षया किं लाघवम्, फलतो वैशिष्ट्यात्मकसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावनिवेशे गौरवमेवेति वाच्यम्—'गगनं द्वौ' इति प्रतीतेरनुदयेन उद्देश्यतावच्छेदकव्याप्यपर्याप्तित्वेन द्वित्वप्रतियोगिक-

पर्य्याप्तेः संसर्गता कल्प्यते, अन्यथा शुद्धपर्याप्तित्वेन सम्बन्धत्वे उभयत्वस्य प्रत्येकानतिरिक्तघटगगनोभयस्मिन् पर्याप्तिसत्त्वेन केवलगगनेऽपि द्वित्वपर्य्याप्तिसत्त्वेन 'गगनं द्वौ' इति प्रतीत्यापत्तेः। एवञ्च उभयाभावनिवेशे उद्देश्यतावच्छेदकव्याप्यत्वस्य संसर्गतावच्छेदकतया भानाद् विशिष्टाभावापेक्षया गौरवादिति चेन्न—स्वावच्छेदकावच्छिन्नवद्वृत्तित्व-तदन्यत्वोभयाभावनिवेशेन विशिष्टाभावनिवेशापेक्षया गौरवानवकाशेनोभयाभावनिवेशस्य ग्रन्थकृतस्तात्पर्यविषयत्वात्। अन्यथा प्रमेयत्वेन गगनाभावमादाय लक्षणसमन्वयसम्भवे 'प्रतियोग्यवृत्तिश्चे'त्यादिग्रन्थानुत्थितिप्रसङ्गात्, गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वकल्पे वाच्यं ज्ञेयत्वादित्यादौ तादृशाभावाप्रसिद्ध्याऽव्याप्तिप्रसङ्गाच्चेति दिक्।

इति यतीन्द्रस्वामिरामप्रपन्नाचार्यविरचितायां दीपिकायां व्यधिकरणधर्मावच्छिन्नाभावीयद्वितीयलक्षणव्याख्यानं समाप्तम्।



❀ दीधितिः ❀

केचित्तु व्याप्यवृत्तेर्हेतुसमानाधिकरणस्य साध्याभावस्य प्रतियोगिताया अनवच्छेदकं, हेतुसमानाधिकरणस्य व्याप्यवृत्तेः प्रतियोगिव्यधिकरणस्य वाऽभावस्य प्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः।

❀ जागदीशी ❀

चक्रवर्तिलक्षणान्याह—केचित्त्विति। अनवच्छेदकमिति यत्साध्यतावच्छेदकमिति परेणान्वितम्। घटत्वादिना वह्न्याद्यभावमादाय वह्निमान् धूमादित्यादौ लक्षणसङ्गतिः। व्यभिचारिणि तु हेतुसमानाधिकरणस्य साध्यसामान्याभावस्यैव प्रतियोगितावच्छेदकं साध्यतावच्छेदकमतो नातिव्याप्तिः। कपिसंयोगी तत्त्वादित्यादौ हेतुसमानाधिकरणकपिसंयोगाभावस्य प्रतियोगितावच्छेदकं कपिसंयोगत्वमित्यव्याप्तिरतो व्याप्यवृत्तेरिति। तथा च कपिसंयोगाभावस्य व्याप्यवृत्तित्वविरहाद् घटत्वेन कपिसंयोगाभावमादाय लक्षणसमन्वयः। वह्नित्वादिना घटादेरभावमादायाव्याप्तिरतः साध्येति। अत्र प्रतियोगिता साध्यतावच्छेदकसम्बन्धेन ग्राह्या, तेन समवायादिसम्बन्धेन वह्न्याद्यभावस्य हेतुसमानाधिकरणस्य प्रतियोगितावच्छेदकत्वेऽपि वह्नित्वादेर्नासम्भवः। प्रतियोगिवैयधिकरण्यप्रवेशे वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः, प्रतियोगिव्यधिकरणसाध्याभावाप्रसिद्धेरतस्तत्परित्यागः।

❀ दीपिका ❀

**परेणान्वितमिति**। तथा च व्याप्यवृत्तिहेतुसमानाधिकरणसाध्याभावप्रतियोगितानवच्छेदकीभूतसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति चक्रवर्तिप्रथमलक्षणम्। लक्षणं सङ्गमयति—**घटत्वादिनेति**। तथा च घटत्वेन वह्न्यभावस्य व्याप्यवृत्तेर्हेतुसमानाधिकरणस्य प्रतियोगितावच्छेदकं घटत्वम्, अनवच्छेदकं वह्नित्वम्, तदवच्छिन्नसामानाधिकरण्यस्य धूमहेतौ सत्त्वाल्लक्षणसमन्वयः। अत्रातिव्याप्तिरपि नेत्याह—**व्यभिचारिणीति**। धूमवान् वह्नेरित्यादावित्यर्थः। साध्यसामान्याभावस्य = धूमसामान्याभावादेः, साध्यतावच्छेदकम् = धूमत्वादिकम्।

तथा च हेतुसमानाधिकरणस्य धूमाभावस्य प्रतियोगितावच्छेदकमेव धूमत्वमिति नातिव्याप्तिः ।

साध्याभावे व्याप्यवृत्तित्वनिवेशफलमाह—**कपिसंयोगीति** । तत्त्वात् = एतद्वृक्षत्वात् । साध्याभावघटकसाध्यनिवेशफलमाह—**वह्नित्वादिनेति** । साध्यपदप्रवेशाभावे वह्नित्वादिना घटाभावादेरपि व्याप्यवृत्तितया हेतुसमानाधिकरणतया च लक्षणघटकत्वेन तत्प्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदकीभूतवह्नित्वे सत्त्वाद् भवति वह्निमान् धूमादित्यादावव्याप्तिः, तन्निवेशे तु तादृशाभावस्य साध्याभावत्वाभावान्न लक्षणघटकत्वमित्यभिप्रायः ।

अथासम्भवसम्भवेऽव्याप्त्यभिधानं ग्रन्थकृतोऽनुचितमिति चेन्न-प्रमेयवान् वाच्यत्वादित्यत्र लक्षणसमन्वयात् । न च तत्रापि प्रमेयत्वेन घटाद्यभावमादायाव्याप्तिरिति वाच्यम्, सामान्यरूपेण विशेषाभावानङ्गीकारात् ।

केचित्तु कालिकेन प्रमेयस्य साध्यतायां महाकालत्वहेतौ घटत्वेन पटाद्यभावमादाय लक्षणसमन्वयान्नासंभवः, कालिकेन गगनादेर्वृत्तित्वनये हेत्वधिकरणे प्रमेयत्वेन कस्याप्यभावस्यासत्त्वात् । अत्र प्रतियोगितायां स्वसमानाधिकरणस्वावच्छेदकावच्छिन्नवद्वृत्त्यभावीयत्वाभाववत्त्वं निवेशनीयम्, तेनांऽशिकव्यधिकरणधर्मावच्छिन्नाभावमादाय न दोष इत्याहुः ।

ननु समवायादिना वह्न्याद्यभावस्य हेतुसमानाधिकरणतया लक्षणघटकस्य प्रतियोगितावच्छेदकमेव वह्नित्वादिकमिति वह्निमान् धूमादित्यादौ सर्वत्रासंभव इत्यत आह—**अत्र प्रतियोगितेति** । तेन = साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वनिवेशेन । **नासम्भव इति** । समवायेन वह्न्यभावस्य साध्यतावच्छेदकीभूतसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकत्वाभावेन लक्षणाघटकतया संयोगसम्बन्धेन घटत्वेन वह्न्यभावमादाय लक्षणसङ्गतेः ।

ननु समवायघटितसामानाधिकरण्येन दधित्वविशिष्टप्रमेयवान् स्थूलदधित्वादित्यत्र स्वरूपसमवायसंयोगादितत्तत्सम्बन्धेन दधित्वविशिष्टप्रमेयस्य हेत्वधिकरणे वर्तमानतया साध्याभावस्य हेतुसामानाधिकरण्यविरहेणाभावान्तरमादाय लक्षणसमन्वयात् कथमसम्भवः । न च विषयित्वप्रकारित्वादितत्तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावमादायाव्याप्तिरिति वाच्यम्—तत्सम्बन्धस्य वृत्त्यनियामकतया तेन सम्बन्धेनाभावस्याप्रसिद्धेरिति चेन्न, विशेषरूपेण संसर्गतास्वीकारे दध्यन्तरानुयोगिकसमवायेन साध्याभावस्य हेतुसमानाधिकरणतयाऽसम्भवस्योक्तत्वादिति ।

ननु साध्याभावे प्रतियोगिवैयधिकरण्यनिवेशेनैव कपिसंयोगी एतद्वृक्षत्वादित्यादौ कपिसंयोगाभावस्य ग्रहीतुमशक्यतया व्याप्यवृत्तित्वनिवेशनं विफलमित्यत आह—प्रतियोगिवैयधिकरण्येति । अव्याप्तिप्रकारमाह—प्रतियोगिव्यधिकरणेति । केवलान्वयिस्थले व्यधिकरणधर्मावच्छिन्नसाध्याभावमादायैव लक्षणस्य सङ्गमनीयत्वे तादृशाभावस्य प्रतियोगिव्यधिकरणत्वाभावादप्रसिद्धिनिबन्धनाऽव्याप्तिः स्यादिति भावः।

ननु घटत्वेन वह्न्यभावस्यापि प्रतियोगिव्यधिकरणत्वाभावाद् वह्निमान् धूमादित्यत्राप्यव्याप्तिसम्भवे स्थलान्तरानुधावनं व्यर्थमिति चेन्न—महानसीयवह्न्यभावमादाय तत्र लक्षणसमन्वयात् । अथैवमपि यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकत्वस्योक्तौ केवलान्वयिस्थलेऽव्याप्तिवारणसम्भवे व्याप्यवृत्तित्वनिवेशो व्यर्थ एवेति चेन्न, तथा सति वह्नित्वेन घटाभावादेर्लक्षणाघटकतया दीधितिकारोक्तसाध्यपदवैयर्थ्यापत्तेः । न च स्वाश्रयवृत्तिस्वावच्छेदकावच्छिन्नाधिकरणिका यावत्यः प्रतियोगितास्तदन्यसाध्यनिष्ठप्रतियोगित्वस्य प्रतियोगित्वान्तार्थकत्वे न साध्यपदवैयर्थ्यमिति वाच्यम्, निरुक्तव्याप्यवृत्तित्वापेक्षया गौरवेण तत्परित्यागात् । तत्परित्यागः = प्रतियोगिवैयधिकरण्यत्यागः ।

## ❀ जागदीशी ❀

व्याप्यवृत्तित्वन्तु—निरवच्छिन्नहेत्वधिकरणवृत्तिकत्वम्, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्त्यभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यदभावव्यक्तित्वं तत्त्वं वा । एवञ्चैतल्लाभार्थमेव हेतुसमानाधिकरणस्येत्युक्तम्, न तु स्वातन्त्र्येण तद्विशेषणं वैयर्थ्यात् । यत्किञ्चित्त्वनिवेशाच्च संयोगाभावत्वस्य हेत्वधिकरणीभूतद्रव्यनिष्ठाभावप्रतियोगितावच्छेदकत्वेऽपि संयोगि सत्त्वादित्यादौ नातिव्याप्तिः ।

## ❀ दीपिका ❀

अथ कपिसंयोगी सत्त्वादित्यादौ अतिव्याप्तिः, कपिसंयोगसामान्याभावस्य द्रव्ये सावच्छिन्नवृत्तिकतया सावच्छिन्नवृत्तिकान्यत्वरूपव्याप्यवृत्तित्वविरहेण लक्षणाघटकतया घटत्वेन कपिसंयोगाभावस्यैव लक्षणघटकतया तदीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादित्यत आह—व्याप्यवृत्तित्वन्त्विति । क्वचित् 'हेत्वधिकरणे निरवच्छिन्नवृत्तित्व'मिति पाठः । न च निरवच्छिन्नवृत्तित्वमेव व्याप्यवृत्तित्वमुच्यताम्, हेत्वधिकरणपदप्रक्षेपो व्यर्थ इति वाच्यम्, कपिसंयोगाभावस्यापि गुणादौ निरवच्छिन्नवृत्तिकतया लक्षणघटकतया तदीयप्रतियोगितावच्छेदक-

त्वस्यैव साध्यतावच्छेदके सत्त्वेन कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिः, तन्निवेशे तु हेत्वधिकरणे एतद्वृक्षे कपिसंयोगसामान्याभावस्य सावच्छिन्नवृत्तिकतया नाव्याप्तिः ।

अथैवमपि विशिष्टसत्ताऽभाववान् गुणत्वादित्यादावव्याप्तिः, साध्याभावस्य सत्तारूपतया निरवच्छिन्नहेत्वधिकरणवृत्तिकतया लक्षणघटकत्वेन तदीयप्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वादिति चेन्न—हेत्वधिकरणनिरूपितवृत्तितावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितानवच्छेदकत्वस्यैव विवक्षणात्, साध्याभावस्य सत्तात्मकतया गुणवृत्तित्वेऽपि विशिष्टसत्ताभावाभावत्वरूपानुयोगिताया हेत्वधिकरणीभूतगुणनिरूपितवृत्तितानवच्छेदकत्वेन घटाद्यभावत्वरूपानुयोगितामादाय लक्षणसमन्वयात् । ननु संयोगिभिन्नं सत्त्वादित्यादौ व्यभिचारिणि साध्यसामान्याभावस्य संयोगादेर्हेत्वधिकरणद्रव्यनिरूपितनिरवच्छिन्नवृत्तित्वविरहादभावान्तरमादायातिव्याप्तिः, एवं गगनाभावस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावे स्वरूपेण साध्ये आत्मत्वहेतावव्याप्तिश्च, गगनाभावात्मकसाध्यसामान्याभावस्यापि हेत्वधिकरणे निरवच्छिन्नवृत्तिकत्वात्, वृत्तिमात्रस्य अव्याप्यवृत्तित्वनये हेत्वधिकरणनिरूपितनिरवच्छिन्नवृत्तित्वाप्रसिद्ध्याऽसम्भवश्चेत्यतोऽनुयोगिताघटितकल्पान्तरमाह—**हेत्वधिकरणीभूतेत्यादिना** । तथा च यत्किञ्चिद्धेत्वधिकरणे वृत्तो संयोगिभेदाभावव्यक्तेः सत्त्वात् संयोगिभेदाभावव्यक्तिर्नास्तीत्याकारकोऽभावो नास्ति, अपि तु घटाद्यभाव एव, तदीयप्रतियोगितानवच्छेदकत्वस्य संयोगिभेदाभावव्यक्तित्वे सत्त्वेन संयोगिभेदाभावस्य लक्षणघटकत्वेन तदीयप्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वात् संयोगिभिन्नं सत्त्वादित्यादौ नातिव्याप्तिः । एवमन्यत्राप्यूह्यम् । **वैयर्थ्यादिति** । वह्निमान् धूमादित्यत्र हेत्वधिकरणपर्वतादौ वर्तमानस्य वह्न्यभावव्यक्तिर्नास्तीत्याकारकाभावस्य प्रतियोगितावच्छेदकत्वस्यैव वह्न्यभावव्यक्तित्वे सत्त्वेन वह्निसामान्याभावस्य निरुक्तव्याप्यवृत्तित्वविरहादेव लक्षणघटकत्वाभावे सिद्धे स्वातन्त्र्येण हेतुसामानाधिकरण्यप्रवेशो व्यर्थ एवेति भावः । **यत्किञ्चित्त्वनिवेशाच्चेति** । तदनिवेशे हेत्वधिकरणीभूतद्रव्ये संयोगाभावव्यक्तिर्नास्तीत्याकारकाभावस्यापि वर्तमानत्वेन तत्प्रतियोगितावच्छेदकत्वस्यैव संयोगाभावव्यक्तित्वे सत्त्वेन संयोगाभावस्य निरुक्तव्याप्यवृत्तित्वविरहेणाभावान्तरमादाय संयोगि सत्त्वादित्यादावतिव्याप्तिः, तन्निवेशे तु यत्किंचित्पदेन गुणादिकमादाय तन्निष्ठाभावो न संयोगाभावव्यक्त्यभावः अपि तु घटाद्यभाव एव तत्प्रतियोगितानवच्छेदकत्वस्य संयोगाभावव्यक्तित्वे सत्त्वात् संयोगाभाव-

स्य निरुक्तव्याप्यवृत्तित्वसत्त्वाज्जातिव्याप्तिरिति भावः। न चैवमपि यत्किंचिन्मध्यान्तर्गतद्रव्यरूपहेत्वधिकरणमादायातिव्याप्तितादवस्थ्यमिति वाच्यम्, हेत्वधिकरणविशिष्टो यो धर्मस्तद्धर्मवत्त्वस्य साध्याभावे विवक्षणात्, वै० च स्ववृत्त्यभावीयप्रतियोगितावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन, प्रतियोगितावत्ता च स्वसामानाधिकरण्यस्वावच्छेदकत्वोभयसम्बन्धेन। एवञ्च संयोगि सत्त्वादित्यादौ हेत्वधिकरणगुणादिविशिष्टो धर्मः संयोगसामान्याभावनिष्ठं तद्व्यक्तित्वम्, स्व(गुणादि)वृत्त्यभावो गुणत्वाद्यभावाभावस्तादृशाभावीयप्रतियोगित्ववत्त्वसम्बन्धावच्छिन्नस्व(गुणत्वाभावनिष्ठतद्व्यक्तित्व)निष्ठावच्छेदकताकप्रतियोगिताकभेदस्य संयोगाभावनिष्ठतद्व्यक्तित्वे सत्त्वात्, स्वसामानाधिकरण्यस्वावच्छेदकत्वोभयसम्बन्धेन प्रतियोगितावत्ता च गुणत्वाभावनिष्ठतद्व्यक्तित्वे वर्तते न तु संयोगाभावनिष्ठतद्व्यक्तित्वे इति तादृशधर्मवत्संयोगाभावमादायातिव्याप्तिवारणसंभव इति। भट्टाचार्य्यास्तु—एतादृशपरम्परायाः संसर्गत्वानभ्युपगमे हेत्वधिकरणवृत्त्युभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपिता सती निरूपितत्वसम्बन्धावच्छिन्नवृत्तित्वत्वावच्छिन्नावच्छेदकतानिरूपकाभावत्वावच्छिन्नावच्छेदकतानिरूपकप्रतियोगितात्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपिता सती सामानाधिकरण्यनिष्ठावच्छेदकतानिरूपिकाऽवच्छेदकतात्वावच्छिन्नाऽवच्छेदकताकप्रतियोगिताकाभाववान् यो धर्मस्तद्धर्मवत्त्वं व्याप्यवृत्तित्वमिति कृत्वा न दोष इत्याहुः।

ननु यत्किंचित्पदानुपादाने धूमवान् वह्नेरित्यादावतिव्याप्तिसंभवे स्थलान्तरानुधावनं व्यर्थमिति चेन्न, व्याप्यवृत्तित्वघटकविशेषणेनाव्याप्यवृत्तिसाध्यकस्थले एवातिव्याप्तिवारणस्योचितत्वात्।

वस्तुतस्तु हेत्वंशे यत्किंचित्त्वनिवेशेनापि धूमवान् वह्नेरित्यत्रातिव्याप्तिवारणसंभवात् अधिकरणांशे यत्किंचित्पदस्य निवेशार्थं स्थलान्तरानुधावनमिति।

अथ तादृशाभावप्रतियोगितानवच्छेदकं यदभावव्यक्तित्वमित्यस्यैव सम्यक्त्वे सामानाधिकरण्यप्रवेशो व्यर्थ इति चेन्न, घटत्वेन वह्न्यभावनिष्ठतद्व्यक्तित्वादिना घटाभावस्य हेत्वधिकरणपर्वतादिवृत्तित्वेन घटत्वेन वह्न्यभावनिष्ठतद्व्यक्तित्वस्य तादृशप्रतियोगितानवच्छेदकत्वविरहेण वह्निमान् धूमादित्यादावसंभवापत्तेः। एवं सामानाधिकरण्येन तादृशाभावप्रतियोगिताया अनवच्छेदकं यदभावत्वमित्यस्यैवोक्तौ तद्व्यक्तित्वानिवेशो विशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्ताभावत्वावच्छिन्नाभावस्य विशिष्टसत्तास्वरूपत्वेन सत्तानतिरेकितया तस्य हेतुसमानाधिकरणतया विशिष्टसत्ताभा-

त्वे हेत्वधिकरणीभूतगुणनिष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनावच्छेदकतया व्याप्यवृत्तित्वविरहादभावान्तरमादायातिव्याप्तिः स्यात्, तदुपादाने तु विशिष्टसत्ताभावत्वावच्छिन्नाभावस्य विशिष्टसत्तास्वरूपत्वेऽपि विशिष्टसत्ताभावनिष्ठतद्व्यक्तित्वस्य तादृशप्रतियोगितानवच्छेदकत्वेन तादृशतद्व्यक्तित्वावच्छिन्नविशिष्टसत्ताभावो व्याप्यवृत्तिः सम्भवति।

अथ व्याप्यवृत्तित्वघटकहेत्वधिकरणवृत्तित्वं केन सम्बन्धेन गृह्यते? न तावत् येन केनापि सम्बन्धेन, तथा सति हेत्वधिकरणीभूतायोगोलके धूमाभावाभावस्य कालिकेन सत्त्वेन धूमाभावव्यक्तित्वस्य प्रतियोगितानवच्छेदकत्वविरहेण व्याप्यवृत्तित्वविरहादभावान्तरमादाय धूमवान् वह्नेरित्यादावतिव्याप्तेः। नापि विशेषणताविशेषेण, तथा सति हेत्वधिकरणे एतद्वृक्षे स्वरूपेण कपिसंयोगाभावाभावस्य कपिसंयोगात्मकस्यासत्त्वेन कपिसंयोगाभावस्यापि व्याप्यवृत्तिहेतुसमानाधिकरणतया तदीयप्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वात् कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तेरिति चेदत्रोच्यते—अत्र हेत्वधिकरणवृत्तित्वं स्वरूपेणैव ग्राह्यम्, सर्वत्राभावनिष्ठतद्व्यक्तित्वावच्छिन्नाभावस्यातिरिक्तत्वेन कपिसंयोगाभावनिष्ठतद्व्यक्तित्वावच्छिन्नाभावस्य कपिसंयोगानात्मकतया एतद्वृक्षे सत्त्वान्न कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिः, तद्व्यक्तित्वावच्छिन्ना प्रतियोगिता च व्याप्यवृत्तित्वेनाभिमताभावीयप्रतियोगिताविशिष्टप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या, अत एव द्रव्यत्वशून्यं सत्त्वादित्यत्र स्वरूपसम्बन्धावच्छिन्नद्रव्यत्वाभावाभावनिष्ठतद्व्यक्तित्वावच्छिन्नाभावस्य केवलान्वयित्वेन तादृशतद्व्यक्तित्वे हेत्वधिकरणवृत्त्यभावीयप्रतियोगितावच्छेदकत्वस्यैव सत्त्वेन द्रव्यत्वाभावाभावे व्याप्यवृत्तित्वविरहेऽपि नातिव्याप्तिः, तादृशप्रकारतावच्छेदकसमवायसम्बन्धावच्छिन्नद्रव्यत्वाभावाभावनिष्ठतद्व्यक्तित्वावच्छिन्नाभावस्य केवलान्वयित्वविरहेण हेत्वधिकरणे द्रव्ये तादृशाभावस्यासत्त्वेन द्रव्यत्वाभावाभावस्य व्याप्यवृत्तित्वादिति दिक्।

## ❀ जागदीशी ❀

ननु समनियताभावैक्यमतेऽपि घटत्वेन वह्न्यभावस्यैव वह्नित्वेन घटाभावतया हेतुसमानाधिकरणस्य तादृशस्यैव साध्याभावस्य प्रतियोगितावच्छेदकं वह्नित्वादिकमित्यव्याप्तिरतः समनियताभावैक्यमतेऽपि निरुक्तिमाह—हेतुसमानाधिकरणस्येति। व्याप्यवृत्तेरभावस्य प्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत्साध्यतावच्छेदकमिति योजना।

❀ दीपिका ❀

सामानाधिकरण्यघटितद्वितीयलक्षणानुसरणे बीजमाह—**नन्विति**। द्वितीयलक्षणाभ्युपगमे तु समनियताभावैक्यमतेऽपि वह्नित्वादिरूपसाध्यतावच्छेदकस्य सामानाधिकरण्येन प्रतियोगितानवच्छेदकत्वान्न दोष इति भावः।

ननु समनियताभावैक्यमतेऽपि प्रतियोगितायां साध्यनिष्ठत्वविवक्षणेनाव्याप्तिवारणसंभवे सामानाधिकरण्यघटितलक्षणान्तरानुसरणं व्यर्थमिति चेन्न, विवक्षितव्याप्यवृत्तित्वस्य तत्तदभावे एव पर्य्यवसिततया व्याप्यवृत्तितत्तदभावप्रतियोगितावच्छेदकत्वाभावकूटस्य व्याप्तिघटकत्वे व्याप्यवृत्तियावदभावान्तर्गतघटसामान्याभावनिरूपितसाध्यनिष्ठप्रतियोगितावच्छेदकत्वाप्रसिद्धया तादृशप्रतियोगितावच्छेदकत्वाभावाप्रसिद्धया वह्निमान् धूमादित्यादावव्याप्तेः।

केचित्तु प्रतियोगितायां साध्यनिष्ठत्वनिवेशेऽपि वह्नित्वधूमत्वान्यतरवतः साध्यत्वे धूमादिहेतौ वह्नित्वेन धूमाद्यभावमादायाव्याप्तिरतस्तत्परित्याग इत्याहुः।

❀ जागदीशी ❀

नन्वत्रापि हेतुसमानाधिकरणस्य वह्नित्वेन वह्निधूमोभयाभावस्य वह्नित्वेन पर्वतावृत्तेरभावस्य वा प्रतियोगितायाः समानाधिकरणं सदेव वह्नित्वमवच्छेदकमित्यव्याप्तिः, तादृशप्रतियोगिताया अन्यूनवृत्तित्वे सति यदवच्छेदकं तदन्यत्वोक्तावपि तथा, पर्वते वह्नित्वेन तार्णातार्णोभयं नास्तीतिप्रतीतिसिद्धस्यैव तादृशाभावस्य प्रतियोगितावच्छेदकत्वाद्वह्नित्वस्य। न च तादृशाभावप्रतियोगितावच्छेदकत्वं न वह्नित्वमात्रे पर्याप्तं किन्तु तार्णातार्णोभयत्वेऽपि, अन्यथा तादृशाभावप्रतियोगितावच्छेदकीभूतवह्नित्वावच्छिन्नवति पर्वतादौ तादृशाभावासत्त्वप्रसङ्गादिति वाच्यम्, सोन्दडमते प्रतियोगितावच्छेदकधर्मावच्छिन्नवत्तामात्रस्याभावाविरोधित्वात्। अन्यथा घटवति घटत्वेन पटाभावस्यापलापापत्तेः, किन्तु प्रतीतिबलाद्व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वसिद्धौ सत्यां प्रतियोग्यंशे प्रकारीभूतधर्मविशिष्टप्रतियोगितावच्छेदकावच्छिन्नेनैव सार्द्धमनायत्याऽभावस्य विरोधित्वं वाच्यम्, एवञ्च वह्नित्वादिना तार्णातार्णोभयाभावसत्त्वेऽपि वह्नित्वावच्छिन्नवत्त्वं न क्षतिकरम्।

❀ दीपिका ❀

सामानाधिकरण्यघटितद्वितीयलक्षणपरित्यागे बीजमाह—**नन्वत्रापीति**। द्वितीयलक्षणेऽपीत्यर्थः।

ननु वह्नित्वेन वह्निधूमोभयाभावमादायैवाव्याप्तिसम्भवे वह्नित्वेन पर्वतावृत्त्यभावान्तरानुसरणं व्यर्थमिति चेन्न—व्याप्यवृत्तिहेतुसमानाधिकरणाभावीयप्रतियोगितायां केवलान्वयितावच्छेदकीभूतानुयोगितानिरूपितत्वस्वसमानाधिकरणस्वावच्छेदकधर्मावच्छिन्नत्वोभयाभावविवक्षणेनैव वह्निधूमोभयाभावीयप्रतियोगितायां तादृशानुयोगितानिरूपितत्वतादृशवह्नित्वादिरूपधर्मावच्छिन्नत्वोभयोरेव सत्त्वेन तादृशोभयाभावमादायाव्याप्त्यसंभवादतोऽभावान्तरानुसरणम्। तथा च वह्नित्वेन पर्वतावृत्त्यभावीयप्रतियोगितायां तादृशवह्नित्वादिरूपधर्मावच्छिन्नत्वसत्त्वेऽपि तादृशानुयोगितानिरूपितत्वविरहेणोभयाभावसत्त्वाद्भवत्यव्याप्तिः।

ननु साध्यतावच्छेदके हेतुसमानाधिकरणाभावीयप्रतियोगिताया अन्यूनवृत्तित्वे सति यदवच्छेदकं तदन्यत्वनिवेशेन नोक्तदोषः, वह्नित्वेन वह्निधूमोभयाभावीयप्रतियोगिताया धूमेऽपि सत्त्वेन वह्नित्वस्य न्यूनवृत्तित्वादित्याशङ्कते—**तादृशप्रतियोगिताया इति**। व्याप्यवृत्तिहेतुसमानाधिकरणाभावीयप्रतियोगिताया इत्यर्थः। तथा = अव्याप्तिः, अव्याप्तिं संगमयति—**पर्वते वह्नित्वेनेति**। तादृशाभावस्य = हेतुसमानाधिकरणव्याप्यवृत्त्यभावस्य, प्रतियोगितावच्छेदकत्वात् = प्रतियोगिताया अन्यूनवृत्तित्वे सति तदवच्छेदकत्वात्, तथा च वह्नित्वे तदन्यत्वविरहेण भवत्यव्याप्तिः। **तादृशाभावेति**। वह्नित्वेन तार्णातार्णोभयाभावेत्यर्थः। अन्यथा = वह्नित्वमात्रे तादृशप्रतियोगितावच्छेदकत्वाङ्गीकारे। **तादृशाभावासत्त्वप्रसङ्गादिति**। अयमाशयः—तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभाववत्ताबुद्धौ तत्सम्बन्धेन तद्धर्मावच्छिन्नवत्तानिश्चयस्य प्रतिबन्धकत्वेन पर्वते तादृशाभावीयप्रतियोगितावच्छेदकीभूतवह्नित्वावच्छिन्नवत्तानिश्चयस्य सत्त्वेन तादृशोभयाभावप्रतीतिर्न स्यात्, अस्मन्मते च तत्र तादृशाभावीयप्रतियोगितावच्छेदकीभूततार्णातार्णोभयत्वावच्छिन्नवत्तानिश्चयविरहेण भवति तादृशोभयाभावप्रतीतिः, तथा च तादृशप्रतियोगितावच्छेदकभिन्नत्वस्य वह्नित्वे सत्त्वान्नाव्याप्तिः। व्यधिकरणधर्मावच्छिन्नाभावाङ्गीकर्तृमतेऽव्याप्तिं द्रढयति—**सोन्दडमते इति**। अन्यथा = सोन्दडमते पूर्वोक्तप्रतिबध्यप्रतिबन्धकभावाङ्गीकारे। तर्हि सोन्दडमते कीदृशः प्रतिबध्यप्रतिबन्धकभाव इत्यत आह—**किन्त्विति**। एवञ्च=प्रतियोग्यंशे प्रकारीभूतधर्मविशिष्टप्रतियोगितावच्छेदकावच्छिन्नेन सममभावस्य विरोधित्वाभ्युपगमे च। **न क्षतिकरमिति**। तार्णातार्णोभयत्वविशिष्टवह्नित्वावच्छिन्नसत्त्वे एव वह्नित्वेन तार्णातार्णोभयाभावस्य प्रतीतिर्न स्यात्, पर्वते केवलस्य तार्णस्यातार्णस्य वा वह्नेः सत्त्वं वह्नित्वेन तादृशोभयाभावसत्त्वे न बाधकमिति भावः।

### ❀ जागदीशी ❀

अत एव च द्रव्यत्वेन वह्निर्नास्ति, वह्नित्वेन तद्वह्निर्नास्तीत्यादिप्रतीत्या सामान्यधर्मेणापि विशेषाभावोऽभ्युपेयते। न च तत्र वह्नित्वस्यैव प्रतियोगितावच्छेदकत्वं भासते द्रव्यत्वस्य तु वैशिष्ट्यमात्रं विषय इति वाच्यम्, वह्निमानयमितिनिश्चयसत्त्वेऽपि द्रव्यत्वेन वह्निर्नास्तीति प्रत्ययात् द्रव्यत्वस्यैवावच्छेदकतया भानात्। अन्यथा वह्नित्वावच्छिन्नवह्निनिष्ठप्रतियोगिताकत्वप्रकारेण वह्न्यभावबुद्धौ वह्नित्वेन वह्निमत्तानिश्चयस्य प्रतिबन्धकत्वात्तादृशप्रतीत्यसम्भवाऽपत्तेः, अस्माकन्तु द्रव्यत्वावच्छिन्नवह्निनिष्ठप्रतियोगिताकत्वेन वह्न्यभावबुद्धिं प्रति द्रव्यत्वेन वह्नित्वविशिष्टनिश्चयस्यैव विरोधित्वात्तदसत्त्वादेव तादृशाभावस्य प्रतीतिसम्भवादित्यतो लक्षणान्तरमाह—प्रतियोगिव्यधिकरणस्य वेति।

### ❀ दीपिका ❀

अत एव च = प्रतियोग्यंशे प्रकारीभूतधर्मविशिष्टप्रतियोगितावच्छेदकावच्छिन्नेन साकमभावस्य विरोधित्वकल्पनादेव च। अयमाशयः—अभावस्य प्रतियोगितावच्छेदकावच्छिन्नेन साकं विरोधित्वकल्पने प्रतियोगितावच्छेदकीभूतद्रव्यत्वावच्छिन्नवति पर्वतादौ द्रव्यत्वेन वह्न्यभावस्याप्रतीत्या सामान्यरूपेण विशेषाभावो न सिद्ध्येदिति।

ननु द्रव्यत्वेन वह्निर्नास्तीति प्रतीतौ प्रतियोगितावच्छेदकविधया वह्नित्वस्यैव भानमभ्युपेयते, द्रव्यत्वस्य तु वैशिष्ट्यविधयैव भानमित्याशङ्क्ते—**न चेति**। तत्र= द्रव्यत्वेन वह्निर्नास्तीति प्रतीतौ। अन्यथा = द्रव्यत्वस्य प्रतियोगितावच्छेदकत्वानङ्गीकारे। **तादृशप्रतीत्यसंभवाऽपत्तेरिति**। द्रव्यत्वेन वह्न्यभावप्रतीतिर्न स्यादित्यर्थः।

### ❀ जागदीशी ❀

केचित्तु—सामानाधिकरण्यमभेदः, तथा च हेतुसमानाधिकरणाभावीयस्वाभिन्नप्रतियोगितावच्छेदकं यद्यत् स्वं तदन्यत्वं साध्यतावच्छेदके विवक्षितम्, प्रतियोगित्वं हि स्वरूपसम्बन्धविशेषः, स च सामान्याभावस्थले प्रतियोगितावच्छेदकस्वरूप एव न तु प्रतियोगिस्वरूपोऽननुगमादाधाराधेयभावानुपपत्तेश्च, सामान्यधर्मेण विशेषाभावस्थले च प्रतियोग्यंशे प्रकारीभूतो विशेषधर्म एव तथा, न तु सामान्यधर्मः, अतिप्रसक्तत्वात्।

## ❀ दीपिका ❀

प्रतियोगिवैयधिकरण्यघटिततृतीयलक्षणमन्यथाऽवतारयतां केषाञ्चिन्मतमाह—**केचित्त्विति**। तथा च = सामानाधिकरण्यस्याभेदार्थकत्वे च।

ननु हेतुसमानाधिकरणाभावीयप्रतियोगिताभिन्नत्वस्य साध्यतावच्छेदके निवेशेनैव सामञ्जस्ये अभिन्नावच्छेदकादिदलं व्यर्थमिति चेन्न, घटत्वेन वह्न्यभावीयप्रतियोगितावतः साध्यत्वे घटत्वेन वह्न्यभावमादायाव्याप्तिसंभवात्।

ननु शब्दावच्छिन्नाभावस्थले प्रतियोगितायाः प्रतियोगिस्वरूपत्वेऽनुगमसम्भव इत्यत आह—**आधाराधेयभावेति**। न च कालिकेन घटस्वरूपप्रतियोगिताया घटेन साकमाधाराऽधेयभावोऽस्त्येवेति वाच्यम्, जातित्वावच्छिन्नाभावीयप्रतियोगिताया जातिस्वरूपतया तस्या जात्या समं केनापि सम्बन्धेनाऽधाराधेयभावविरहात्। **अतिप्रसक्तत्वादिति**। अतिरिक्तवृत्तित्वादित्यर्थः।

## ❀ जागदीशी ❀

व्यधिकरणधर्मावच्छिन्नाभावस्थले च प्रतियोगितावच्छेदकादिस्वरूपं न प्रतियोगित्वं किन्तु अतिरिक्तम्, अन्यथा प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनैव सार्द्धमभावस्य विरोधित्वात्तदवच्छिन्नवति तादृशाभावस्यासत्त्वप्रसङ्गात्। विवादोऽपि अतिरिक्तायां प्रतियोगितायामेव, अन्यथा समनियताभावैक्यमते निखिलव्यधिकरणधर्मावच्छिन्नाभावस्यैव गगनाभावात्मकतया गगनाभावस्वीकर्तॄणां चिन्तामणिकाराणां तदनङ्गीकारानुपपत्तेः। इत्थञ्च पर्वते वह्नित्वेन तार्णातार्णवह्नी न स्त इतिप्रतीतिबलात्तादृशाभावप्रतियोगितावच्छेदकत्वस्य वह्नित्वे सत्त्वेऽपि तादृशप्रतियोगित्वं न वह्नित्वाभिन्नं किन्तु तादृशोभयत्वाभिन्नमतिरिक्तं वेति स्वाभिन्नायाः साधनवन्निष्ठाभावप्रतियोगिताया यदवच्छेदकं तदन्यत्वस्य वह्नित्वे सत्त्वान्न तस्य धूमव्यापकतावच्छेदकत्वहानिः।

नन्वत्र लक्षणे हेत्वधिकरणवृत्तित्वमभावस्य न सम्बन्धमात्रेण वाच्यम्, वह्निसामान्याभावस्यापि कालिकादिसम्बन्धेन धूमवति सत्त्वादव्याप्त्यापत्तेः, नापि दैशिकविशेषणतया, घटभिन्नं द्रव्यत्वादित्यत्रातिव्याप्तेः घटत्वस्वरूपस्य साध्याभावस्य दैशिकविशेषणतया वृत्तित्वविरहादित्यतो लक्षणान्तरमाह—प्रतियोगिव्यधिकरणस्य वेतीति प्राहुः।

अपरे तु—प्रागुक्तव्याप्यवृत्तित्वं यत्किञ्चित्त्वघटितत्वेन दुर्वचमतः प्रतियोगिव्यधिकरणस्य वेत्यादिलक्षणान्तरमुक्तमित्यप्याहुः।

अन्ये तु—कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाऽकाशाभावाभावादौ साध्ये आत्मत्वे हेतावव्याप्तिः, आकाशाभावात्मकस्य साध्याभावस्य निरवच्छिन्नवृत्तिकतया तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकमतः प्रतियोगिव्यधिकरणस्य वेति लक्षणान्तरमित्याहुः।

हेतुसमानाधिकरणस्य प्रतियोगिव्यधिकरणस्याभावस्य प्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत् साध्यतावच्छेदकमिति योजना।

❀ दीपिका ❀

प्रतियोगितावच्छेदकादिस्वरूपमित्यत्राऽदिपदेन प्रतियोग्यंशे प्रकारीभूतो धर्मो ग्राह्यः। अन्यथा = प्रतियोगितायाः प्रतियोगितावच्छेदकादिस्वरूपत्वाभ्युपगमे। तदवच्छिन्नवति = प्रतियोगितावच्छेदकावच्छिन्नवति। तादृशाभावस्य = व्यधिकरणधर्मावच्छिन्नाभावस्य। अन्यथा = व्यधिकरणधर्मावच्छिन्नाभावस्य विमतत्वे। तदनङ्गीकारानुपपत्तेरिति। इदन्तु तत्त्वम्—गगनाभावस्वीकर्तॄणां मतेऽपि समनियताभावैक्येन व्यधिकरणधर्मावच्छिन्नाभावस्य नासत्त्वं किन्तु प्रतियोगिता भिन्ना, सोन्दडमते तु प्रतियोगिता नातिरिक्तेति।

अथ वह्नित्वेन तार्णातार्णोभयाभावमादायाव्याप्त्यसम्भवे एतन्मते लक्षणान्तरानुसरणं निर्बीजमित्यत आह—नन्वत्रेति।

❀ जागदीशी ❀

अथात्र प्रतियोगिव्यधिकरणत्वं न स्वप्रतियोगिसमानाधिकरणभिन्नत्वम्, समनियताभावानामभिन्नतया घटाभावादेरपि घटत्वेन प्रमेयसामान्याभावस्वरूपतया तस्य च प्रमेयात्मकप्रतियोगिसमानाधिकरणतया तदन्यत्वासम्भवात्, अत एव स्वप्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणो यस्तदन्यत्वमपि न तथा, घटत्वेन घटाभावादेरेव प्रमेयत्वादिना घटाभावात्मकत्वादप्रसिद्ध्यापत्तेः, व्यधिकरणधर्मावच्छिन्नाभावस्यापि तत एव वारणसम्भवेऽव्याप्तिवारकस्य सामानाधिकरण्येनेत्यस्य वैयर्थ्यापाताच्च। न च साध्यतावच्छेदकसम्बन्धेन यादृशप्रतियोगिताश्रयानधिकरणं हेत्वधिकरणं तादृशप्रतियोगित्वं प्रतियोगितान्तार्थः, तथा च वह्नि-

त्वेन घटाभावीयं घटनिष्ठप्रतियोगित्वमपि तादृशमतस्तदवच्छेदकत्वं वह्नित्वेऽप्यस्तीत्यतः सामानाधिकरण्यपदम्, तेन तादृशप्रतियोगितायाः समानाधिकरणावच्छेदकाप्रसिद्ध्या तद्भिन्नप्रतियोगितैव लक्षणघटिकेति वाच्यम्, विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तेः, गुणादीनां विशिष्टसत्तानिष्ठप्रतियोगिताश्रयाधिकरणत्वात्, घटवान् महाकालत्वादित्यादावव्याप्तिप्रसङ्गाच्च, हेतुमतो महाकालस्य साध्यतावच्छेदककालिकसम्बन्धेन पटाद्यभावप्रतियोगित्वाश्रयाधिकरणतया प्रतियोगिव्यधिकरणाभावाप्रसिद्धेरिति चेद्—

## ❀ दीपिका ❀

चक्रवर्त्तितृतीयलक्षणं परिष्कर्तुमाशङ्कते—**अथात्रेति**। तस्य = घटाभावादेः। तदन्यत्वासम्भवात् = स्वप्रतियोगिसमानाधिकरणभिन्नत्वाभावात्। तथा च घटाभावादेरपि प्रतियोगिवैयधिकरण्यं न स्यादिति भावः। अत एव = प्रतियोगिवैयधिकरण्याप्रसिद्धेरेव। तथा = प्रतियोगिवैयधिकरण्यम्। तथा सति स्वं घटत्वेन घटाभावः तत्प्रतियोगितावच्छेदकं घटाभावात्मक—प्रमेयत्वेन घटाभावीयप्रतियोगितावच्छेदकीभूतप्रमेयत्वम्, तदवच्छिन्नसामानाधिकरण्यस्यैव घटाभावादौ सत्त्वात्। तत एव = निरुक्तप्रतियोगिवैयधिकरण्यादेव। तथा च वह्नित्वेन घटाभावादेः स्वप्रतियोगितावच्छेदकीभूतवह्नित्वावच्छिन्नसामानाधिकरण्येन तदन्यत्वस्यासत्त्वेन प्रतियोगिवैयधिकरण्याभावेनान्याभावमादाय तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् सामानाधिकरण्येनेत्यस्य वैयर्थ्यं स्पष्टमेव। अर्थान्तरमाश्रित्य सामानाधिकरण्यदलं सार्थकयति–**न चेति**। वाच्यमिति परेणान्वयः। तथा च साध्यतावच्छेदकसम्बन्धेन यादृशप्रतियोगिताश्रयानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरिति फलितम्। एतस्मिन्नर्थे सामानाधिकरण्येनेत्यस्य सार्थक्यं स्पष्टयति—**तथा चेति**। एतादृशार्थस्वीकारे चेत्यर्थः। अव्याप्त्यतिव्याप्ती दर्शयति—**विशिष्टसत्तावानित्यादिना**। अयमाशयः–साध्यतावच्छेदकीभूतसमवायसम्बन्धेन विशिष्टसत्तानिष्ठप्रतियोगिताश्रयीभूतसत्ताऽधिकरणमेव हेत्वधिकरणं गुणादीति घटादिनिष्ठतादृशप्रतियोगितानवच्छेदकत्वस्य विशिष्टसत्तात्वे सत्त्वाद् भवति विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिः। कालो घटवान् महाकालत्वादित्यादौ हेत्वधिकरणे काले कालिकसम्बन्धेन वस्तुमात्रस्यैव सत्त्वात् प्रतियोगिव्यधिकरणाभावाप्रसिद्धिनिबन्धनाव्याप्तिः स्पष्टैवेति ध्येयम्।

## ❀ जागदीशी ❀

अत्राहुः—साध्यतावच्छेदकसम्बन्धेन स्वाश्रयवृत्तिस्वावच्छेदकधर्मावच्छिन्नाधिकरणयावद्धेत्वधिकरणिका यावत्यः प्रतियोगितास्तदन्यप्रतियोगित्वं प्रतियोगितान्तार्थः । तथा च वह्नित्वेन घटाद्यभावस्यापि घटनिष्ठप्रतियोगिता तादृशीति तदवच्छेदकत्वं वह्नित्वेऽप्यस्तीत्यतः सामानाधिकरण्यपदम् । घटवान् महाकालत्वादित्यादौ तु गगनाभावीयं गगननिष्ठमेव तादृशप्रतियोगित्वं सुलभमिति न कोऽपि दोषः ।

## ❀ दीपिका ❀

अत्राहुरित्यनेन प्रतियोगिवैयधिकरण्यं परिष्कुरुते—**प्रतियोगितान्तार्थ इति** । तथा च हेत्वधिकरणत्वव्यापकप्रतियोगिताऽन्यत्वं हेतुसमानाधिकरणाभावीयप्रतियोगितायां निवेशनीयम्, व्यापकताघटकसम्बन्धश्च—स्वविशिष्टधर्मावच्छिन्नाधिकरणत्वरूपः, स्ववै० च स्वसामानाधिकरण्यस्वावच्छेदकत्वोभयसम्बन्धेन । **स्वाश्रयवृत्तीति** । स्वम् = प्रतियोगित्वम्, तदाश्रये वृत्तिर्यः स्वावच्छेदकीभूतो धर्मस्तद्धर्मावच्छिन्नस्याधिकरणानि यावन्ति हेत्वधिकरणानि यासां प्रतियोगितानां ता इत्यर्थः ।

अत्र प्रतियोगितायां यावत्त्वानुक्तौ वह्निमान् धूमादित्यादौ वह्निसामान्याभावीयप्रतियोगितायां स्वाश्रयवृत्तिस्वावच्छेदकधर्मावच्छिन्नाधिकरणकधूमाभावीयप्रतियोगिताभिन्नत्वस्य सत्त्वेनाव्याप्तिः स्यात् । हेत्वधिकरणे यावत्त्वानुक्तौ धूमवान् वह्नेरित्यत्र धूमाभावीयप्रतियोगितायाः स्वाश्रयवृत्तिस्वावच्छेदकीभूतधूमत्वावच्छिन्नाधिकरणयत्किञ्चिद्धेत्वधिकरणकतया तदन्यत्वविरहेणातिव्याप्तिः स्यात् । स्वाश्रयवृत्तित्वानुक्तौ घटवन्नित्यज्ञानत्वादित्यादौ विषयितासम्बन्धेन साध्यतायां प्रतियोगितामात्रस्यैव स्वावच्छिन्नाधिकरणकतया तदन्यप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तिः स्यात् । तथा च वह्निमान् धूमादित्यादौ वह्नित्वादिना घटाद्यभावीयप्रतियोगितायां स्वाश्रयवृत्तिस्वावच्छेदकधर्मावच्छिन्नाधिकरणयावद्धेत्वधिकरणकत्वविरहेण तदन्यत्वसत्त्वात्तादृशाभावीयप्रतियोगिताया अवच्छेदकत्वस्य साध्यतावच्छेदके वह्नित्वादौ सत्त्वादव्याप्तिः स्यादतः सामानाधिकरण्येनेत्यस्याऽवश्यकत्वमित्याह—**तथा चेत्यादिना** । घटवान् महाकालत्वादित्यत्र लक्षणं सङ्गमयति—**घटवानिति** । गगनादेरवृत्तित्वमते गगनत्वावच्छिन्नाधिकरणत्वाप्रसिद्ध्या गगनाभावीयप्रतियोगितायाः स्वाश्रयवृत्तिस्वावच्छेदकधर्मावच्छिन्नाधिकरणयावद्धेत्वधिकरणकत्वविरहेण तदन्यत्वसत्त्वात् गगनाभावीयप्रतियोगितैव

लक्षणघटिकेति तादृशप्रतियोगिताया अनवच्छेदकत्वस्य साध्यतावच्छेदके घटत्वादौ सत्त्वान्न क्वापि दोषलेशोऽपीति बोध्यम् ।

❀ जागदीशी ❀

वस्तुतो धूमवति वह्नित्वेन घटो नास्तीतिवद् धूमवान्न वह्नित्वेन घटवान् किन्तु घटत्वेनेतिप्रतीतिबलाद् व्यधिकरणधर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकान्योन्याभावोऽप्यस्ति, अत एव समवायितया वाच्यत्ववद्भेदो घटादौ पक्षधरमिश्रैः स्वीकृतः, तथा च यादृशप्रतियोगितावच्छेदकावच्छिन्नीयत्वेन साध्यतावच्छेदकसम्बन्धेन यादृशप्रतियोगित्वाश्रयाधिकरणान्यत्वं हेतुमतस्तादृशप्रतियोगितासमानाधिकरणवृत्तित्वावच्छिन्नप्रतियोगिताकतादृशप्रतियोगितावच्छेदकत्वाभाववत्त्वम्, तादृशप्रतियोगितासमानाधिकरणत्वावच्छिन्नप्रतियोगिताकतादृशप्रतियोगितावच्छेदकान्यत्वं वा साध्यतावच्छेदके विवक्षितम्, तथा च घटादिनिष्ठस्य वह्नित्वेन घटाद्यभावप्रतियोगित्वस्यापि तादृशत्वेन वह्नित्वादेस्तदवच्छेदकत्वादव्याप्तिरतः सामानाधिकरण्येनेत्युक्तम् । तथा च वह्नित्वस्य तादृशप्रतियोगितावच्छेदकत्वेऽपि तादृशप्रतियोगितासमानाधिकरणवृत्तित्वरूपव्यधिकरणधर्मेण तादृशप्रतियोगितावच्छेदकत्वाभावस्य तत्र सत्त्वान्नाव्याप्तिः । कालो घटवान् महाकालत्वादित्यादौ तु घटादिसामान्याभावप्रतियोगिताया अतथात्वेऽपि घटत्वेन पटाद्यभावमादाय लक्षणसङ्गतिः, कालः पटत्वेन पटवान् न तु घटत्वेनेत्यनुभवात् ।

❀ दीपिका ❀

नन्वेवं प्रतियोगिव्यधिकरणपदस्य पारिभाषिकत्वाऽपत्तिरत आह—वस्तुत इति । केचित्तु गगनादेर्वृत्तित्वमते कालो घटवान् महाकालत्वादित्यादौ गगनाभावस्य लक्षणघटकत्वन्न सम्भवतीति तत्राव्याप्तिभिया कल्पान्तरानुसरणमित्याहुः ।

अत एव = व्यधिकरणधर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्वीकारादेव । तथा च=तादृशभेदस्वीकारे च । यादृशप्रतियोगितावच्छेदकावच्छिन्नीयत्वेनेत्यस्य यादृशप्रतियोगितावच्छेदकनिष्ठावच्छेदकतानिरूपितनिरूपकतानिरूपितत्वेनेत्यर्थः । अस्य यादृशप्रतियोगिताश्रयाधिकरणतायामन्वयः । एवञ्च यादृशप्रतियोगितावच्छेदकनिष्ठावच्छेदकतानिरूपितनिरूपकतानिरूपिता या साध्यतावच्छेदकसम्बन्धेन यादृशप्रतियोगिताश्रयाधिकरणता तन्निष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वं हेतुमत

इति फलितम्। तादृशप्रतियोगितासमानाधिकरणवृत्तित्वधर्मावच्छिन्नप्रतियोगितानिरूपको यस्तादृशप्रतियोगितावच्छेदकत्वाभावः, तद्वत्त्वं साध्यतावच्छेदके विवक्षितमिति। तथा च वह्निमान् धूमादित्यादौ वह्नित्वेन घटाभावीयप्रतियोगितावच्छेदकं वह्नित्वं तदवच्छिन्नाऽधेयतानिरूपिता संयोगसम्बन्धेन तादृशप्रतियोगिताश्रयीभूतघटाधिकरणता हेतुमति पर्वतादौ नास्तीति तदन्यत्वस्य सत्त्वात्तादृशाभावो लक्षणघटकः, एवञ्च साध्यतावच्छेदकीभूतवह्नित्वादिनिष्ठावच्छेदकताया घटनिष्ठतादृशप्रतियोगितासमानाधिकरणवृत्तित्वस्य व्यधिकरणतया तेन रूपेण तादृशप्रतियोगितावच्छेदकत्वाभावस्य वह्नित्वे सत्त्वात् लक्षणसमन्वयः।

लाघवात् कल्पान्तरमाह—**तादृशप्रतियोगितासमानाधिकरणेति।** उभयत्र सामानाधिकरण्यनिवेशप्रयोजनमाह—**तथा चेति।** एतादृशार्थे सामानाधिकरण्यानिवेशे चेत्यर्थः। तथा च = सामानाधिकरण्यनिवेशे च। **अतथात्वेऽपीति।** घटसामान्याभावीयप्रतियोगिताया अवच्छेदकीभूतघटत्वावच्छिन्नाऽधेयतानिरूपितायाः कालिकेन तादृशप्रतियोगिताश्रयाधिकरणतायाः काले सत्त्वेन लक्षणाघटकत्वेऽपीत्यर्थः। **लक्षणसङ्गतिरिति।** कालनिष्ठपटाधिकरणताया घटत्वेन पटाभावीयप्रतियोगितावच्छेदकीभूतघटत्वावच्छिन्नाऽधेयतानिरूपितत्वाभावेन तदभावस्य काले सत्त्वेन तादृशवृत्तित्वरूपेण प्रतियोगितावच्छेदकत्वाभावस्य घटत्वे सत्त्वादिति भावः।

## ❀ जागदीशी ❀

**वह्नित्वादिसामान्यधर्मेण महानसीयवह्न्याद्यभावसत्त्वे तु यादृशप्रतियोगितावच्छेदकेत्यत्रावच्छेदकत्वमनतिरिक्तवृत्तित्वरूपं ग्राह्यम्, तच्च तदतिरिक्तवृत्तित्वे सति तत्समानाधिकरणं यत्तदन्यत्वम्। नातो व्यधिकरणधर्मावच्छिन्नप्रतियोगितायास्तत एव वारणसम्भवे सामानाधिकरण्यदलवैयर्थ्यमित्यस्मद्गुरुचरणाः।**

## ❀ दीपिका ❀

अथैवमपि सामान्यरूपेण विशेषाभावस्वीकर्तृमते वह्नित्वेन महानसीयवह्न्यभावीयप्रतियोगिताया अपि तादृशत्वाद् वह्नित्वस्य तादृशप्रतियोगितायाः सामानाधिकरण्येनावच्छेदकत्वाद् वह्निमान् धूमादित्यादावव्याप्तिरित्यत आह—**वह्नित्वादिसामान्येति।** तथा च वह्नित्वस्य तादृशप्रतियोगितातिरिक्तपर्वतीयवह्नावपि वृत्तितयाऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वाभावान्नाव्याप्तिरिति भावः। ननु तादृशप्रति-

योगितासमानाधिकरणवृत्तित्वेन ताद्दशप्रतियोगितावच्छेदकत्वाभावस्योक्तत्वान्निरुक्त-वृत्तित्वस्य ताद्दशप्रतियोगितावच्छेदकत्वेऽन्यत्र च सत्त्वेनात्र कल्पे सामान्यरूपेण विशेषाभावस्यावश्यं स्वीकरणीयतया 'वह्नित्वादिसामान्यधर्मेण महानसीयवह्नयाद्य-भावसत्त्वे तु' इत्यत्र तुशब्दार्थासङ्गतिरिति चेन्न, 'वृत्तित्वं वृत्तिभेदेन भिन्नमेव, ताद्दशप्रतियोगितावच्छेदकत्ववृत्ति यद्वृत्तित्वं तन्नान्यत्रे'ति मतेऽत्र सामान्यधर्मेण विशेषाभावास्वीकाराद् ग्रन्थसङ्गतेरिति । केचित्तु तुशब्दस्य एवकारार्थत्वमभ्युपेत्य ग्रन्थसङ्गतिं वर्णयन्ति ।

ननु प्रतियोगितावच्छेदकत्वघटकावच्छेदकत्वस्यानतिरिक्तवृत्तित्वरूपत्वे वह्नित्वस्य वह्नित्वेन घटाभावीयप्रतियोगितातिरिक्तवृत्तित्वेनानतिरिक्तवृत्तित्वरूपावच्छेदकत्वा-भावस्य सत्त्वेन अव्याप्तिवारणसम्भवे सामानाधिकरण्यदलं व्यर्थमित्यत आह— **तच्चेति** । अनतिरिक्तवृत्तित्वं चेत्यर्थः । तथा च वह्नित्वस्य निरुक्तप्रतियोगिता-सामानाधिकरण्यविरहेण तदन्यत्वसत्त्वात् पारिभाषिकतदनतिरिक्तवृत्तित्वसत्त्वेन सामा-नाधिकरण्यदलस्याऽवश्यकत्वमिति भावः ।

## ❀ जागदीशी ❀

यत्तु यत्प्रतियोगितावच्छेदकविशिष्टस्य यत्प्रतियोगित्वाश्रयस्य च द्वयोः साध्यतावच्छेदकसम्बन्धेनानधिकरणं हेत्वधिकरणं ताद्दशप्रतियोगित्वं प्रति-योगितान्तार्थः । तथा च वह्नित्वेन घटाद्यभावस्य घटनिष्ठप्रतियोगिताया अपि ताद्दशत्वाद् वह्नित्वादेस्तदवच्छेदकत्वमादायाव्याप्तिरतः सामाना-धिकरण्येनेत्युक्तार्थकम् । एतन्मते च सामान्यरूपेण विशेषाभावानभ्युप-गमः । नातो वह्नित्वेन तद्वह्नयभावमादायाव्याप्तिः । न च स्वरूपसम्ब-न्धात्मकप्रतियोगितायाः प्रतियोगिभेदेन भिन्नत्वाद् वह्निमान् धूमादित्य-त्राव्याप्तिः, वह्निसामान्याभावीयं यन्महानसीयवह्निनिष्ठं प्रतियोगित्वं तदवच्छेदकीभूतवह्नित्वविशिष्टस्य तत्प्रतियोगिताश्रयीभूतमहानसीय-वह्नेश्च द्वयोरनधिकरणत्वस्य हेतुमति पर्वते सत्त्वादिति वाच्यम्—प्रति-योगिव्यक्तीनां भेदेऽपि एकधर्मावच्छिन्नप्रतियोगिताया लाघवेनैक्यस्वी-कारादिति । न च कालो घटवान् महाकालत्वादित्यादौ ताद्दशप्रतियोगि-त्वाप्रसिद्धयाऽव्याप्तिः, गगनाभावीयप्रतियोगितावच्छेदकविशिष्टस्य तदा-श्रयीभूतगगनस्याधिकरणाप्रसिद्धया निरुक्तरूपाभावादिति वाच्यम्, महाकालान्यत्वविशिष्टघटाद्यभावीयताद्दशविशिष्टघटत्वावच्छिन्नप्रतियोगि-ताव्यक्तेरेव तथात्वात् ।

यत्प्रतियोगितावच्छेदकविशिष्टयत्प्रतियोगिताश्रयोभयत्वं वा हेत्वधिकरणयत्किंचिन्निष्ठाधिकरणतानवच्छेदकं तादृशप्रतियोगिताया एव प्रवेश्यतया घटत्वेन गगनाभावमादाय तत्र लक्षणसम्भवाच्चेति।

## ❀ दीपिका ❀

सामानाधिकरण्यदलसार्थक्याय प्रतियोगितान्तदलान्यथाव्याख्यातृमतं दूषयितुमुपन्यस्यति—**यद्विति**। अत्र यत्प्रतियोगितावच्छेदकविशिष्टेत्यस्यानुपादाने विशिष्टसत्ताभावीयप्रतियोगिताश्रयसत्ताऽधिकरणताया एव हेतुमतो गुणादेः सत्त्वेन विशिष्टसत्ताभावस्य लक्षणाघटकत्वेनान्याभावमादाय विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिरतस्तन्निवेशः। यत्प्रतियोगिताश्रयस्येत्यस्यानुपादाने वह्नित्वावच्छिन्नाधिकरणतायाः पर्वतादौ सत्वाद् वह्नित्वेन घटाभावस्य लक्षणाघटकत्वेनैवाव्याप्तिवारणसम्भवात् सामानाधिकरण्यप्रवेशो व्यर्थः स्यादतस्तन्निवेशः। साध्यतावच्छेदकसम्बन्धेनेत्यस्यानुपादाने धूमसामान्याभावीयप्रतियोगितावच्छेदकधूमत्वविशिष्टस्य तादृशप्रतियोगिताश्रयस्य च द्वयोः कालिकेनाधिकरणत्वस्यैवायोगोलके सत्त्वाद् धूमसामान्याभावस्य लक्षणाघटकतयाऽभावान्तरमादाय धूमवान् वह्नेरित्यादावतिव्याप्तिरतस्तदुपादानम्। एतत्कल्पस्यानुगमस्तु—न तावत् साध्यतावच्छेदकसम्बन्धेन यत्प्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नाधेयतानिरूपिताधिकरणत्वयत्प्रतियोगित्वावच्छिन्न-निरूपकतानिरूपिताधिकरणत्वोभयाभाववत् यद्धेत्वधिकरणं तत्प्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकीभूतसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यम्, तथा सति महाकालानुयोगिककालिकसम्बन्धेन घटसाध्यकमहाकालत्वहेतावव्याप्तिः, किन्तु यदनुयोगितानिरूपितप्रतियोगित्वाभाववत् यद्धेत्वधिकरणं तादृशप्रतियोगितेत्यादि। प्रतियोगित्वाभावश्च स्वनिरूपितप्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नाधेयतानिरूपिताधिकरणत्वस्वनिरूपितप्रतियोगित्वावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकः। एवञ्च न कुत्रापि दोष इत्यवसेयम्।

**तथा चेति**। प्रतियोगितान्तदलस्य निरुक्तार्थकत्वे चेत्यर्थः। **उक्तार्थकमिति**। अभेदार्थकमित्यर्थः।

नन्वेवं वह्नित्वेन तद्वह्न्यभावमादायाव्याप्तिरित्यत आह—**एतन्मते चेति**। कालो घटवान् महाकालत्वादित्यत्राव्याप्तिं शङ्कते—**न चेति**। वाच्यमित्यनेनान्वयः। **तादृशप्रतियोगित्वेति**। यत्प्रतियोगितावच्छेदकविशिष्टस्य यत्प्रतियोगिता-

श्रयस्य च द्वयोः साध्यतावच्छेदकसम्बन्धेनानधिकरणं हेत्वधिकरणं तादृशप्रतियोगित्वेत्यर्थः । अव्याप्तिमुपपादयति—**गगनाभावीयेति** । अयमाशयः—कालिकेन घटसाध्यकमहाकालत्वहेतौ गगनाभावमादायैव लक्षणं सङ्गमनीयम्, तच्च न सम्भवति, गगनस्यावृत्तितयाऽधिकरणाप्रसिद्धया तदन्यत्वघटितपारिभाषिकनिरुक्तप्रतियोगिताया अप्रसिद्धेरिति । अव्याप्तिं निराकरोति—**महाकालान्यत्वेति** । **तथात्वादिति** । तथा च तादृशप्रतियोगितावच्छेदकविशिष्टस्य महाकालान्यत्वविशिष्टघटादेरधिकरणत्वस्य खण्डकाले प्रसिद्धत्वात् तदन्यत्वस्य हेतौ महाकाले सत्त्वात्, महाकाले महाकालान्यत्वविशिष्टघटादेरभावादिति भावः ।

नन्वेवमपि महाकालानुयोगिककालिकसम्बन्धेन घटसाध्यके महाकालत्वहेतावव्याप्तिः, तेन सम्बन्धेन महाकालान्यत्वविशिष्टघटादेरधिकरणाप्रसिद्धेरत आह—**यत्प्रतियोगितावच्छेदकेति** । तत्र=कालो घटवान् महाकालत्वादित्यत्र । **लक्षणसम्भवाच्चेतीति** । तथा च महाकाले घटत्वेन गगनाभावीयप्रतियोगितावच्छेदकीभूतघटत्वविशिष्टस्य तादृशप्रतियोगिताश्रयीभूतगगनस्य चोभयोरविद्यमानत्वेन तादृशोभयत्वे हेत्वधिकरणीभूतमहाकालनिष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वस्य सत्त्वेन घटत्वेन गगनाभावस्य लक्षणघटकत्वं सम्भवतीत्याशयः ।

अथात्र कल्पे यत्प्रतियोगिताश्रयपदं व्यर्थम्, गगनत्वस्य महाकालनिरूपितनिरूपकतानवच्छेदकत्वेन गगनाभावमादाय लक्षणसङ्गतेरिति चेन्न—अत्र साध्यतावच्छेदकसम्बन्धेन वृत्तित्वविवक्षणे संयोगेन प्रमेयसाध्यके द्रव्यजात्यन्यतरत्वहेतावतिव्याप्तिः, प्रमेयाभावीयप्रतियोगितावच्छेदके प्रमेयत्वे यत्किंचिद्धेत्वधिकरणीभूतद्रव्यनिरूपितसंयोगसम्बन्धावच्छिन्ननिरूपकतावच्छेदकत्वस्यैव सत्त्वेन साध्याभावस्य लक्षणाघटकत्वात्, यत्किंचिद्धेत्वधिकरणीभूतजातिनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तिताया अप्रसिद्धेश्चेत्यतो यत्किञ्चिद्धेत्वधिकरणनिरूपितवृत्तितासामान्ये यत्प्रतियोगिताश्रयनिष्ठत्व-यत्प्रतियोगितावच्छेदकावच्छिन्नत्व-साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वैतत्त्रितयाभावः तादृशप्रतियोगितैव प्रतियोगितान्तार्थो वाच्यः, तथा च महाकालान्यत्वविशिष्टघटस्य गगनादेश्च महाकाले सत्त्वमतो यत्प्रतियोगित्वाश्रयनिष्ठत्वपदानुपादाने कालो घटवान् महाकालत्वादित्यत्र तादृशप्रतियोगित्वाप्रसिद्धयाऽव्याप्त्यापत्तिः । सिद्धान्ते तु घटत्वेन पटाभावीया प्रतियोगितैव तादृशी, महाकालनिरूपितघटत्वावच्छिन्नवृत्तितायां पटनिष्ठत्वाभावेन तादृशत्रितयाभावसत्त्वात्, अत्र कालो घटत्वेन न पटवानित्यनुभव एव प्रमाणमित्यवधेयम् ।

❀ जागदीशी ❀

तन्न। प्रतियोगिभेदेऽपि प्रतियोगितावच्छेदकाभेदेन प्रतियोगिताया-ग्रभेदस्तदा वह्नित्वेन घटाभावस्य या वह्नित्वावच्छिन्ना घटनिष्ठा प्रतियोगिता सैव वह्नित्वेन धूमाभावस्यापि वह्नित्वावच्छिन्नधूमनिष्ठापि प्रतियोगिता लाघवात्, तथा च सामानाधिकरण्येनेत्यस्य वैयर्थ्यं दुर्वारम्, वह्नित्वेन घटाभावीयं यद् घटनिष्ठप्रतियोगित्वं तदवच्छेदकीभूतवह्नित्वविशिष्टस्य तदाश्रयीभूतधूमादेश्च द्वयोरधिकरणत्वस्य सर्वत्रैव हेतुमति सत्त्वेन वह्नित्वरूपव्यधिकरणधर्मावच्छिन्नप्रतियोगिताया लक्षणाघटकत्वादिति दिक्।

❀ दीपिका ❀

यत्तुमतं दूषयति—तन्नेति। वैयर्थ्यं दुर्वारमिति। ननु एकधर्मावच्छिन्नप्रतियोगिताया ऐक्यस्वीकारे स्वमतेऽपि यादृशप्रतियोगितावच्छेदकावच्छिन्नीयत्वोक्तावपि सामानाधिकरण्यदलस्य वैयर्थ्याद् यत्तुमतखण्डनं न समीचीनमिति चेन्न—एकधर्मावच्छिन्नप्रतियोगिताया नानात्वे चक्रवर्तिनस्तात्पर्यादिति।

❀ दीधितिः ❀

एवञ्च व्याप्तेरव्यभिचारिसम्बन्धरूपताऽपि सङ्गच्छते, हेतौ साध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वस्येव साध्यतावच्छेदके हेतुमन्निष्ठसाध्याभावप्रतियोगितावच्छेदकत्वस्यापि व्यभिचारत्वात्। अवच्छेदकत्वञ्चेह तत्पर्याप्त्यधिकरणत्वम्, तेन विशिष्टवह्न्यभावस्य ह्रदत्ववह्नित्वोभयावच्छिन्नाभावस्य च प्रतियोगितावच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिः।

❀ जागदीशी ❀

एवञ्चेति। तथा चाव्यभिचारस्य पारिभाषिकत्वानादरेऽपि न क्षतिरिति भावः। वह्नित्वावच्छिन्नघटाद्यभाववति धूमादेर्वर्तमानत्वादुक्तं-साध्याभावेति। अत्र साध्याभावो व्याप्यवृत्तिर्बोध्यः, एवं परत्रापि। विशिष्टेति। महानसीयत्वादिविशिष्टवह्नित्वावच्छिन्नप्रतियोगिताकस्येत्यर्थः। ननु विशि-

छत्स्यातिरिक्तत्वान्महानसीयत्ववह्नित्वयोर्वैशिष्ट्यस्य वा परम्परया तदव-च्छेदकत्वान्नैष दोष इत्यत आह—हृदत्ववह्नित्व इति।

## ❀ दीपिका ❀

**अव्यभिचारिसम्बन्धरूपतेति** दीधितिः। अव्यभिचारिसम्बन्धपदप्रति-पाद्यतेत्यर्थः। तथा च व्यभिचारस्याभावोऽव्यभिचारम्, अव्यभिचारमस्ति यस्मि-न्निति अव्यभिचारि, तस्य सम्बन्धः, तादृशसम्बन्ध एव रूपं स्वरूपं यस्य, तस्य भाव इत्यव्यभिचारिसम्बन्धरूपतेति विग्रहः। अत्र व्यभिचारपदार्थः साध्यता-वच्छेदके हेतुसमानाधिकरणाभावीयप्रतियोगितायाः सामानाधिकरण्येनावच्छेदक-त्वम्, नञर्थोऽभावः, इन्प्रत्ययार्थ आश्रयत्वम्, तत्पुरुषे पूर्वपदस्य तत्सम्बन्धिनि लक्षणा, सम्बन्धपदार्थः सामानाधिकरण्यम्, एवञ्चाव्यभिचारिसम्बन्धपदेनैव हेतु-समानाधिकरणात्यन्ताभावीयप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकसाध्यता-वच्छेदकावच्छिन्नसामानाधिकरण्यरूपाया व्याप्तेर्लाभ इति भावः।

ननु साध्याभाववद्वृत्तित्वरूपव्यभिचारस्य चक्रवर्तिलक्षणाघटकतया कथं व्याप्ते-स्तद्रूपतेत्यत आह दीधितौ—**हेताविति**। विनिगमनाविरहेण साध्यतावच्छेदक-निष्ठहेतुसमानाधिकरणात्यन्ताभावीयप्रतियोगितावच्छेदकत्वस्यापि व्यभिचारपदार्थ-त्वमिति भावः।

नन्वेवं प्रथमलक्षणस्य संग्रहेऽपि द्वितीयतृतीययोरसंग्रह इति चेन्न-साध्यतावच्छे-दके हेतुसमानाधिकरणव्याप्यवृत्त्यभावीयप्रतियोगितायाः सामानाधिकरण्येनावच्छे-दकत्वस्य, साध्यतावच्छेदके हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावीयप्रतियोगि-तायाः सामानाधिकरण्येनावच्छेदकत्वस्यापि व्यभिचारपदार्थत्वात्, दीधिति-ग्रन्थस्योपलक्षणपरत्वात्।

अत्र भट्टाचार्या आहुः—वह्निर्धूमस्य व्यभिचारीत्यत्राभाववद्वृत्तित्वमेव व्यभि-चारपदार्थः, तदर्थैकदेशे चाभावे षष्ठ्यर्थप्रतियोगिताया निरूपकत्वसम्बन्धेनान्वयः, प्रतियोगितायाश्चाऽधेयतासम्बन्धेन धूमस्य, अवच्छिन्नत्वसम्बन्धेन धूमविशेषण-तापन्नधूमत्वस्यान्वय इति धूमत्वावच्छिन्नधूमाभाववद्वृत्तित्वलाभः, न तु साध्यता-वच्छेदकावच्छिन्नसाध्यान्तर्भावेण व्यभिचारपदार्थता, शक्त्यानन्त्यप्रसंगात्, साध्य-वाचकपदवैयर्थ्याच्च। एवं समानाधिकरणाभावप्रतियोगितायां सामानाधिकरण्येनाव-च्छेदकत्वं व्यभिचारपदार्थः, सामानाधिकरण्ये च व्युत्पत्तिवैचित्र्यात् प्रथमान्तपदो-

पस्याप्यस्यापि वह्नेर्निरूपकत्वसम्बन्धेनान्वयः, वह्न्याधन्तर्भावेणैव वा शक्तिः, धूमपदं लक्षणया धूमत्वपरम्, आधेयत्वं षष्ठ्यर्थः, अन्वयश्चास्यावच्छेदकत्वे, निरूपकत्वमिन्प्रत्ययार्थः, तथा च धूमत्वनिष्ठस्वसमानाधिकरणाभावप्रतियोगितावच्छेदकतानिरूपको वह्निरित्यन्वयबोधः। यद्यपि लाघवरूपविनिगमकसत्त्वात् अभाववद्वृत्तित्वे एव व्यभिचारपदशक्तिकल्पनमुचितम्, तथापि ज्ञेयत्वं वाच्यत्वस्याव्यभिचारीति प्रामाणिकव्यवहारानुरोधादुपदर्शितगुरुरूपस्यापि व्यभिचारपदार्थत्वमावश्यकम्, तत्र वाच्यत्वाभावाप्रसिद्धया तदभाववद्वृत्तित्वाभावबोधासंभवात्, उक्तरूपस्य व्यभिचारपदार्थत्वे च व्यभिचारस्याभावोऽव्यभिचारमित्यव्ययीभावाश्रयणात् ज्ञेयत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वमव्यभिचारपदार्थः, इन्प्रत्ययार्थो निरूपकत्वम्, वाच्यत्वपदं वाच्यत्वत्वपरम्, षष्ठ्यर्थ आधेयत्वम्, तथा च वाच्यत्वत्वनिष्ठस्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वनिरूपकं ज्ञेयत्वमित्यन्वयबोध इति।

यत्तुमतमिदं 'वह्निर्धूमस्य व्यभिचारी न तु वाच्यत्वस्ये'ति व्यवहारानुपपत्त्या दूषितम्। तन्न मनोरमं भाति। व्यभिचारपदार्थनिरुक्तावच्छेदकत्वस्य नञर्थेऽभावेऽन्वयः, तस्य चेन्प्रत्ययार्थे निरूपकतायामन्वयः। तथा च धूमत्वनिष्ठवह्निसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकतानिरूपको वाच्यत्वत्वनिष्ठवह्निसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावनिरूपको वह्निरित्यन्वयबोधसम्भवात्। न च 'नञ्पदं विना यादृशवाक्येन यत्र धर्मिणि येन सम्बन्धेन यस्य विशेषणतया भानं, तेन नञ्समभिव्याहृतेन तत्र धर्मिणि तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावः प्रतीयते' इति नियमेन निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वाभावस्यैव बोधः सम्भवेत्, स च न सम्भवति, निरूपितत्वसम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगिताया अनभ्युपगमादिति वाच्यम्—'यथा दण्डाद् घटस्तथा गगनं न पारिमाण्डल्या'दित्यादिवाक्यस्य प्रामाणिकत्वानुरोधेन वृत्त्यनियामकसम्बन्धस्याप्यभावप्रतियोगितावच्छेदकत्वस्य नवीनैः स्वीकृतत्वात्। व्यवस्थापितं चेदं भट्टाचार्यैर्व्युत्पत्तिवादे।

अथ कपिसंयोगी एतद्वृक्षत्वादित्यादौ एतद्वृक्षत्वस्य कपिसंयोगाभाववति एतद्वृक्षे वर्तमानत्वाद् व्यभिचारित्वं स्यादित्यत आह—**अत्र साध्याभाव इति।** तथा च कपिसंयोगाभावस्य व्याप्यवृत्तित्वविरहान्न दोष इति भावः।

ननु धूमसमानाधिकरणाभावो महानसीयत्वविशिष्टवह्नित्वावच्छिन्नप्रतियोगिताकस्तत्प्रतियोगितावच्छेदकत्वस्यैव वह्नित्वे सत्त्वाद् वह्निमान् धूमादित्यादावव्याप्तिः स्यादित्यत आह दीधितौ—अवच्छेदकत्वञ्चेति। तादृशप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत्साध्यतावच्छेदकमित्यत्रानवच्छेदकत्वघटकावच्छेदकत्वञ्चेत्यर्थः। एवञ्च तादृशप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणभिन्नत्वं तत्र फलितम्। तथा च महानसीयत्वविशिष्टवह्नित्वावच्छिन्नाभावीयप्रतियोगितावच्छेदकतायाः पर्याप्त्यधिकरणत्वस्य महानसीयत्वविशिष्टवह्नित्वे एव सत्त्वेन तद्भिन्नत्वस्य साध्यतावच्छेदके सत्त्वान्न धूमहेतावव्याप्तिरिति भावः।

न च 'नह्यवयवापर्याप्तस्य समुदाये पर्याप्तिरस्ती'ति न्यायेन वह्नित्वेऽपि पर्याप्तिसंबन्धेन निरुक्तप्रतियोगितावच्छेदकतायाः सत्त्वेन कथमव्याप्तिपरिहार इति वाच्यम्, 'आकाशो न द्वौ' इति प्रतीतेः प्रमात्वरक्षार्थं प्रत्येकमात्रवृत्तिधर्मावच्छेदेन व्यासज्यवृत्तिधर्मावच्छिन्नाऽवच्छेदकताश्रयभेदस्याभ्युपगम्यमानत्वात्, तथा च यद्यपि प्रतियोगितावच्छेदकता पर्याप्तिसंबन्धेनोक्तयुक्त्या प्रत्येकमपि वर्तते तथापि तदवच्छेदकं महानसीयत्ववह्नित्वगतद्वित्वमेव न तु वह्नित्वादिगतमेकत्वम्, तस्य न्यूनवृत्तित्वात्, साध्यतावच्छेदकता च वह्नित्वगतैकत्वावच्छिन्नेति एकत्वावच्छेदेन साध्यतावच्छेदके वह्नित्वे महानसीयत्ववह्नित्वगतद्वित्वावच्छिन्नाऽवच्छेदकताश्रयभेदस्य सत्त्वान्नाव्याप्तिरिति।

अथ पर्याप्तेः संसर्गत्वे मानाभावः। न च 'आकाशो न द्वौ' इति प्रतीतिरेव मानमिति वाच्यम्—आकाशत्वावच्छेदेन समवायसम्बन्धावच्छिन्नद्वित्वनिष्ठाऽवच्छेदकताकप्रतियोगिताकभेदविषयकत्वेन तस्याः प्रतीतेर्निर्वाहात्, द्वित्वादेरेव द्वित्वादिसमवायानुयोगितावच्छेदकतयाऽऽकाशत्वादेस्तदनवच्छेदकत्वादिति चेन्न—'आकाशौ' इत्यादिवाक्यजन्यशाब्दबोधस्याप्रमात्वानुरोधेन पर्याप्तिसम्बन्धस्यावश्यमभ्युपगम्यमानत्वात्। उक्तञ्च शिरोमणिना—'पर्याप्तिश्चायमेको घट इमौ द्वौ' इतिप्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेष इत्यलं मान्यानामुपजीव्यानां कटाक्षपातेन।

केचित्तु पर्याप्तेरनङ्गीकारेऽपि न क्षतिः, अवच्छेदकत्वञ्चेत्यादिग्रन्थस्य प्रकारान्तरेणैव व्याख्यानात्, तथा हि—तत्पर्याप्त्यधिकरणत्वम् = अवच्छेदकतापर्याप्त्यधिकरणत्वम्, पर्याप्तिः=परिपूर्तिः, तदधिकरणत्वम्—निरवच्छिन्नत्वे सति स्वनिरूपकप्रतियोगितानिरूपितत्वसंबन्धेन यत्किंचिन्निष्ठाऽवच्छेदकताविशिष्टाऽन्या या अवच्छेदकता तद्वत्त्वमिति यावत्।

क्रमेण दलद्वयप्रयोजनमाह—तेनेति । ह्रदत्ववह्नित्वोभयावच्छिन्नाभावस्य= ह्रदत्ववह्नित्वाभ्यां वह्निर्नास्तीति प्रतीतिविषयाभावस्य । न क्षतिः=नाव्याप्तिः । महानसीयवह्न्यभावीयप्रतियोगितावच्छेदकताया वह्नित्वे सत्त्वेऽपि तस्याः सामानाधिकरण्येन महानसीयत्वावच्छिन्नत्वान्नाव्याप्तिः, द्वितीयाभावप्रतियोगितावच्छेदकताया निरवच्छिन्नाया वह्नित्वे सत्त्वेऽपि तस्या निरुक्तसम्बन्धेन ह्रदत्वनिष्ठाऽवच्छेदकताविशिष्टत्वेन तदन्यत्वाभावान्नाव्याप्तिरित्याहुः ।

❀ दीधितिः ❀

**सत्त्ववति च गुणादौ संयोगाद्यभावोऽपि व्याप्यवृत्तिः । वक्ष्यमाणं वा प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमेव तदवच्छेदकत्वमिहापि बोध्यम् ।**

❀ जागदीशी ❀

ननु व्याप्यवृत्तित्वघटितलक्षणयोः संयोगी सत्त्वादित्यत्रातिव्याप्तिः, स्वसमानाधिकरणाभावाप्रतियोगित्वरूपस्य अवच्छिन्नवृत्तिकान्यत्वस्य वा व्याप्यवृत्तित्वस्य संयोगाभावेऽसत्त्वादत आह—सत्त्ववतीति । तथा च हेतुसमानाधिकरणस्य व्याप्यवृत्तेरित्यन्तेन निरवच्छिन्नहेत्वधिकरणवृत्तित्वं हेत्वधिकरणीभूतयत्किंचिद्व्यक्तिनिष्ठाभावाप्रतियोगित्वं वा व्याप्यवृत्तित्वं विवक्षितमिति भावः । गुरुधर्मेण साध्यतायां व्यभिचारिण्यतिव्याप्तिवारणाय पारिभाषिकावच्छेदकत्वानुसरणस्याऽवश्यकत्वे व्याप्यवृत्तित्वस्य प्रकृतनिरुक्तावप्रवेशेऽपि न क्षतिरित्याशयेनाह—वक्ष्यमाणं वेति । यथाश्रुतस्य प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वस्योक्तौ सत्तावान् जातेरित्यादावव्याप्तिः, तादृशप्रतियोगितावच्छेदकीभूतविशिष्टसत्तात्वानतिरिक्तवृत्तित्वात् सत्तात्वस्य इत्यतो वक्ष्यमाणं वेति । सिद्धान्तलक्षणे वक्ष्यमाणमित्यर्थः । तथा च हेतुमन्निष्ठाभावीययत्सम्बन्धावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येनावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयतत्सम्बन्धावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं तदेव पारिभाषिकावच्छेदकं तदन्यत्वं साध्यतावच्छेदके वाच्यमिति भावः ।

❀ दीपिका ❀

सत्त्ववति च गुणादावितिदीधितिग्रन्थमुत्थापयितुं बीजमाह—ननु व्याप्य-

वृत्तीति। अयमाशयः—चक्रवर्तिनो लक्षणेषु प्रथमद्वयं व्याप्यवृत्तित्वघटितम्, चरमन्तु प्रतियोगिवैयधिकरण्यघटितम्, तत्र प्रथमद्वयस्य संयोगी सत्त्वादित्यादावतिव्याप्तिः, तथा हि—असद्धेतौ साध्याभावस्य लक्षणघटकत्व एव न दोषः, संयोगाभावस्य च स्व (संयोगाभाव) समानाधिकरणसंयोगात्मकाभावप्रतियोगित्वेन मूलावच्छिन्नवृत्तिकतया च व्याप्यवृत्तित्वाभावेन लक्षणाघटकतयाऽभावान्तरमादायातिव्याप्तिरिति।

**तथा चेति।** एवञ्च निरवच्छिन्नहेत्वधिकरणवृत्त्यभावीयप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरिति फलितम्। तथा च संयोगी सत्त्वादित्यादौ निरवच्छिन्नहेत्वधिकरणं गुणादि तत्र वर्तमानोऽभावः संयोगसामान्याभावस्तत्प्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वान्नातिव्याप्तिरिति भावः।

**गुरुधर्मेणेति।** अयमाशयः—कम्बुग्रीवादिमद्वान् द्रव्यत्वादित्यादौ कम्बुग्रीवादिमत्त्वादिगुरुधर्मे प्रतियोगितावच्छेदकताया अनङ्गीकारेण घटत्वादेरेव तदवच्छेदकत्वात् तद्भिन्नत्वस्य साध्यतावच्छेदके सत्त्वादतिव्याप्तिरिति तन्निरासाय वक्ष्यमाणपारिभाषिकावच्छेदकत्वस्वीकारध्रौव्ये तत एव कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिपरिहारसंभवे प्रकृतलक्षणे व्याप्यवृत्तित्वानिवेशेऽपि न दोष इति। ननु तादृशप्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वरूपप्रतियोगितावच्छेदकत्वस्वीकारेऽपि कम्बुग्रीवादिमत्त्वस्य प्रतियोगितावच्छेदकीभूतघटत्वानतिरिक्तवृत्तित्वेन तदन्यत्वस्य साध्यतावच्छेदके विरहादेवातिव्याप्तिनिरासे सिद्धान्तलक्षणीयावच्छेदकत्वप्रवेशो व्यर्थ इत्याशङ्कां समाधत्ते—**यथाश्रुतस्येति।** एवञ्च अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वविवक्षणे सत्तावान् जातेरित्यत्राव्याप्तिः, हेत्वधिकरणे गुणादौ वर्तमानो गुणकर्मान्यत्वविशिष्टसत्ताऽभावस्तत्प्रतियोगितावच्छेदकीभूतविशिष्टसत्तात्वानतिरिक्तवृत्तिसत्तात्वमिति तदन्यत्वस्य साध्यतावच्छेदके विरहात्, अतः सिद्धान्तलक्षणीयमेव पारिभाषिकमवच्छेदकत्वं ग्राह्यमिति भावः।

**तथा चेत्यादि।** एवञ्च सत्तावान् जातेरित्यादौ हेत्वधिकरणं गुणादि तन्निष्ठो विशिष्टसत्ताऽभावः, तत्प्रतियोगिताया अवच्छेदकं विशिष्टसत्तात्वम् सत्तात्वविशिष्टसत्तासम्बन्धिनि गुणे वर्तमानस्य विशिष्टसत्ताऽभावस्य प्रतियोगितावच्छेदकमेवेति न सत्तात्वं पारिभाषिकावच्छेदकमिति भावः।

अत्रेदं बोध्यम्—एतस्य साध्याभावाघटिततया द्वितीयलक्षणाभिप्रायकत्वमेव, प्रथमलक्षणाभिप्रायेण तु हेतुसमानाधिकरणसाध्याभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं तदेव पारिभाषिकमवच्छेदकम् ।

अथैवमपि वह्निमान् धूमादित्यादावव्याप्तिः, इन्धनत्वेन वह्न्यभावप्रतियोगितावच्छेदकीभूतेन्धनत्वस्य वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वेन वह्नित्वस्य पारिभाषिकावच्छेदकत्वाऽपत्तेरिति चेन्न—तादृशाभावप्रतियोगितावच्छेदके यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकत्वे सति यद्धर्मसामानाधिकरण्यस्य विवक्षणेन दोषाभावादिति ।

## ❀ दीधितिः ❀

**भवति च गुणत्व-गुणावृत्तित्व-द्रव्यमात्रसमवेतत्वाद्यवच्छिन्नप्रतियोगिताकव्याप्यवृत्त्यभावप्रतियोगितावच्छेदकगुणत्वाद्यनतिरिक्तवृत्त्येव संयोगत्वमित्याहुः ।**

## ❀ जागदीशी ❀

ननूत्पत्तिदशायां गुणसामान्याभावस्य संयोगवति घटादौ सत्त्वाद् गुणत्वस्य संयोगत्वविशिष्टसम्बन्धिनिष्ठाभावीयसमवायसम्बन्धावच्छिन्नप्रतियोगिताऽनवच्छेदकत्वविरहान्न तमादाय संयोगत्वस्य पारिभाषिकावच्छेदकत्वसंभावनाऽपीत्यत आह—गुणावृत्तित्वेति । गुणासमवेतत्वेत्यर्थः । घटादावुत्पत्तिदशायामपि गुणासमवेतस्य द्रव्यत्वादेः सत्त्वान्न तदभाव इति भावः । संयोगी गुणान्यत्वे सति सत्त्वादित्यादौ गुणावृत्तित्वमादाय संयोगत्वस्य न पारिभाषिकावच्छेदकत्वं संभवति, गुणावृत्तित्वावच्छिन्नाभावस्य हेतुसमानाधिकरणत्वविरहादतः संयोगसाध्यकव्यभिचारिमात्रे यद्धर्ममादाय संयोगत्वस्य पारिभाषिकावच्छेदकत्वं तद्धर्ममाह—द्रव्यमात्रेति । द्रव्यान्यासमवेतत्वेत्यर्थः । उक्ताभावानामव्याप्यवृत्तित्वे संयोगात्मकस्वप्रतियोग्यधिकरणवृत्तित्वेन कदाचिद् गुणत्वादिरूपाणां तत्तत्प्रतियोगितावच्छेदकानां संयोगत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वं न स्यात्, तदेव नास्तीति तेषां व्याप्यवृत्तितया संयोगात्मकप्रतियोग्यधिकरणावृत्तित्वादेतावन्मात्रं सूचयितुमुक्तं—व्याप्यवृत्तीति ।

## ❀ दीपिका ❀

अथ पारिभाषिकावच्छेदकत्वशरीरप्रविष्टयद्धर्मविशिष्टसम्बन्धिनिष्ठाभावे व्याप्यवृत्तित्वविशेषणमावश्यकम्, अन्यथा संयोगी सत्त्वादित्यादौ हेतुसमानाधिकरणसंयोगाभावप्रतियोगितावच्छेदकीभूतसंयोगत्वे संयोगत्वविशिष्टसम्बन्धिद्रव्यवृत्तिसंयोगाभावप्रतियोगितावच्छेदकत्वेन संयोगत्वस्य पारिभाषिकावच्छेदकत्वानुपपत्तेः। यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावे व्याप्यवृत्तित्वनिवेशे कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिः, कपिसंयोगत्वस्य कपिसंयोगत्वविशिष्टसम्बन्धिनिष्ठव्याप्यवृत्तिघटाभावप्रतियोगितानवच्छेदकत्वेन पारिभाषिकावच्छेदकत्वाऽपत्तेरिति हेतुसमानाधिकरणाभावेऽपि व्याप्यवृत्तित्वं निवेश्यमित्येतस्मिन् पक्षे महागौरवमित्याशङ्कां पारिभाषिकावच्छेदकत्वशरीरे व्याप्यवृत्तित्वानिवेशेऽपि वारयति दीधितिकारः-**भवति चेत्यादिना**। तथा च संयोगी सत्त्वादित्यत्र हेतुसमानाधिकरणगुणाद्यभावप्रतियोगितावच्छेदकगुणत्वादेः संयोगत्वविशिष्टसम्बन्धिद्रव्यनिष्ठाभावप्रतियोगितानवच्छेदकत्वेन संयोगत्वस्य पारिभाषिकावच्छेदकत्वं सिद्धयतीति यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावे व्याप्यवृत्तित्वानिवेशेन कपिसंयोगी एतद्वृक्षत्वादित्यादौ दोषाभावेन हेतुसमानाधिकरणाभावेऽपि व्याप्यवृत्तित्वं न निवेशनीयमिति भावः।

अथ गुणं प्रति द्रव्यं समवायिकारणमिति नियमेन द्रव्योत्पत्तिक्षणात् पूर्वं द्रव्यात्मककारणविरहेण न द्रव्योत्पत्तिक्षणे गुणोत्पत्तिः, अपि तु तदुत्तरक्षणे एव, तथा चोत्पत्तिक्षणावच्छेदेन संयोगत्वविशिष्टसम्बन्धिनि घटादौ वर्तमानस्य गुणसामान्याभावस्य प्रतियोगितावच्छेदकमेव गुणत्वमिति संयोगत्वस्य पारिभाषिकावच्छेदकत्वविरहेण संयोगी सत्त्वादित्यत्रातिव्याप्तिरेवेत्याशंकते—**ननूत्पत्तीति**।

ननु द्रव्यत्वस्य कालिकेन गुणवृत्तितया गुणावृत्तिद्रव्यत्वमादाय कथं संयोगत्वस्य पारिभाषिकावच्छेदकत्वं सेत्स्यति अत आह—**गुणासमवेतत्वेत्यर्थ इति**। तथा च हेत्वधिकरणगुणादिवृत्तिगुणासमवेताभावप्रतियोगितावच्छेदके गुणासमवेतत्वे संयोगत्वविशिष्टसम्बन्धिद्रव्यवृत्त्यभावीयप्रतियोगितानवच्छेदकत्वसत्त्वेन भवति संयोगत्वं पारिभाषिकावच्छेदकम्, उत्पत्तिकालावच्छेदेनापि घटादौ गुणासमवेतस्य द्रव्यत्वस्य सत्त्वेन तदभावविरहादिति भावः।

अथैवमपि संयोगी गुणान्यत्वे सति सत्त्वादित्यादौ कर्मान्तर्भावेण व्यभिचारिणि नातिव्याप्तिवारणम्, हेत्वधिकरणे द्रव्ये कर्मणि च गुणासमवेतस्य द्रव्य-

त्वस्य कर्मत्वस्य च सत्त्वेन तदभावविरहात् गुणासमवेतत्वस्य हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वविरहादित्याशङ्कां समाधातुमाह—**संयोगी गुणान्यत्वे सतीति**। गुणावृत्तित्वावच्छिन्नाभावस्य = गुणासमवेतत्वावच्छिन्नाभावस्य। द्रव्यमात्रसमवेतत्वं द्रव्याऽन्यासमवेतत्वे सति सकलद्रव्यसमवेतत्वम्, तत्र विशेष्यांशप्रवेशो फलाभाव इत्यत आह—**द्रव्याऽन्यासमवेतत्वेत्यर्थ इति**। तथा च हेत्वधिकरणे कर्मणि वर्तमानस्य द्रव्याऽन्यासमवेताभावस्य प्रतियोगितावच्छेदके द्रव्यान्यासमवेतत्वे संयोगत्वविशिष्टसम्बन्धिद्रव्यनिष्ठाभावप्रतियोगितानवच्छेदकत्वेन संयोगत्वस्य पारिभाषिकाऽवच्छेदकत्वं सिद्ध्यतीति भावः।

ननु पारिभाषिकावच्छेदकत्वनिवेशकल्पेऽभावे व्याप्यवृत्तित्वाऽनिवेशेन व्याप्यवृत्त्यभावेति दीधितिग्रन्थः सन्दर्भविरुद्धोऽत आह—**उक्ताभावानामिति**। एतेषामभावानामव्याप्यवृत्तित्वे द्रव्येऽपि तेषामभावः स्थास्यति, तथा च संयोगत्वविशिष्टसम्बन्धिद्रव्यनिष्ठाभावप्रतियोगितावच्छेदकमेव गुणत्वादि स्यादिति, व्याप्यवृत्तिपदोपादाने तु द्रव्ये न कदाचित्तेषामभाव इति सरलोऽर्थः।

इति यतीन्द्रस्वामिश्रीरामप्रपन्नाचार्यविरचितायां दीपिकायां

चक्रवर्तिलक्षणव्याख्यानं समाप्तम्।



❀ दीधितिः ❀

**साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यावच्छेदकस्व-समानाधिकरणसाध्याभाववत्वकत्वम् ।**

❀ जागदीशी ❀

प्रगल्भलक्षणं दूषयितुमुपन्यस्यति—साध्यतावच्छेदकेति । स्वपदं हेतुतावच्छेदकविशिष्टहेतुपरम्, तथा च यद्धर्मावच्छिन्नसमानाधिकरणसाध्याभावत्वावच्छेदेन साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं तद्धर्मवत्त्वं पर्यवसितम् । अवच्छेदकत्वञ्चेहाऽनतिरिक्तवृत्तित्वम् । व्यभिचारिणि तु हेतुसमानाधिकरणस्य साध्यसामान्याभावस्यैव साध्यसामानाधिकरण्यविरहान्नातिप्रसङ्गः । विशिष्टसत्तावान् जातेरित्यादौ यावत एव हेतुसमानाधिकरणस्य साध्याभावस्य सत्तारूपसाध्यसामानाधिकरण्यादतिव्याप्तिरतः—साध्यतावच्छेदकावच्छिन्नेति । तथा च विशिष्टसत्ताऽभावस्य तादृशस्य विशिष्टसत्तात्वावच्छिन्नासमानाधिकरणत्वान्नातिप्रसङ्गः ।

❀ दीपिका ❀

प्रगल्भलक्षणद्वयमेकदोषेण दूषयितुमुपन्यस्यति दीधितौ—**साध्यतावच्छेदकेति** । साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यावच्छेदकं स्वसमानाधिकरणसाध्याभावत्वं यस्य, तस्य भावस्तत्त्वमित्यर्थः । साध्यसामानाधिकरण्यम् = साध्याधिकरणवृत्तित्वम् ।

ननु अवच्छेदकत्वमिह न स्वरूपसम्बन्धविशेषः, हेतुसमानाधिकरणसाध्याभावत्वस्य साध्यसामानाधिकरण्यावच्छेदकत्वे मानाभावात् । नापि अन्यूनवृत्तित्वम्, साध्यसामानाधिकरण्यस्य धूमादावपि सत्त्वेन तत्र च वह्नित्वेन घटाभावत्वस्यासत्त्वेन न्यूनवृत्तिकतया वह्निमान् धूमादित्यादावव्याप्तेरत आह—**अवच्छेदकत्वं चेति** । तथा च साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यानतिरिक्तवृत्तियद्धर्मावच्छिन्नसमानाधिकरणसाध्याभावत्वं तद्धर्मवत्त्वं व्याप्तिरिति फलितम् । अत्र यद्धर्मपदेन हेतुतावच्छेदको ग्राह्यः । वह्निमान् धूमादित्यादौ धूमत्वावच्छिन्नहेतुसमानाधिकरणवह्नित्वेन घटाभावत्वं वह्नित्वावच्छिन्नवह्न्यधिकरणपर्वतादिनिरूपितवृत्तित्वानतिरिक्तवृत्ति वर्तते इति लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ वह्नित्वावच्छिन्नाधिकरणीभूतायोगोलकवृत्तिधूमाभावत्वस्य धूमत्वावच्छि-

ऽधिकरणपर्वतादिनिरूपितवृत्तित्वातिरिक्तवृत्तिकतया नातिव्याप्तिरित्याह— **व्यभिचारिणि त्विति**।

साध्यतावच्छेदकावच्छिन्नत्वनिवेशफलमाह— **विशिष्टसत्तेति**। तथा च साध्यतावच्छेदकावच्छिन्नत्वाऽनिवेशे जातिसमानाधिकरणविशिष्टसत्ताऽभावे गुणाऽऽत्मकेऽधिकरणे सत्तारूपसाध्यसामानाधिकरण्यसत्त्वेन विशिष्टसत्ताऽभावत्वस्य सत्ताऽऽत्मकसाध्यसामानाधिकरण्यानतिरिक्तवृत्तिकतया भवत्यतिव्याप्तिः। तन्निवेशे तु विशिष्टसत्ताऽभावस्य गुणादावेव वर्तमानत्वेन विशिष्टसत्तात्वावच्छिन्नसामानाधिकरण्यविरहेण नातिव्याप्तिरित्याह— **तथा चेति**। साध्यतावच्छेदकावच्छिन्नत्वनिवेशे चेत्यर्थः। तादृशस्य = हेतुतावच्छेदकावच्छिन्नसमानाधिकरणस्य।

## ❀ जागदीशी ❀

**अत्र च साध्यसामानाधिकरण्यं येन सम्बन्धेन साध्यता तेन सम्बन्धेन साध्याधिकरणे दैशिकविशेषणतया वृत्तित्वरूपं ग्राह्यम्, तेन द्रव्यत्वादिसमानाधिकरणस्य ज्ञानाद्यभावस्य विषयतया ज्ञानाधिकरणे वृत्तावपि समवायेन ज्ञानसाध्यके द्रव्यत्वादिहेतौ नातिव्याप्तिः, न वा कालः प्रमेयत्वादित्यादौ सर्वेषामेव साध्याभावानां साध्यवति काले कालिकसम्बन्धेन वृत्तावप्यतिप्रसङ्गः।**

## ❀ दीपिका ❀

ननु आत्मा ज्ञानवान् द्रव्यत्वादित्यत्र समवायेन ज्ञानसाध्यके द्रव्यत्वहेतावतिव्याप्तिः, द्रव्यत्वाधिकरणे पृथिव्यादौ वर्तमानस्य ज्ञानाभावस्य विषयतासम्बन्धेन साध्यतावच्छेदकीभूतज्ञानत्वावच्छिनाधिकरणपृथिव्यादिवृत्तित्वेन ज्ञानाभावत्वस्य साध्यसामानाधिकरण्यानतिरिक्तवृत्तित्वादित्यत आह— **अत्र चेति**। प्रगल्भप्रथमलक्षणे चेत्यर्थः। तेन सम्बन्धेन = साध्यतावच्छेदकसम्बन्धेन। तेन = साध्यनिष्ठाऽऽधेयतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशेन। **नातिव्याप्तिरिति**। तथा च समवायसम्बन्धेन ज्ञानाधिकरणे आत्मनि ज्ञानाभावस्याविद्यमानतया न साध्यसामानाधिकरण्यमिति भावः।

साध्यसामानाधिकरण्यघटकवृत्तितायां स्वरूपसम्बन्धावच्छिन्नत्वनिवेशफलमाह— **न वेति**। तथा च तदनिवेशे साध्यतावच्छेदकस्वरूपसम्बन्धेन कालत्वाधिकरणे काले हेतुसमानाधिकरणकालत्वाभावस्य कालिकसम्बन्धेन वर्तमानतया कालः

प्रमेयत्वादित्यत्राऽतिव्याप्तिः स्यात्, तन्निवेशे तु कालिकेन वर्तमानत्वेऽपि स्वरूपेणाऽवर्तमानत्वान्न दोषः। नातिप्रसंगः = नातिव्याप्तिः।

ननु धूमवान् वह्नेरित्यादौ साध्यतावच्छेदकसंयोगसम्बन्धेन साध्यवति पर्वते कालिकसम्बन्धेन धूमाभावस्य वर्तमानतया साध्यसामानाधिकरण्यसत्त्वेनातिव्याप्तिसंभवे स्थलान्तरानुधावनं व्यर्थमिति चेन्न—जन्यमात्रस्य कालोपाधित्वे मानाभावेन साध्यवति पर्वते धूमाभावस्य केनापि सम्बन्धेनाऽवर्तमानत्वात्।

## ❀ जागदीशी ❀

साध्याभावनिष्ठं हेतुसामानाधिकरण्यमपि हेतुतावच्छेदकसम्बन्धेन प्रकृतहेतोर्यादृशाधिकरणं तत्र विशेषणतया वृत्तित्वरूपं बोध्यम्। तेनाऽयमात्मा ज्ञानादित्यादौ विषयतया ज्ञानस्य हेतोरधिकरणे वर्तमानस्याऽऽत्मत्वाद्यभावस्य, द्रव्यं विशिष्टसत्त्वादित्यादौ च सत्तासमानाधिकरणस्य साध्यसामान्याभावस्य साध्यसामानाधिकरण्यविरहेऽपि नाऽव्याप्तिः। न वा कालः कालपरिमाणादित्यादौ हेत्वधिकरणे कालिकसम्बन्धेन वर्तमानस्य कालत्वादिसामान्याभावस्य साध्यवति दैशिकविशेषणतया वृत्तित्वविरहेऽपि क्षतिः।

## ❀ दीपिका ❀

अथैवमपि अयमात्मा ज्ञानादित्यत्राऽव्याप्तिः, विषयतासम्बन्धेन ज्ञानस्य हेतोरधिकरणे पृथिव्यादौ वर्तमानस्याऽऽत्मत्वाभावस्य समवायेनाऽऽत्मत्वाधिकरणे आत्मनि वृत्तित्वाभावेन साध्यसामानाधिकरण्यविरहादित्यत आह—**साध्याभावनिष्ठमिति**। हेतुसामानाधिकरण्यम् = हेत्वधिकरणवृत्तित्वम्। यादृशपदं हेतुतावच्छेदकावच्छिन्नपरम्। तेन = हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणत्वप्रवेशेन। **आत्मत्वाभावस्येति**। अस्य अग्रेतनेन साध्यसामानाधिकरण्यविरहेऽपीत्यनेनान्वयः। तथा च हेतुतावच्छेदकीभूतसमवायसम्बन्धेन ज्ञानाधिकरणे आत्मनि आत्मत्वाभावस्यावर्तमानतया न हेतुसामानाधिकरण्यम्, अपि तु व्यधिकरणधर्मावच्छिन्नस्य आत्मत्वत्वेन घटाभावादेरेव तस्य साध्यसामानाधिकरण्यसत्त्वान्नाऽव्याप्तिः।

ननु वह्निमान् धूमादित्यत्र कालिकेन हेत्वधिकरणीभूतघटादौ वर्तमानस्य वह्निसामान्याभावस्य साध्यसामानाधिकरण्यविरहेण अव्याप्तिसंभवे तत्परित्यागे बीजाभाव इति चेन्न—जन्यमात्रस्य कालोपाधित्वानङ्गीकर्तृमते तत्राऽव्याप्तिविरहात्।

केचित्तु संयोगेन वह्न्यभावस्याऽव्याप्यवृत्तित्वेन साध्यसामानाधिकरण्यसत्त्वाद् वह्न्यभावमादाय नाऽव्याप्तिरिति स्थलान्तरानुसरणमित्याहुः। अन्ये तु साध्यसामानाधिकरण्यस्य स्वरूपेण निवेशे एव वह्निमान् धूमादित्यादावव्याप्तिः संभवति नाऽन्यथा, कालिकादिना वह्न्यभावे साध्यसामानाधिकरण्यसत्त्वात्, अयमात्मा ज्ञानादित्यत्र तूभयथैवाऽव्याप्तिरित्यभिप्रायेण स्थलान्तरानुधावनमित्याहुः। हेतुतावच्छेदकावच्छिन्नत्वनिवेशनफलमाह—**द्रव्यं विशिष्टसत्त्वादिति**। तथा च तदनिवेशे सत्ताधिकरणे गुणे वर्तमानस्य द्रव्यत्वसामान्याभावस्य द्रव्यत्वसामानाधिकरण्यविरहेण द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिः, तन्निवेशे तु विशिष्टसत्तात्वावच्छिन्नाधिकरणे द्रव्ये वर्तमानो द्रव्यत्वत्वेन गुणाद्यभाव एव तस्य द्रव्यत्वसामानाधिकरण्यसत्त्वान्नाऽव्याप्तिरिति। स्वरूपेण हेत्वधिकरणवृत्तित्वनिवेशफलमाह—**न वेति**। क्षतिः= अव्याप्तिः। तथा च तदनिवेशे कालः कालपरिमाणादित्यत्र समवायेन कालपरिमाणाधिकरणे काले कालिकसम्बन्धेन वर्तमानस्य कालत्वसामान्याभावस्य काले स्वरूपेण वृत्तित्वाभावेन कालत्वसामानाधिकरण्यविरहादव्याप्तिः स्यात्, तन्निवेशे तु हेत्वधिकरणे काले स्वरूपेण वर्तमानो न कालत्वाभावः, अपि तु कालत्वेन घटाभावादिरेव, तस्य च काले स्वरूपेण वृत्तित्वेन साध्यसामानाधिकरण्यसत्त्वान्नाऽव्याप्तिरिति भावः। न च धूमाधिकरणे पर्वतादौ कालिकेन वर्तमानस्य वह्निसामान्याभावस्य स्वरूपेण पर्वतादिवृत्तित्वविरहेण वह्निमान् धूमादित्यत्राऽप्यव्याप्तिसंभवे स्थलान्तरानुधावनं व्यर्थमिति वाच्यम्—जन्यमात्रस्य कालोपाधित्वे प्रमाणाभावेन वह्न्यभावस्य केनापि सम्बन्धेन पर्वतवृत्तित्वविरहेण दोषाभावात्।

## ❀ जागदीशी ❀

साध्याभावस्तु पूर्वोक्तद्वितीयरीत्या बोध्यः। तेन व्यधिकरणधर्मावच्छिन्नाऽभावाऽसत्त्वेऽपि साध्यस्य विशिष्टाभावादिकमादायैव लक्षणसंगमनान्न प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थावताराऽसङ्गतिः। कपिसंयोगी सत्त्वादित्यादौ कपिसंयोगाभावस्य साध्यसमानाधिकरणत्वेऽपि द्रव्यमात्रसमवेतत्वावच्छिन्नाभावस्य साध्यसामानाधिकरण्यविरहान्नातिव्याप्तिः। कालिकसम्बन्धावच्छिन्नप्रतियोगिताके गगनाभावस्याभावे साध्ये यत्र प्रमेयत्वादिकं हेतुस्तत्र हेतुमति दैशिकविशेषणतया वर्तमानस्याऽऽकाशाभावात्मकस्य साध्याभावस्य साध्यवति दैशिकविशेषणतया वृत्तावपि

**हेतुसमानाधिकरणस्य नित्यत्वादिसामान्याभावस्यापि निरुक्तसाध्याभावतया तस्यैव साध्यसामानाधिकरण्यविरहान्नातिव्याप्तिः ।**

## ❀ दीपिका ❀

अथ महानसीयत्वविशिष्टवह्न्यभावस्य वह्निघटोभयाभावस्य च हेतुसमानाधिकरणस्य साध्यसामानाधिकरण्यसत्त्वेन विनापि व्यधिकरणधर्मावच्छिन्नं तादृशाभावमादायैव लक्षणसमन्वयसंभवे 'प्रतियोग्यवृत्तिश्चे'ति ग्रन्थानुत्थितिप्रसङ्ग इत्यत आह—**साध्याभावस्त्विवति** । पूर्वोक्तद्वितीयरीत्या = साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वेन । एवञ्च महानसीयत्वस्य उभयत्वस्य वा वह्निसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वेन साध्यव्यापकतावच्छेदकरूपत्वाभावेन न विशिष्टाभावस्य निरुक्तोभयत्वावच्छिन्नाभावस्य च निरुक्तसाध्याभावत्वम्, अपि तु वह्नित्वेन घटाभावादेरेवेति न तद्ग्रन्थानुत्थितिप्रसङ्ग इति बोध्यम् ।

तेन = साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावस्यैव साध्याभावपदेन विवक्षणेन । भट्टाचार्यास्तु विशिष्टाभावो विशेष्यविशेषणसम्बन्धाभावरूपः, उभयाभावश्च परम्परासम्बन्धेन द्वित्वाभावरूप इति मतेनेदं लक्षणम्, तेन न तद्ग्रन्थावताराऽसङ्गतिरित्याहुः ।

नन्वेवमपि कपिसंयोगी सत्त्वादित्यत्रातिव्याप्तिः, सत्ताधिकरणे वृक्षे वर्तमानस्य कपिसंयोगाभावस्य कपिसंयोगरूपसाध्यसामानाधिकरण्यसत्त्वादिति चेन्न—द्रव्याऽन्यासमवेतत्वावच्छिन्नाभावस्यापि हेतुसमानाधिकरणनिरुक्तसाध्याभावतया तस्य च साध्यसामानाधिकरण्यविरहादित्याह—**कपिसंयोगी सत्त्वादिति** । साध्यसमानाधिकरणत्वेऽपीत्यस्य नातिव्याप्तिरित्यनेनान्वयः। अतिव्याप्त्यभावे बीजमाह—**द्रव्यमात्रसमवेतत्वेति** । द्रव्यान्याऽसमवेतत्वेत्यर्थः ।

अथैवमपि कालिकसम्बन्धावच्छिन्नप्रतियोगिताकगगनाभावाभाववान् प्रमेयत्वादित्यत्र जन्यपदार्थान्तर्भावेण व्यभिचारिण्यतिव्याप्तिः, हेत्वधिकरणे घटादौ स्वरूपेण वर्तमानस्य गगनाभावात्मकसाध्याभावस्य साध्याधिकरणे गगनादौ स्वरूपेण वर्तमानसाध्यसामानाधिकरण्यसत्त्वादिति चेन्न—नित्यत्वादिसामान्याभावस्यापि हेतुसमानाधिकरणतया साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकतया च लक्षणघटकस्य साध्याधिकरणे गगनादौ वृत्तित्वविरहादित्याह—**कालिकसंबन्धेति** । गगनाभावस्याभावे = कालिकसम्बन्धेन गगनाभावो नास्तीति प्रतीति-

व्याप्तिके। साध्यवति=नित्ये गगनादौ, वृत्त्यप्रवेशस्य नातिव्याप्तिरित्यनेनाऽन्वयः। अतिव्याप्त्यभावे बीजमाह—हेतुसमानाधिकरणस्येति। निरुक्तेति। साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकेत्यर्थः। साध्याधिकरणे नित्ये वर्तमानस्य घटाभावादेः प्रतियोगितानवच्छेदकत्वस्य नित्यत्वत्वे सत्त्वेन नित्यत्वत्वस्य साध्यव्यापकतावच्छेदकरूपत्वमिति। तस्यैव=नित्यत्वसामान्याभावस्यैव। सामानाधिकरण्यविरहात्=साध्याधिकरणे नित्ये गगनादौ वृत्तित्वविरहात्।

ननु एतल्लक्षणस्य निर्दुष्टत्वेऽग्रिमलक्षणानुत्थानप्रसङ्ग इति चेदत्रोच्यते—प्रथमलक्षणेऽवच्छेदकत्वस्य प्रकारतया निवेशेन गौरवम्, द्वितीय लक्षणे चोद्देश्यविधेयभावेनाऽन्वयात्, उद्देश्यविधेयभावस्थले चोद्देश्यतावच्छेदकावच्छेदेनैव विधेयान्वयस्य व्युत्पत्तिसिद्धत्वेन संसर्गमर्य्यादयैव प्रमात्वस्याऽवच्छेदकत्वलाभ इति लाघवम्। किञ्च सामानाधिकरण्यस्याव्याप्यवृत्तित्वमते कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिश्च, तथा हि—साध्यसामानाधिकरण्यानतिरिक्तवृत्तित्वं च स्वव्यापकतत्कत्वरूपम्, तथा च यद्धर्मावच्छिन्नसमानाधिकरणसाध्याभावत्वव्यापकं साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं तद्धर्मवत्त्वं व्याप्तिरिति पर्यवसितोऽर्थः। एवञ्च सामानाधिकरण्यस्याऽव्याप्यवृत्तित्वमते कपिसंयोगाभावे साध्यसामानाधिकरण्याभावस्यापि सत्त्वेन कपिसंयोगसामानाधिकरण्यस्य कपिसंयोगाभावत्वाऽव्यापकत्वं सुस्पष्टमेवेत्याशयेन द्वितीयलक्षणप्रणयनम्।

### ❀ दीधितिः ❀

**यत्समानाधिकरणसाध्याभावप्रमायां साध्यवत्ताज्ञानप्रतिबन्धकत्वं नास्ति तत्त्वं वा व्याप्तिरिति। तन्न। सर्वत्र साध्याभावपदवैयर्थ्यात्।**

### ❀ जागदीशी ❀

यत्समानाधिकरणेति। **यत्समानाधिकरणसाध्याभावप्रमासामान्ये** इत्यर्थः। तेन धूमवान् वह्नेरित्यादौ व्यधिकरणधर्मावच्छिन्नसाध्याभावप्रमाव्यक्तेः साध्यवत्ताज्ञानाऽविरोधित्वेऽपि साध्यसामान्याभावप्रमाया एव साध्यवत्ताज्ञानविरोधितया नातिव्याप्तिः। व्यधिकरणधर्मावच्छि-

न्नसाध्याभावस्य साध्यसामान्याभावत्वभ्रमदशायां पर्वतो न वह्निमानि-त्याकारकतद्बुद्धेः साध्यवत्ताज्ञानविरोधित्वादसम्भवः स्यादतः—प्रमात्वो-पादानम् ।

❀ दीपिका ❀

**यत्समानाधिकरणेति**—दीधितिः । पर्वतो वह्नित्वेन घटाभाववानित्याकारिका प्रमा 'पर्वतो वह्निमान्' इत्याकारकसाध्यवत्ताज्ञानस्य प्रतिबन्धिका नास्ति, तादृशज्ञानस्य 'पर्वतो वह्न्यभाववान्' इत्याकारकज्ञानस्यैव प्रतिबन्धकत्वादिति वह्निमान् धूमादित्यत्र लक्षणसमन्वयः । अयोगोलकं धूमाभाववदित्याकारिका वह्निसमानाधिकरणसाध्याभावप्रमा 'अयोगोलकं धूमवदि' त्याकारकसाध्यवत्ताज्ञानप्रतिबन्धिकैवेति नातिव्याप्तिरपीति ।

ननु धूमवान् वह्नेरित्यादौ धूमत्वेन घटाभाववदयोगोलकमित्याकारिकायाः प्रमायाः 'अयोगोलकं धूमवदि'तिसाध्यवत्ताज्ञानस्य प्रतिबन्धकत्वाभावसत्त्वेनाऽतिव्याप्तिरित्यत आह—**प्रमासामान्ये इति** । तादृशप्रमात्वावच्छेदेनेत्यर्थः । अवच्छेदकत्वमिहापि पूर्वोक्तरीत्याऽनतिरिक्तवृत्तित्वरूपं ग्राह्यम् । तथा च तद्वति तत्प्रकारकज्ञानत्वरूपप्रमात्वस्य विशेष्यीभूतज्ञानत्वानतिरिक्ततया ज्ञानत्वस्य साध्यवत्ताज्ञानप्रतिबन्धकवृत्तितया विशिष्टप्रमात्वस्यापि साध्यवत्ताज्ञानप्रतिबन्धकवृत्तित्वेनानतिरिक्तवृत्तित्वं दुर्घटमिति साध्यवत्ताज्ञानप्रतिबन्धकाऽवृत्त्यधिकरणतानिरूपितनिरूपकतावच्छेदकयत्समानाधिकरणसाध्याभावप्रमात्वकत्वमिति । पर्यवसितोऽर्थः । एवञ्च यत्समानाधिकरणसाध्याभावप्रमासामान्यान्तर्गतायां धूमसामान्याभावप्रमायां धूमवत्ताज्ञानप्रतिबन्धकत्वमेवास्तीति धूमवान् वह्नेरित्यादौ नातिव्याप्तिरिति भावः । तेन = सामान्यपदनिवेशेन ।

ननु लाघवात् यत्समानाधिकरणसाध्याभावज्ञानसामान्ये इत्येतावतैव सामञ्जस्ये प्रमापदोपादानं व्यर्थमित्यत आह—**व्यधिकरणधर्मावच्छिन्नेति** । तथा च ज्ञानत्वमात्रनिवेशे वह्नित्वेन घटाभावे वह्निसामान्याभावत्वभ्रमदशायां 'पर्वतो वह्न्यभाववानि'त्याकारकभ्रमज्ञानस्यापि 'पर्वतो वह्निमान्' इति साध्यवत्ताज्ञानप्रतिबन्धकत्वेनासम्भव इत्यतः प्रमात्वोपादानम् । न च प्रथमोपस्थितयत्सामानाधिकरण्यदलस्य व्यावृत्तिमनुक्त्वा पश्चादुक्तस्य प्रमादलस्य व्यावृत्तिप्रदर्शनमनुचितमिति वाच्यम्—असम्भवरूपगुरुतमदोषमाशंक्यैव प्रथमतस्तद्व्यावृत्तेः कथनात् ।

## ❀ जागदीशी ❀

प्रमात्वञ्चात्र भ्रमसामान्यभिन्नज्ञानत्वम्, नातस्तादृशबुद्धेरप्यंशतः प्रमात्वादुक्तदोषतादवस्थ्यम्। ह्रदादौ वह्निसामान्याभावप्रमायाः साध्यवत्ताधीविरोधित्वादव्याप्तिरतो यत्समानाधिकरणेति। तच्च फलतः प्रमाविशेषणम्, तथा च यद्धर्मावच्छिन्नवद्विशेष्यकसाध्याभावप्रमासामान्ये इत्यर्थः। तेन एतद्वृक्षत्वसमानाधिकरणस्य संयोगसामान्याभावस्यैव गुणे धर्मिणि प्रमायां साध्यवत्ताज्ञानविरोधित्वेऽपि संयोगी एतद्वृक्षत्वादित्यादौ नाऽव्याप्तिः।

## ❀ दीपिका ❀

अथैवमपि निरुक्तभ्रमात्मकज्ञानस्याभावत्वांशे प्रमात्वात् प्रमापदोपादानेऽप्यसंभवो जागरूक एवेत्यत आह—**प्रमात्वञ्चेति**। भ्रमसामान्यभिन्नज्ञानत्वम् = नित्यज्ञानावृत्तिविषयिताशून्यज्ञानत्वम्। तथा च समानाकारकज्ञानीयविषयिताया ऐक्येन भ्रमीयविषयिताया नित्यज्ञानावृत्तित्वेन न पूर्वोक्तभ्रमात्मकज्ञानमादायासंभव इति भावः। अतः = भ्रमसामान्यभिन्नज्ञानत्वरूपप्रमात्वनिवेशात्। तादृशबुद्धेः = निरुक्तभ्रमज्ञानस्य, अंशतः = अभावत्वांशे। **उक्तदोषेति**। असम्भवरूपदोषेत्यर्थः। अथ भ्रमसामान्यभिन्नत्वरूपप्रमात्वनिवेशेनैव निरुक्तभ्रममादायासंभवस्य वारणसम्भवे ज्ञानत्वपर्यन्तानुधावनं व्यर्थमिति चेन्न—'कामिनी घटवती' इत्यादौ 'घटत्वेन पटाभाववती कामिनो'ति जिज्ञासाया अपि साध्यवत्ताज्ञानप्रतिबन्धकत्वेनाव्याप्तेरिति। यत्समानाधिकरणदलस्य फलमाह—**ह्रदादाविति**। तथा च यत्सामानाधिकरण्यदलानुपादाने 'ह्रदो वह्न्यभाववान्' इति साध्यसामान्याभावप्रमायाः 'ह्रदो वह्निमान्' इति साध्यवत्ताज्ञानप्रतिबन्धकत्वाद् वह्निमान् धूमादित्यादावव्याप्तिः स्यादतस्तदुपादानमिति भावः।

अथैवमपि संयोगी एतद्वृक्षत्वादित्यत्राऽव्याप्तिः, 'गुणः संयोगाभाववान्' इति हेतुसमानाधिकरणसाध्यसामान्याभावप्रमायाः 'गुणः संयोगी'ति साध्यवत्ताज्ञानप्रतिबन्धकत्वादित्यत आह—**तच्च फलत इति**। यद्धर्मावच्छिन्नेत्यत्र यद्धर्मपदं हेतुतावच्छेदकपरम्। एवञ्च गुणः संयोगाभाववानिति प्रमाया एतद्वृक्षत्वावच्छिन्नवद्विशेष्यकत्वाभावेन नाव्याप्तिरिति भावः। तेन = यत्समानाधिकरणत्वस्य प्रमाविशेषणत्वाङ्गीकारेण।

अथैवमपि वह्नित्वेन घटाभाववत्पर्वतकालीनह्रदो वह्न्यभाववानिति बुद्धेः साध्यवत्ताज्ञानविरोधित्वाद् वह्निमान् धूमादित्यत्राव्याप्तिस्तदवस्थैवेति चेन्न–यद्धर्मावच्छिन्नवन्निष्ठविशेष्यतानिरूपितप्रकारतासामान्यं साध्यवत्ताज्ञानप्रतिबन्धकतानवच्छेदकं तद्धर्मवत्त्वमित्यत्र तात्पर्येण प्रकृते पर्वतनिष्ठविशेष्यतानिरूपितवह्न्यभावनिष्ठप्रकारताया विरहेणाव्याप्तेरभावात् ।

ननु यद्धर्मावच्छिन्नावच्छेदकताकविशेष्यताकप्रमासामान्ये इत्यस्यैव सम्यक्त्वे मतुपा यद्धर्मावच्छिन्नवन्निष्ठविशेष्यताकत्वेन नानाधर्मावच्छिन्नविशेष्यताकप्रमासङ्ग्रहकरणमनुचितमिति चेन्न, वह्निमान्, वह्न्यभावादित्यादावतिव्याप्तिनिरासाय तस्यावश्यकत्वात् ।

यद्धर्मावच्छिन्नत्वोपादानेन द्रव्यं विशिष्टसत्त्वादित्यादौ सत्तासमानाधिकरणद्रव्यत्वसामान्याभावप्रमायां साध्यवत्ताज्ञानप्रतिबन्धकत्वेऽपि नाव्याप्तिः । हेत्वधिकरणत्वं हेतुतावच्छेदकसम्बन्धेन ग्राह्यम् , तेन वह्निमान् धूमादित्यादौ नाव्याप्तिरित्यादिकं स्वयमूह्यम् ।

## ❀ जागदीशी ❀

यत्तु साध्यवत्ताज्ञानविरोधित्वं हेतुमन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यकं यत्साध्यवत्ताज्ञानं तद्विरोधित्वं वाच्यम् , तथा च गुणो न संयोगीति प्रमायाः गुणः संयोगीत्याकारकबुद्धिविरोधित्वेऽपि तादृशी साध्यवत्ताधीर्न हेतुमन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यिका गुणत्वादेर्हेतुमदन्यवृत्तित्वादतो नोक्त दोष इति । तत्तुच्छम् , यत्समानाधिकरणा इत्यस्य व्यर्थतापत्तेः, साध्याभावप्रमासामान्ये यद्वन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यकसाध्यवत्ताज्ञानस्य विरोधित्वं नास्ति तत्त्वमित्यस्यैव सम्यक्त्वात् , जलादिधर्मिकवह्निसामान्याभावप्रमायाः साध्यवत्ताधीविरोधित्वेऽपि धूमवन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यकं यद्वह्निमत्ताज्ञानं तदविरोधित्वादेव वह्निमान् धूमादित्यादावव्याप्त्यभावादिति दिक् ।

## ❀ दीपिका ❀

संयोगी एतद्वृक्षत्वादित्यत्राऽव्याप्तिवारणाय साध्यवत्ताज्ञानविरोधित्वमन्यथा व्याचक्षाणानां मतं दूषयितुमुपन्यस्यति यत्त्विति । तादृशी=गुणः संयोगीत्याकारिका ।

अथ हेतुमद्वृत्तिधर्मावच्छिन्नविशेष्यकसाध्यवत्ताज्ञानविरोधित्वनिवेशेऽपि सकलदोषनिरासंभवे मात्रपदं व्यर्थम्। न च पर्वतो वह्निमान् धूमादित्यादौ प्रमेयत्वस्य हेतुमत्पर्वतवृत्तिधर्मतया प्रमेयत्वावच्छिन्नविशेष्यकवह्निमत्ताज्ञानप्रतिबन्धकत्वस्य 'प्रमेयं वह्न्यभाववदि'ति प्रमायां सत्त्वादव्याप्तिरिति वाच्यम्, प्रमेयत्वावच्छेदेन वह्न्यभावावगाहिज्ञानस्याप्रमात्वात्, प्रमेयत्वसामानाधिकरण्येन वह्न्यभावावगाहिज्ञानस्य प्रमात्वेऽपि तस्य प्रमेयत्वसामानाधिकरण्येन वह्निमत्त्वावगाहिज्ञानाविरोधित्वात्, तद्धर्मावच्छिन्नसामानाधिकरण्येन तदभावनिश्चयदशायामपि तद्धर्मावच्छिन्नसामानाधिकरण्येन तदवगाहिज्ञानसंभवादिति चेन्न, धर्मिविशेषनियन्त्रितप्रतिबन्धकत्वमते तद्धर्मसामानाधिकरण्येन तदभाववत्तानिश्चये तद्धर्मसामानाधिकरण्येन तदवगाहिज्ञानं प्रतिबन्धकम्, तथा च प्रमेयत्वसामानाधिकरण्येन वह्न्यभावावगाहि-'प्रमेयं वह्न्यभाववदि'ति प्रमायां प्रमेयत्वसामानाधिकरण्येन वह्न्यवगाहि-'प्रमेयं वह्निमदि'ति ज्ञानप्रतिबन्धकत्वाद् वह्निमान् धूमादित्यादावव्याप्तेर्मात्रपदप्रवेशमन्तरा दुरुद्धरत्वात्, मात्रपदप्रवेशे तु प्रमेयत्वस्य हेतुमत्पर्वतमात्रवृत्तित्वाभावान्न दोषः। न चैवमपि हेत्वधिकरणवृत्तित्वे सति हेत्वधिकरणभिन्नावृत्तित्वमेव हेतुमन्मात्रवृत्तित्वम्, एवं च ज्ञेयत्वाधिकरणभिन्नत्वाप्रसिद्धौ वाच्यं ज्ञेयत्वादित्यादिकेवलान्वयिहेतावव्याप्तिरिति वाच्यम्, हेत्वभाववद्धर्मस्यैव हेतुमन्मात्रवृत्तिपदेन विवक्षणात्, हेत्वभावश्च स्वनिरूपिताधिकरणतावत्त्वसम्बन्धावच्छिन्नप्रतियोगिताकभेदवद्वृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः। केवलान्वयिनि तादृशसम्बन्धो व्यधिकरण एवेति दिक्। केचित्तु स्वव्यापकहेतुकत्वमेव हेतुमन्मात्रवृत्तिपदेन विवक्षितमिति न दोष इत्याहुः।

एतन्मतं दूषयति-**तत्तुच्छमिति**। यत्समानाधिकरणदलस्य वैयर्थ्ये हेतुमाह-**साध्याभावप्रमासामान्ये** इति। **यद्वन्मात्रेति**। हेतुमन्मात्रेत्यर्थः। यत्सामानाधिकरण्याप्रवेशे पूर्वमुक्ताया अव्याप्तेः परिहारमाह-**जलादिधर्मिकेति**। तथा च जलं वह्न्यभाववदित्याकारकप्रमायाः पर्वतो वह्निमानिति साध्यवत्ताज्ञानविरोधित्वाभावेन जलं वह्निमदिति ज्ञानस्य च भवदुक्तहेतुमन्मात्रवृत्तिधर्मावच्छिन्नविशेष्यकत्वाभावेन वह्निमान् धूमादित्यादौ साध्याभावे यत्सामानाधिकरण्याप्रवेशेऽपि नाव्याप्तिरिति भावः।

## ❀ जागदीशी ❀

अत्र च साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकरूपेण च साध्यवत्ताज्ञानं बोध्यम्, तेन 'पर्वतः समवायसम्बन्धेन न वह्निमान्' इति

प्रमायाः समवायेन वह्निमत्ताबुद्धिं प्रति पर्वतो महानसीयवह्निमान्नेति प्रमायाश्च संयोगेन महानसीयवह्निमत्ताबोधं प्रति प्रतिबन्धकत्वेऽपि वह्निमान् धूमादित्यादौ नाऽव्याप्तिः। प्रतिबन्धकत्वञ्चावच्छेदकधर्मवत्ताग्रहादिऽव्यावृत्तं ग्राह्यम्, तेन वह्निसामान्याभावावच्छेदकतया गृहीतस्य महानसीयवह्न्यभावादेः पर्वतादौ प्रमायाः संयोगसम्बन्धावच्छिन्नपर्वतधर्मिकवह्निमत्ताबुद्धिविरोधित्वेऽपि नासंभवः।

❁ दीपिका ❁

**अत्र चेति**। प्रगल्भद्वितीयलक्षणे इत्यर्थः। तथा च साध्यवत्ताज्ञानेत्यस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकमात्रावच्छिन्नप्रकारताशालिज्ञानेत्यर्थः। प्रकारतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशफलमाह—**समवायसम्बन्धेनेति**। वह्निमत्ताबुद्धिं प्रतीत्यस्याग्रेतनेन प्रतिबन्धकत्वेऽपीत्यनेनान्वयः। अयमाशयः—साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे समवायसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववान् पर्वत इति प्रमायाः समवायेन वह्निमान् पर्वत इति ज्ञानप्रतिबन्धकत्वाद् वह्निमान् धूमादित्यत्राव्याप्तिः स्यात्, तन्निवेशे तु निरुक्तज्ञानस्य समवायसम्बन्धावच्छिन्नप्रकारकत्वेऽपि साध्यतावच्छेदकीभूतसंयोगसम्बन्धावच्छिन्नप्रकारताकत्वाभावेन साध्यवत्ताज्ञानपदेन ग्रहीतुमशक्यत्वात्, संयोगेन वह्निमानिति निरुक्तसाध्यवत्ताज्ञानाप्रतिबन्धकत्वान्न दोषः।

साध्यतावच्छेदकधर्मावच्छिन्नत्वनिवेशफलमाह—**पर्वतो महानसीयेति**। तदनिवेशे संयोगसम्बन्धावच्छिन्नप्रतियोगिताकमहानसीयवह्न्यभाववान् पर्वत इति प्रमायाः संयोगेन महानसीयवह्निमानिति साध्यवत्ताज्ञानप्रतिबन्धकत्वाद् वह्निसाध्यकधूमहेतावव्याप्तिर्दुर्वारैव, तत्प्रवेशे तु निरुक्तज्ञानस्य महानसीयत्ववह्नित्वोभयधर्मावच्छिन्नप्रकारताकत्वेन साध्यतावच्छेदकीभूतवह्नित्वमात्रावच्छिन्नप्रकारताकत्वाभावेन नाव्याप्तिरिति भावः।

**ननु** महानसीयवह्न्यभाववान् वह्न्यभाववानिति भ्रमकालीन-महानसीयवह्न्यभाववाँश्च पर्वत इति प्रमाया वह्नित्वेन घटाभाववान् वह्निसामान्याभाववान् इति भ्रमकालीन-वह्नित्वेन घटाभाववाँश्च पर्वत इति प्रमायाश्च 'पर्वतो वह्निमानि'ति साध्यवत्ताज्ञानप्रतिबन्धकतयासंभव इत्यत आह—**प्रतिबन्धकत्वं चेति**। अवच्छेदधर्मवत्ताग्रहादिव्यावृत्तम् = ज्ञानवैशिष्ट्यानवच्छिन्नम्। तथा च महानसीयवह्न्यभाववान् पर्वत इति प्रमानिष्ठप्रतिबन्धकतायां महानसीयवह्न्यभाववान् वह्न्यभाववानिति

भ्रमज्ञानवैशिष्ट्यावच्छिन्नत्वेन नासम्भव इति ध्येयम्। तेन = प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशेन। **वह्निसामान्याभावेति।** निरुक्तभ्रमज्ञाने महानसीयवह्न्यभावावच्छेदेन वह्निसामान्याभावस्य बोधेन महानसीयवह्न्यभावोऽवच्छेदक इति भावः।

ननु साध्याभावप्रकारकप्रमासामान्ये साध्यतावच्छेदकगतरूपवृत्तिप्रकारताकसाध्यवत्तानिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबन्ध्यत्वाभावनिवेशेनैव निरुक्तभ्रमकालीनप्रमायाः साध्यवत्ताज्ञानप्रतिबन्धकत्वेऽपि तादृशप्रतिबन्ध्यत्वाभावसत्त्वेनासम्भवासम्भवेन ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशो व्यर्थ इति चेन्न—वह्निमान् वह्नित्वेन घटवानिति भ्रमकालीन-वह्निमान् पर्वत इति ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकतया तादृशज्ञानकालीन-वह्निमान् पर्वत इति साध्यवत्ताज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबन्ध्यताया वह्नित्वेन घटाभावावगाहिप्रमायां सत्त्वेनासम्भवस्य जागरूकत्वादिति दिक्।

## ❀ जागदीशी ❀

**सर्वत्रेति।** साध्यसामानाधिकरण्यावच्छेदकस्वसमानाधिकरणत्वकत्वमित्यत एव प्रथमस्य, द्वितीयस्य च यत्समानाधिकरणप्रमासामान्ये साध्यवत्ताज्ञानप्रतिबन्धकत्वं नास्ति तत्त्वमित्यत एव सामञ्जस्यादिति भावः।

## ❀ दीपिका ❀

प्रगल्भलक्षणद्वयं दूषयति–**सर्वत्रेति** दीधितिः। प्रथमे द्वितीये च लक्षणे इत्यर्थः। न चानुमितिं (प्रति) सिद्धेः प्रतिबन्धकत्वेनासंभववारणाय द्वितीयलक्षणे साध्याभावदलस्य सार्थक्यमिति वाच्यम्, समूहालम्बनज्ञानप्रतिबन्धकतामादायासंभववारकस्य साध्यवत्त्वज्ञानत्वावच्छिन्नप्रतिबन्ध्यतानिरूपितप्रतिबन्धकत्वस्य विवक्षणात्, सिद्धौ तु अनुमितित्वावच्छिन्नप्रतिबन्ध्यतानिरूपितप्रतिबन्धकताया एव सत्त्वादिति।

## ❀ जागदीशी ❀

यत्तु यत्समानाधिकरणसाध्याभावत्वावच्छेदेन साध्यतावच्छेदकावच्छिन्नप्रतियोगिसामानाधिकरण्यं तत्त्वमेव प्रथमलक्षणार्थः। तथा च धूमसमानाधिकरणस्य घटादिसामान्याभावस्य वह्नित्वावच्छिन्नघटाद्यप्रसिद्ध्या साध्यतावच्छेदकावच्छिन्नप्रतियोगिसामानाधिकरण्याभावादसम्भवः स्यादतः साध्याभावपदम्। न चैवमपि प्रतियोगिपदवैयर्थ्यमिति

वाच्यम्, अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वे साध्यतावच्छेदकावच्छिन्न-प्रतियोगिसामानाधिकरण्याभावस्याखण्डस्यैव निविष्टत्वात्। एवं द्वितीय-लक्षणे साध्यतावच्छेदकावच्छिन्नप्रतियोगिमत्ताबोधविरोधित्वं निवेश्य साध्याभावपदसार्थक्यं बोध्यमिति। तन्मन्दम्, प्रतियोग्यवृत्तिश्चेत्यादि-मूलावतारानुरोधेन साध्याभावस्य पूर्वोक्तद्वितीयरीत्यैव वक्तव्यतया हेतु-समानाधिकरणस्य वह्नित्वेन घटाभावादेः साध्यतावच्छेदकावच्छिन्नप्रति-योगिसामानाधिकरण्याप्रसिद्ध्या तादृशपदप्रक्षेपेऽपि अव्याप्तितादव-स्थ्यात्। न च घटत्वेन वह्न्यभाव एव वह्नित्वेन घटाभावः, समनियता-भावानामैक्यात्, तथा च तस्यापि साध्यतावच्छेदकविशिष्टवह्निरूपप्रति-योगिनः सामानाधिकरण्यमक्षतमेवेति वाच्यम्, तथा सति घटसामान्या-भावादेरपि घटत्वादिना प्रमेयसामान्याभावात्मकतया तस्यापि साध्यता-वच्छेदकीभूतवह्नित्वावच्छिन्नप्रमेयरूपप्रतियोगिसमानाधिकरणतया तमा-दायासंभववारकस्य साध्याभावपदस्य व्यर्थतायाः वज्रलेपत्वादिति।

❀ दीपिका ❀

प्रगल्भलक्षणद्वये साध्याभावपदसार्थक्याय यतमानानां मतं दूषयितुमुपन्यस्यति- **यत्त्विति**। तथा च यत्समानाधिकरणसाध्याभावत्वं साध्यतावच्छेदकावच्छिन्नप्रति-योग्यधिकरणवृत्तितावच्छेदकं तत्त्वमिति प्रथमलक्षणम्। भवति च घटत्वेन वह्न्य-भावत्वं साध्यतावच्छेदकीभूतवह्नित्वावच्छिन्नवह्निरूपप्रतियोग्यधिकरणपर्वतनिरूपितवृ-त्तितावच्छेदकम्, पर्वते घटत्वेन वह्न्यभावस्य सत्त्वादिति लक्षणसमन्वयः।

अत्र साध्याभावपदानुपादाने यत्समानाधिकरणत्वं साध्यतावच्छेदकावच्छिन्न-प्रतियोगिसामानाधिकरण्यावच्छेदकमित्यस्यैव लक्षणत्वेऽसम्भवः स्यात्, घटादि-सामान्याभावोऽपि यत्समानाधिकरण इति साध्यतावच्छेदकीभूतवह्नित्वावच्छिन्न-घटादिरूपप्रतियोगिनोऽप्रसिद्धेः, तत्पदप्रवेशे तु घटाभावस्य साध्याभावत्वविरहान्न दोष इत्याह—**तथा चेति**। निरुक्तस्य प्रथमलक्षणार्थत्वे चेत्यर्थः। **असम्भवः स्यादिति**। ननु तादात्म्येन प्रमेयसाध्यकस्थलेऽव्याप्तिविरहेण कथमसम्भव इति चेन्न, तादात्म्येन व्याप्यव्यापकभावानङ्गीकारात्। ननु साध्याभावपदप्रवेशेऽपि स्वरूपेण प्रमेयसाध्यकस्थले प्रमेयत्वेन गगनाभावमादाय प्रतियोगिसामानाधिकरण्यविरहादव्याप्तिरिति चेन्न, सामान्यरूपेण विशेषाभावस्यैतन्मतेऽस्वीकारात्।

नन्वेवमपि यत्समानाधिकरणसाध्याभावत्वावच्छेदेन साध्यतावच्छेदकाव-च्छिन्नसामानाधिकरण्यमित्यस्यैव सम्यक्त्वे प्रतियोगिपदं व्यर्थमिति शङ्कते—

न चैवमपीति। प्रतियोगिपदं सार्थकं कुरुते—अनतिरिक्तेति। तथा च साध्यतावच्छेदकावच्छिन्नप्रतियोगिसामानाधिकरण्याभाववद्वृत्ति यत्समानाधिकरण-साध्याभावत्वं तत्त्वमित्यस्य लाभेन प्रतियोगिपदस्याखण्डाभावघटकतया स्वसामानाधिकरण्यघटितवैयर्थ्याभाव इति तत्त्वम्। न च प्रतियोगिपदस्य न्यून-वारकपर्य्याप्त्यनिवेशेनाखण्डत्वविरहादखण्डाभावघटकतया सार्थक्याभिधानं सन्दर्भ-विरुद्धमिति वाच्यम् प्रतियोगिपदस्य न्यूनवारकपर्याप्तिनिवेशे साध्याभावपदसार्थ-क्यसम्भवेन न्यूनवारकपर्याप्तिनिवेशे यत्तुक्तस्तात्पर्यादिति।

पूर्वोक्तद्वितीयरीत्यैव = साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वरू-पेण। तादृशपदेति। साध्याभावपदेत्यर्थः। तथा चेति। समनियताभावा-नामैक्यस्वीकारे इत्यर्थः। तस्यापि = वह्नित्वेन घटाभावादेरपि। तथा सति = सम-नियताभावैक्यमादाय लक्षणस्य सङ्गमनीयत्वे। तस्यापि = घटसामान्याभावादेरपि।

❀ दीधितिः ❀

**यत्तु साध्याभाववति यद्वृत्तौ प्रकृतानुमितिविरोधित्वं नास्ति तत्त्वं व्याप्तिरिति। तन्न, अनुमित्यविरोधित्वज्ञानस्यानुमितिहेतुत्वे साध्याभाववद्वृत्तित्वज्ञानस्यानुमित्यविरोधितया व्यभिचारिण्य-तिप्रसङ्गात्।**

❀ जागदीशी ❀

प्रगल्भस्यैव लक्षणान्तरमुपन्यस्यति–यत्त्विति। यद्वृत्ताविति। यन्निष्ठ-साध्याभाववद्वृत्तित्वसामान्ये इत्यर्थः। तेन वह्निनिष्ठस्य व्यधिकरणधर्मा-वच्छिन्नसाध्याभाववद्वृत्तित्वस्य धूमसाध्यकानुमित्यविरोधित्वेऽपि धूम-वान् वह्नेरित्यादौ नातिव्याप्तिः। धूमादिनिष्ठस्येन्धनत्वावच्छिन्नवह्न्य-भाववद्वृत्तित्वस्यापीन्धनत्वादिप्रकारेण वह्न्यनुमितेर्विरोधित्वादसंभवः स्यादतः प्रकृतेति। साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकरूपेण प्रकृतसाध्यकेत्यर्थः। तथा च तादृशसाध्याभाववद्वृत्तित्वस्य वह्नित्वेन वह्न्यनुमित्यविरोधित्वाददोषः।

❀ दीपिका ❀

दीधितौ यत्त्विति। यन्निष्ठसाध्याभाववद्वृत्तितायां प्रकृतानुमितिविरोधित्वाभाव-स्तत्त्वं व्याप्तिरित्यर्थः। वह्निमान् धूमादित्यत्र धूमनिष्ठ-वह्नित्वेन घटाभाववद्वृत्तितायां प्रकृतानुमितिविरोधित्वाभावसत्त्वेन लक्षणसमन्वयः।

❀ दीपिका ❀

अथ धूमवान् वह्नेरित्यादौ व्यभिचारिणि अतिव्याप्तिः, वह्निनिष्ठ-धूमत्वेन घटाभाववद्वृत्तितायां धूमसाध्यकानुमितिविरोधित्वाभावादित्यत आह—**वृत्तित्वसामान्ये इति**। तथा च वृत्तित्वसामान्यान्तर्गते वह्निनिष्ठधूमसामान्याभाववद्वृत्तित्वे धूमसाध्यकानुमितिविरोधित्वान्नातिव्याप्तिरिति भावः। तेन = वृत्तित्वसामान्यविवक्षणेन। **व्यधिकरणधर्मावच्छिन्नसाध्याभावेति**। धूमत्वेन घटाद्यभावेत्यर्थः। प्रकृतपदोपादानफलमाह—**धूमादिनिष्ठेति**। अयमाशयः—इन्धनत्वेन वह्न्यभाववद्वृत्तिर्धूम इति ज्ञानसत्त्वेऽपि इन्धनत्वप्रकारकवह्न्यनुमितिर्न भवति, एवञ्च प्रकृतपदानुपादाने धूमनिष्ठस्येन्धनत्वेन वह्न्यभाववद्वृत्तित्वस्येन्धनत्वप्रकारकवह्न्यनुमितिविरोधित्वादसम्भवः स्यात्, प्रकृतपदोपादाने तु साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकप्रकारकप्रकृतानुमितिविरोधित्वस्य लाभेन निरुक्तवृत्तित्वस्य वह्नित्वप्रकारकवह्न्यनुमितेरविरोधित्वान्न दोष इति। तथा च प्रकृतपदेन निरुक्तार्थलाभे सति। **तादृशेति**। इन्धनत्वावच्छिन्नेत्यर्थः।

❀ जागदीशी ❀

प्रकृतानुमितिविरोधित्वं न प्रकृतानुमितिविरोधिज्ञानविषयत्वमात्रम्, धूमनिष्ठ-वह्नित्वादिना घटाद्यभाववद्वृत्तित्वस्यापि वह्न्यनुमितिविरोधिनो व्यभिचारभ्रमस्य विषयत्वसम्भवात्, किन्तु विषयतया प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वम्। तथा च वह्निनिष्ठवृत्तित्वमात्रस्य धूमसाध्यकानुमितिविरोधित्वाभावाद् व्यभिचारिण्यतिव्याप्तिरतः साध्याभाववतीति। तथा च यन्निष्ठसाध्याभाववद्वृत्तित्वसामान्यं प्रकृतानुमितिप्रतिबन्धकतानवच्छेकं तत्त्वमित्यर्थः। न च घटाभाववद्वृत्तित्वादौ धूमाभाववद्वृत्तितात्वभ्रमदशायामपि धूमसाध्यकानुमित्यनुत्पत्त्या वह्निनिष्ठस्य निर्धूमवृत्तित्वस्य धूमसाध्यकानुमितिप्रतिबन्धकतानवच्छेदकत्वाद् व्यभिचारिण्यतिव्याप्तितादवस्थ्यमिति वाच्यम्, यन्निष्ठसाध्याभाववद्वृत्तित्वविषयितासामान्यं न प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तत्त्वमित्यस्योक्तत्वात्। साध्याभावस्तु पूर्वोक्तद्वितीयरीत्या प्रवेशनीयः, तेन न पूर्वोक्तदोषः।

❀ दीपिका ❀

अथैवमपि धूमवान् वह्नेरित्यत्रातिव्याप्तिः, वह्निनिष्ठधूमसामान्याभाववद्वृत्तित्वज्ञानस्यैवानुमितिविरोधित्वेन तादृशवृत्तित्वस्य धूमानुमितिविरोधित्वाभावादित्यत

आह—**प्रकृतानुमितिविरोधीति**। प्रकृतानुमितिविरोधिज्ञानविषयत्वस्य प्रकृतानुमितिविरोधित्वार्थकत्वे वह्निमान् धूमादित्यत्राव्याप्तिः, वह्नित्वेन घटाभाववद्वृत्तिर्धूम इति ज्ञानस्य व्यभिचारभ्रमदशायां वह्न्यनुमित्यनुत्पत्तेः प्रकृतानुमितिविरोधिज्ञानविषयत्वसत्त्वादित्याह—**धूमनिष्ठवह्नित्वादिनेति**। विषयतया प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वार्थकत्वे तु न दोषः, तादृशवृत्तित्वस्य प्रतिबन्धकतानवच्छेदकत्वात्। साध्याभाववत्पदफलमाह—**तथा चेति**। तादृशावच्छेदकतायाः प्रकृतानुमितिविरोधित्वार्थकत्वे चेत्यर्थः। एवञ्च साध्याभाववत्पदानुपादाने धूमवान् वह्नेरित्यादावतिव्याप्तिः, वह्निनिष्ठस्य महानसादिवृत्तित्वस्य धूमानुमितिप्रतिबन्धकतानवच्छेदकत्वात्। अनुमितिविरोधित्वाभावात् = विषयतया धूमानुमितिप्रतिबन्धकतावच्छेदकत्वाभावात्। ननु सामान्यपदस्य व्यापकत्वार्थकतया वृत्तितासामान्यान्तर्गतवह्निनिष्ठधूमसामान्याभाववद्वृत्तित्वस्य धूमसाध्यकानुमितिप्रतिबन्धकतावच्छेदकत्वात् साध्याभाववत्पदानुपादानेऽपि नातिप्रसक्तिरिति चेन्न, लाघवात् स्वरूपसम्बन्ध (रूप) स्यैवावच्छेदकत्वस्यैव प्रवेशात्, तथा च यन्निष्ठसाध्याभाववन्निरूपितवृत्तित्वसामान्यं प्रकृतानुमितिप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत् तत्त्वमिति फलितोऽर्थः। एवञ्च साध्याभाववत्पदानुपादाने वह्निनिष्ठवृत्तितासामान्ये स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्वविरहाद् धूमवान् वह्नेरित्यादावतिव्याप्तिः स्पष्टैवेति भावः। अथ धूमवान् वह्नेरित्यत्र साध्याभाववत्पदोपादानेऽपि अतिव्याप्तिः, धूमाभाववद्वृत्तितात्वेन घटाभाववद्वृत्तित्वावगाहिनो 'वह्निर्धूमाभाववद्वृत्तिरि' ति भ्रमज्ञानस्यापि धूमानुमितिप्रतिबन्धकतया तत्र विषयविधया घटाभाववद्वृत्तित्वस्यैव प्रतिबन्धकतावच्छेदकतया धूमाभाववद्वृत्तित्वस्य प्रतिबन्धकतानवच्छेदकत्वादित्याशङ्कते—**न चेति**। निर्धूमवृत्तित्वस्य = धूमाभाववद्वृत्तित्वस्य। अतिव्याप्तिं निराकरोति—**यन्निष्ठेति**। तथा च वह्निनिष्ठधूमाभाववद्वृत्तित्वविषयितासामान्यस्य प्रतिबन्धकतावच्छेदकतया नातिव्याप्तिप्रसङ्ग इति भावः।

नन्वेवमप्यसम्भवः, वह्निसामान्याभाववद्वृत्तितात्वेन धूमनिष्ठव्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वावगाहि-'धूमः वह्न्यभाववद्वृत्तिरि' तिज्ञानीयविषयितायाः प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वादिति चेन्न, यन्निष्ठसाध्याभाववद्वृत्तितात्वविशिष्टनिरूपितविषयितासामान्यं न प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तत्त्वमित्यस्यैव व्याप्तिपदार्थत्वात्। न च यन्निष्ठवृत्तित्वविषयितासामान्यं न प्रतिबन्धकतानतिरिक्तवृत्ति तत्त्वमित्यस्यैव सम्यक्त्वे साध्याभाववत्पदं व्यर्थमिति वाच्यम्, वह्न्यभावत्वेन वह्नित्वेन

घटाभावावगाहि-'वह्न्यभाववद्वृत्तिर्धूम' इति ज्ञानीयधूमनिष्ठवृत्तित्वविषयिताया निरुक्तसामान्यान्तर्गतताया निरुक्तानुमितिप्रतिबन्धकतानतिरिक्तवृत्तितया वह्निमान् धूमादित्यादावव्याप्तेर्वारणाय यन्निष्ठवृत्तित्वत्वपर्याप्तावच्छेदकताकविषयितासामान्यं न प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तत्त्वमित्यर्थो वक्तव्यः, तथा च वह्निनिष्ठवृत्तितात्वपर्याप्तावच्छेदकताकविषयितासामान्यस्यैव धूमानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वाभावाद् धूमवान् वह्नेरित्यादावतिव्याप्तिवारणाय साध्याभाववत्पदस्यावश्यकत्वात् ।

अथापि स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशेनैव सामञ्जस्येऽनतिरिक्तवृत्तित्वानुसरणं व्यर्थमिति चेन्न, वह्नित्वेन घटाभाववद्वृत्तित्वावच्छेदेन वह्न्यभाववद्वृत्तित्वनिश्चयविशिष्ट'वह्नित्वेन घटाभाववद्वृत्तिर्धूम' इति निश्चयत्वेन वह्न्यनुमितिप्रतिबन्धकत्वाद् धूमनिष्ठ-वह्नित्वेन घटाभाववद्वृत्तित्वविषयितासामान्यस्य स्वरूपसम्बन्धरूपप्रतिबन्धकतावच्छेदकत्वाद् वह्निमान् धूमादित्यादावव्याप्तेः । न चैवमपि तादृशविषयितासामान्ये प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वनिवेशेनैवोपपत्तौ नञ्द्वयोपादानं व्यर्थमिति वाच्यम्, धूमवान् वह्नेरित्यत्रातिव्याप्तेः, वह्निनिष्ठनिर्धूमवृत्तित्वावगाह्याहार्यज्ञाने अप्रामाण्यज्ञानास्कन्दिततादृशज्ञाने, तद्विषयावगाहिसंशये च निर्धूमवृत्तित्वविषयितायाः सत्त्वेन निरुक्तप्रतिबन्धकतातिरिक्तवृत्तित्वात् । सिद्धान्ते च नञ्द्वयोपादानात् यद्रूपावच्छिन्नविषयितासामान्यं प्रकृतानुमितिप्रतिबन्धकताशून्यानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयावृत्ति तादृशविषयिताभिन्नयन्निष्ठसाध्याभाववद्वृत्तित्वविषयितासामान्यं तत्त्वमित्यर्थो लभ्यते । तथा च सद्धेतुस्थले नियताहार्यज्ञानविषयसंयोगाभाववत्संयोगवत्त्वस्य यद्रूपपदेन धर्त्तव्यतया तद्रूपावच्छिन्नविषयिताभिन्नत्वस्य हेतुनिष्ठसाध्याभाववद्वृत्तित्वविषयितायां सत्त्वाल्लक्षणसमन्वयः । व्यभिचारिणि तु साध्यसामान्याभाववद्वृत्तित्वस्यापि यद्रूपपदेन धर्त्तुं शक्यतया नातिव्याप्तिः।

## ❋ जागदीशी ❋

अनुमित्यविरोधित्वेति । अनुमितिविरोधित्वं नानुमितेः साक्षात्प्रतिबन्धकत्वम्, व्यभिचारधियः साक्षादतथात्वेन व्यभिचारिमात्रेऽतिव्याप्त्यापत्तेः, किन्तु अनुमितिजनकज्ञानविरोधित्वम् । तज्जनकं यदि निरुक्तव्याप्तिज्ञानं तदा तादृशज्ञानं प्रति साध्याभाववद्वृत्तित्वज्ञानं न विरोधि, किन्तु साध्याभाववद्वृत्तित्वमनुमितिविरोधीत्याकारकं ज्ञानमेव तथेति व्यभिचारिण्यतिव्याप्तिः । यदि च साध्याभाववद्वृत्तिर्हेतुरित्याकारकं ज्ञानं प्रकृतानुमितिजनकं तदा निरुक्तव्याप्तेरनुमित्यनुपयुक्ततया तदभिधान-

मर्थान्तरग्रस्तमिति भावः। एतेन यदि प्रकृतानुमितिपदं प्रकृतहेतु-धर्मिकसाध्यव्याप्त्यनुमितिपरम्, न तु प्रकृतसाध्यकानुमितिपरम्, विरोधित्वं च तत्र साक्षादेव निवेश्यते तदा न व्यभिचारिण्यतिप्रसङ्ग इत्यपास्तम्।

## ❀ दीपिका ❀

यत्तुमतदूषणे बीजमाह—दीधितौ—**अनुमित्येति**। अनुमित्यविरोधित्वज्ञान-स्य = प्रकृतव्याप्तिज्ञानस्य। अनुमितिहेतुत्वे = पर्वतो वह्निमानित्यनुमितिजनकत्वे। अनुमित्यविरोधितया = अनुमितिजनकीभूतप्रकृतव्याप्तिज्ञानस्याप्रतिबन्धकतया। तथा च-व्यभिचारज्ञानस्य प्रकृतव्याप्तिज्ञानस्याविरोधित्वेन धूमवान् वह्नेरित्यादावतिव्याप्ति-रिति भावः। अतथात्वेन=अनुमित्यप्रतिबन्धकतया, व्यभिचारनिश्चयस्य व्याप्तिज्ञान-प्रतिबन्धद्वारैवानुमितिविरोधित्वमिति भावः। निरुक्तव्याप्तिज्ञानम्=अनुमित्यविरोधि-स्वरूपम्। तादृशज्ञानम्=प्रकृतव्याप्तिज्ञानम्। **न विरोधीति**। ग्राह्याभावाद्यनवगाहि-त्वादिति शेषः। न च ग्राह्याभावाद्यनवगाहित्वेऽपि मणिमन्त्रादिन्यायेनैव साध्याभा-वावद्वृत्तित्वरूपव्यभिचारज्ञानस्य प्रकृतव्याप्तिज्ञानविरोधित्वं वाच्यमिति वाच्यम्, यज्ज्ञाने सति यज्ज्ञानाभावः तत्रैव मणिमन्त्रादिन्यायेन विरोधित्वस्य कल्पनात्, प्रकृते तु न तथेति भावः। तथा = प्रकृतव्याप्तिज्ञानविरोधि।

**अर्थान्तरेति**। अनभिप्रेतार्थसिद्धिः अर्थान्तरम्। न च व्याप्तिपदेन साध्या-भाववद्वृत्तित्वमेवोच्यते इति नास्ति अर्थान्तरमिति वाच्यम्, यादृशस्थलविशेषे यादृशवस्तुविशेषे व्याप्तिभ्रमो न प्रसिद्धस्तादृशाङ्कुरविशेषेऽव्याप्तिरिति निवेशास-म्भवात्। **एतेनेति**। अर्थान्तरग्रस्तत्वेनेत्यर्थः।

यतीन्द्रस्वामिश्रीरामप्रपन्नाचार्यविरचितायां दीपिकायां
प्रगल्भलक्षणव्याख्यानं समाप्तम्।



### ❀ दीधितिः ❀

**केचित्तु यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीया ये तत्तदधिकरणवृत्तित्वाभावास्तद्वत्त्वम् तत्त्वम् ।**

### ❀ जागदीशी ❀

मिश्रलक्षणं परिष्कर्तुमुपन्यस्यति—केचित्त्विति । केवलान्वयिनि प्रसिद्धावपि वह्न्यादिसाध्यके व्यतिरेकिणि यावन्तः साध्याभावास्तत्तत्सजातीयत्वं तद्वृत्ति अन्यतररूपात्मकमप्रसिद्धमत उक्तं प्रत्येकमिति । यावन्तः साध्याभावास्तेषां प्रत्येकमपि सजातीयत्वमेकस्मिन्नभावे नास्तीत्यत उक्तं तत्तत्साजातीया इति । तदधिकरणवृत्तित्वाभावा इत्युक्तौ तत्पदेन यावत् साध्याभावपरामर्शे वह्निमान् धूमात्, रूपसामान्याभाववान् वायुत्वादित्यादौ साध्याभावात्मकतत्तद्विपक्षावृत्तित्वावच्छिन्नाभावयावद्रूपाधिकरणाप्रसिद्ध्याव्याप्तिरतस्तत्तदधिकरणेति । तथा च प्रातिस्विकरूपेण साध्याभावानुपादाय तत्तत्सजातीयास्तत्तदधिकरणवृत्तित्वाभावा ग्राह्या इति भावः ।

### ❀ दीपिका ❀

मिश्रलक्षणसमन्वयस्तु—यदि साध्याभावपदेन वह्निसामान्याभावो गृह्यते तदा तदधिकरणं ह्रदादिः, तन्निरूपितवृत्तित्वाभावो धूमहेतौ वर्तते, यदि च साध्याभावपदेन वह्नित्वेन घटाभावो गृह्यते तदा घटत्वेन तदधिकरणमहानसादिनिरूपितवृत्तित्वस्याभावो धूमे वर्तते । अयन्तु निष्कर्षः—यदि साध्याभावपदेन साध्यसामान्याभावो गृह्यते तदा तदधिकरणवृत्तित्वसामान्याभावं तत्सजातीयमादाय लक्षणं सङ्गमनीयम् । यदि च साध्याभावपदेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावो गृह्यते तदा तत्सजातीयं व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकं तदधिकरणवृत्तित्वाभावमादाय लक्षणं सङ्गमनीयम् । धूमवान् वह्नेरित्यादौ तु यावत्साध्याभावान्तर्गतो धूमसामान्याभावोऽपि, तदधिकरणायोगोलकनिरूपितवृत्तित्वस्यैव वह्नौ सत्त्वेनातिव्याप्तिविरहः ।

प्रत्येकपदप्रयोजनमाह—**केवलान्वयिनीति ।** अत्र प्रत्येकमिति पदाभावे यद्यपि वाच्यं ज्ञेयत्वादित्यत्र वाच्यत्वेन घटाभावस्यैव लक्षणघटकसाध्याभावतया

तत्सजातीयस्य तदधिकरणपटादिनिरूपितवृत्तित्वाभावस्य घटत्वादिव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य ज्ञेयत्वहेतौ सत्त्वान्नाव्याप्तिः, तथापि वह्निमान् धूमादित्यादौ वह्नित्वेन घटाभावस्य साध्यसामान्याभावस्य च साध्याभावतया तयोः साध्याभावयोः सजातीयस्य कस्यचित्तदधिकरणवृत्तित्वाभावस्यैकस्यासम्भवेऽव्याप्तिरतस्तदुपादानम्। तदुपादाने तु वह्निसामान्याभावस्य साजात्यं तदधिकरणवृत्तित्वसामान्याभावे, वह्नित्वेन घटाभावस्य साजात्यं च घटत्वेन तदधिकरणवृत्तित्वाभावे वर्त्तते इति नाव्याप्तिरित्याशयः। प्रातिस्विकरूपेण साजात्यप्रतियोगित्वं साध्याभावे गृह्यत इति फलितोऽर्थः। ननु यावत्पदस्य प्रथमोपात्तस्य व्यावृत्तिमनुक्त्वा प्रत्येकपदव्यावृत्तिकथनं ग्रन्थकृतोऽनुचितमिति चेन्न, तत्फलस्य धूमवान् वह्नेरित्यादावतिव्याप्तिवारणस्य प्रसिद्धतया तत्परित्यागात्।

तत्तत्सजातीयघटकतत्तत्पदप्रयोजनमाह—**यावन्त इति**। अयमाशयः—तत्तत्सजातीयघटकवीप्सिततत्तत्पदेन प्रातिस्विकरूपेण तदधिकरणवृत्तित्वाभावे साजात्यानुयोगिता लभ्यते। अन्यथा यावतां साध्याभावानामेकस्मिन् तदधिकरणवृत्तित्वाभावे प्रत्येकमपि साजात्यन्नास्तीत्यसम्भवः स्यात्। तत्तदधिकरणेत्यत्र वीप्सिततत्पदप्रयोजनमाह—**तदधिकरणवृत्तित्वाभावा इति**। एवञ्च तत्र एकस्यैव तत्पदस्योपादाने वह्निमान् धूमादित्यत्र रूपसामान्याभाववान् वायुत्वादित्यत्र चाव्याप्तिः, तथाहि—तत्पदेन यावत्साध्याभावपरामर्शे 'तत्तद्ध्रदावृत्तिर्नास्ती'ति प्रतीतिसाक्षिकाभावानां यावतामेकस्याधिकरणस्याप्रसिद्धिः, एवं रूपसामान्याभावस्थले तत्तद्घटावृत्त्यभावानामेकस्याधिकरणस्याप्रसिद्धिर्बोध्या, तत्तत्पदोपादाने तु प्रातिस्विकरूपेण तत्तत्साध्याभावव्यक्तेरेव परामर्शेन तदधिकरणं तत्तद्ध्रदादिरेवेति न दोषः। तत्तद्विपक्षाऽवृत्तित्वम्=निश्चितसाध्याभाववदवृत्तित्वम्।

ननु वह्निमान् धूमादित्यत्राव्याप्तिसंभवे रूपसामान्याभाववान् वायुत्वादिति स्थलानुसरणं सन्दर्भविरुद्धमिति चेदत्र केचित्—भावसाध्यकस्थलेऽव्याप्तिं प्रदर्श्याभावसाध्यकस्थलेऽव्याप्तिप्रदर्शनाय तदुपन्यास इत्याहुः। अपरे तु संयोगसम्बन्धेन साध्यतायामव्याप्तिमुक्त्वा स्वरूपसम्बन्धेन साध्यतायामव्याप्तिमाह—रूपसामान्याभाववानित्याहुः।

## ❀ जागदीशी ❀

व्यधिकरणधर्मावच्छिन्नसाध्याभावसजातीयं घटत्वादिना तदधिकरणवृत्तित्वाभावमादाय व्यभिचारिण्यतिव्याप्तेर्वारणाय—यावन्त इति। तथा च

साध्याभावसजातीयस्य तदधिकरणवृत्तित्वसामान्याभावस्य तत्रासत्त्वान्न दोषः। साध्यसामान्याभाववद्वृत्तित्वस्यैव व्यधिकरणधर्मावच्छिन्नाभावो व्यभिचारिण्यप्यस्तीत्यतः सजातीया इत्युक्तम्।

❀ दीपिका ❀

यावत्त्वनिवेशफलमाह—**व्यधिकरणधर्मेति**। अयमाशयः—यावत्त्वानुपादाने धूमवान् वह्नेरित्यादावतिव्याप्तिः, तथाहि-साध्याभावः = धूमत्वेन घटाभावस्तत्सजातीयस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य घटत्वेन तदधिकरणमहानसादिवृत्तित्वाभावस्य वह्नौ सत्त्वात्, तदुपादाने तु धूमसामान्याभावोऽपि यावदन्तगर्त इति तमभावमादाय यथा न दोषस्तथा पूर्वमेव दर्शितम्। साजात्यनिवेशफलमाह-**साध्यसामान्याभावेति**। तथा च साजात्याप्रवेशे धूमवान् वह्नेरित्यादौ धूमसामान्याभाववद्वृत्तित्वस्य घटत्वादिव्यधिकरणधर्मेणाभावमादायातिव्याप्तिः, तदुपादाने तु धूमसामान्याभावस्य साजात्यं तदधिकरणवृत्तित्वसामान्याभावे एव, न तु घटत्वादिव्यधिकरणधर्मावच्छिन्नतदधिकरणवृत्तित्वाभावे इति नातिव्याप्तिरिति भावः।

❀ दीधितिः ❀

**साजात्यं च समानासमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपेण।**

❀ जागदीशी ❀

ननु घटत्वेन निर्धूमवृत्तित्वस्याभावोऽप्यभावत्वादिना धूमसामान्याभावसजातीय एवेत्यतिव्याप्तितादवस्थ्यमत आह—**साजात्यं चेति**।

यद्यपि साध्याभावनिष्ठं यत्समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्व-व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपम्, तेनैव साजात्यं वाच्यम्, तथा च वह्निसामान्याभावनिष्ठं यत्तादृशान्यतररूपं वह्निनिष्ठवह्नित्वावच्छिन्नप्रतियोगिताकत्वरूपम्, तस्य निर्वह्निवृत्तित्वाभावादावसत्त्वादसम्भवः, तथापि यावन्तः समानाधिकरणधर्मावच्छिन्नाभावास्तावदन्यतमत्व-तदभावान्यतररूपेण साजात्यं वाच्यमित्यदोषः। समनियताभावानामैक्याद् गगनाभाव एव निखिलव्यधिकरणधर्मावच्छिन्नाभाव इति मते तु गगनाभावत्व-तदन्यत्वान्यतररूपेणैव साजात्यं वाच्यम्,

तेन घटत्वेन निर्धूमवृत्तित्वाभावस्यैव गगनत्वादिसमानाधिकरणधर्माव-च्छिन्नप्रतियोगिताकतया धूमसामान्याभावसजातीयत्वेन नातिव्याप्तिः।

❀ दीपिका ❀

अथ धूमवान् वह्नेरित्यादौ धूमसामान्याभावस्याभावत्वेन सजातीयो घटत्वेन धूमसामान्याभावाधिकरणनिरूपितवृत्तित्वस्याभावोऽपीति तादृशाभाववत्त्वस्य वह्नौ सत्त्वेनातिव्याप्तिरिति शङ्कते—**ननु घटत्वेनेति**। निर्धूमवृत्तित्वस्य = धूम-सामान्याभावाधिकरणवृत्तित्वस्य।

**साजात्यं चेति** दीधितिः। समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वव्यधि-करणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपेणेत्यर्थः। तथा च यदि साध्याभावः समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्तदा तत्सजातीयः समानाधिकरणधर्मावच्छि-न्नप्रतियोगिताक एव तदधिकरणवृत्तित्वाभावः, यदि च व्यधिकरणधर्मावच्छिन्नप्रति-योगिताकः साध्याभावस्तदा तत्सजातीयो व्यधिकरणधर्मावच्छिन्नप्रतियोगिताक एव तदधिकरणवृत्तित्वाभावो ग्राह्य इति फलितम्।

ननु साध्याभावनिष्ठं यत्समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्व-व्यधिकरण-धर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपम्, तेनैव साजात्ये वाच्येऽसम्भवः, तथाहि-वह्निसामान्याभावे वह्नित्वावच्छिन्नप्रतियोगिताकत्वस्य सत्त्वेन वह्निसामान्याभावाधिक-रणवृत्तित्वसामान्याभावे वृत्तितात्वावच्छिन्नप्रतियोगिताकत्वसत्त्वेऽपि वह्नित्वावच्छिन्न-प्रतियोगिताकत्वविरहेण साजात्यविरहादित्याशङ्कते-**यद्यपीत्यादिना**। समाधत्ते-**तथापीति**। तथा च तादृशान्यतमत्व-तदभावान्यतररूपेण साजात्यग्रहणे तु वह्निसामान्याभावे तदधिकरणवृत्तित्वसामान्याभावे च तादृशान्यतमत्वरूपेण साजात्यं वर्तते, वह्नित्वेन घटाभावे घटत्वादिना तदधिकरणवृत्तित्वाभावे च तादृशा-न्यतमत्वाभावरूपेण साजात्यं वर्तते, तयोः समानाधिकरणधर्मावच्छिन्नप्रतियोगिताक-त्वाभावादिति नासंभवः। अथैवमपि धूमवान् वह्नेरित्यादावतिव्याप्तिः, घटत्वेन धूमाभाववद्वृत्तित्वाभावस्य गगनाभावस्वरूपत्वेन गगनत्वादिरूपसमानाधिकरणधर्मा-वच्छिन्नप्रतियोगिताकतया तादृशवृत्तित्वाभावधूमसामान्याभावयोः समानाधिकरण-धर्मावच्छिन्नाभावान्यतमत्वेन साजात्यादित्याशङ्क्य समाधत्ते-**समनियतेति**। तद-न्यत्वम् = गगनाभावभेदः। तथा च गगनाभावत्व-गगनाभावभेदान्यतररूपेण साजात्यग्रहणे घटत्वेन धूमसामान्याभाववद्वृत्तित्वाभावे गगनाभावत्वस्य धूमसा-मान्याभावे गगनाभावभेदस्य च सत्त्वेन तयोः साजात्यविरहान्नातिव्याप्तिरिति भावः।

## ❀ दीधितिः ❀

**साध्याभावश्च पूर्वोक्तद्वितीयरीत्या प्रत्येतव्यः ।**

## ❀ जागदीशी ❀

साध्याभावश्चेति । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावोऽत्र साध्याभावपदेनोक्त इत्यर्थः । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वरूपप्रथमरीत्याभिधाने घटत्वविशिष्टवाच्यत्वाद्यभावस्यापि साध्याभावपदार्थतया तत्सजातीयस्य तदधिकरणवृत्तित्वाभावस्य कुत्रापि हेतावसत्त्वादसंभवः स्यादतस्तत्परित्यागः । अत्र साध्यव्यापकताघटकसम्बन्धेनैव साध्यव्यापकस्याभावो ग्राह्यः, तेनैकसम्बन्धेन साध्यव्यापकस्य सम्बन्धान्तरावच्छिन्नाभाववति हेतोर्वृत्तावपि न क्षतिः ।

## ❀ दीपिका ❀

अथात्र यदि साध्याभावपदेन साध्यप्रतियोगिकाभावो गृह्यते तदा वह्निमान् धूमादित्यादौ महानसीयवह्न्यभावस्यापि तादृशयावदन्तर्गततया तत्सजातीयस्य तदधिकरणपर्वतनिरूपितवृत्तित्वाभावस्य धूमहेतावसत्त्वादव्याप्तिः । यदि च साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावो गृह्यते, तदा वाच्यत्वत्वावच्छिन्नप्रतियोगिताकवाच्यत्वाभावाप्रसिद्धया वाच्यं ज्ञेयत्वादित्यादावव्याप्तिरत आह-**दीधितौ साध्याभावश्चेति ।** साध्याभावपदार्थतया=साध्यव्यापकतावच्छेदकप्रतियोगिताकतया, घटत्वविशिष्टवाच्यत्वाद्यभावप्रतियोगिनो वाच्यत्वादेर्वह्न्यादिरूपसाध्यव्यापकतया तन्निष्ठप्रतियोगितायाः साध्यव्यापकतावच्छेदकत्वादिति भावः ।

नन्वेवमपि वह्निमान् धूमादित्यादौ समवायेन वह्न्यभावस्यापि साध्यव्यापकतावच्छेदकीभूतवह्नित्वावच्छिन्नप्रतियोगिताकयावदन्तर्गतत्वेन तत्सजातीयस्य तदधिकरणीभूतपर्वतनिरूपितवृत्तित्वसामान्याभावस्य धूमादिहेतावसत्त्वादव्याप्तिरित्याशङ्कायामाह—**अत्र साध्यव्यापकेति । व्यापकताघटकेति ।** व्यापकतावच्छेदकेत्यर्थः । तथा च समवायेन वह्न्यभावीयप्रतियोगितायाः समवायसम्बन्धावच्छिन्नत्वेन साध्यव्यापकतावच्छेदकीभूतसंयोगसम्बन्धानवच्छिन्नत्वेन तदभावस्य साध्याभावपदेन ग्रहीतुमशक्यतया न दोष इति भावः । तेन=साध्याभावीयप्रतियोगितायां

साध्यव्यापकतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशेन। एकसम्बन्धेन = संयोगादिसम्बन्धेन। सम्बन्धान्तरावच्छिन्नाभाववति = समवायादिसम्बन्धावच्छिन्नप्रतियोगिताकसाध्यसामान्याभाववति। न क्षतिः = नाव्याप्तिः।

❀ जागदीशी ❀

यत्तु साध्यतावच्छेदकसम्बन्धेनैव साध्यव्यापकत्वं तेनैव सम्बन्धेन साध्यव्यापकस्याभावो निवेश्य इति मतम्। तत्तुच्छम्। यत्र तादात्म्येन प्रमेयमात्रं साध्यं तत्र तादृशसम्बन्धेन साध्यव्यापकतावच्छेदकं यत् प्रमेयत्वादिकं तादात्म्येन तदवच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या तत्र सद्धेतावव्याप्तेः। प्रमेयत्वेन घटपटोभयभेदस्वीकारेण कथंचित्तत्राव्याप्तिवारणसंभवेपि वृत्त्यनियामकसम्बन्धेन साध्यतायामव्याप्तिः, साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः। किञ्चैवं धूमवान् वह्नेरित्यादावतिव्याप्तिः, संयोगेन धूमसामान्याभावस्याव्याप्यवृत्तितया धूमत्वेन घटाद्यभावस्य तादृशयावदन्तर्गतत्वेन तत्सजातीयस्य तदधिकरणवृत्तित्वाभावस्य वह्नौ सत्त्वात्। अस्माकन्तु स्वरूपसम्बन्धेनायःपिण्डभेदस्यापि धूमव्यापकतया वह्नेस्तदभाववद्वृत्तित्वादेवातिव्याप्तिनिरासादिति ध्येयम्।

❀ दीपिका ❀

समवायेन वह्न्याद्यभावमादायाव्याप्तेर्निरासाय केषांचिन्मतं दूषयितुमुपन्यस्यति—**यत्त्विति**। तेनैव सम्बन्धेन = साध्यतावच्छेदकसम्बन्धेनैव। तथा च समवायेन वह्न्यभावस्य साध्यतावच्छेदकीभूतसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकत्वाभावेन न यावदन्तर्गतत्वमिति भावः।

दूषयति—**तत्तुच्छमिति**। अयं भावः—साध्याभावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे तादात्म्येन प्रमेयवान् द्रव्यत्वादित्यादौ तादात्म्येन साध्यव्यापकताया अवच्छेदकं प्रमेयत्वं तादात्म्येन च प्रमेयत्वावच्छिन्नाभावाप्रसिद्ध्याव्याप्तिरित्याह—**यत्र तादात्म्येनेति**। तादृशसम्बन्धेन = तादात्म्यसम्बन्धेन। न च प्रमेयत्वेन घटपटोभयभेदस्यैव तादृशसाध्याभावतया तादृशोभयभेदमादाय लक्षणं सङ्गमनीयमिति वाच्यम्, एवमपि स्वामित्वादिवृत्त्यनियामकसम्बन्धेन धनादेः साध्यतायां धनी चैत्रत्वादित्यादौ साध्यतावच्छेदकीभूतस्वामित्वसम्बन्धावच्छिन्नायाः प्रतियोगिताया अनभ्युपगमेन तत्सम्बन्धावच्छिन्नप्रतियोगि-

ताकसाध्याभावाप्रसिद्धयाऽव्याप्तेरित्याह—**वृत्त्यनियामकेति**। यत्तुमतेऽव्याप्तिमुक्त्वाऽतिव्याप्तिमप्याह—**किञ्चेति**। एवम् = साध्याभावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे। **अव्याप्यवृत्तितयेति**। एवञ्च व्याप्यवृत्तिसाध्याभावस्यैव लक्षणघटकत्वेन संयोगेन धूमसामान्याभावस्य न लक्षणघटकत्वमिति भावः। तत्सजातीयस्य = धूमत्वेन घटाद्यभावसजातीयस्य। तदधिकरणवृत्तित्वाभावस्य = घटत्वावच्छिन्नप्रतियोगिताकतादृशसाध्याभावाधिकरणवृत्तित्वाभावस्य। अयोगोलकभेदस्य साध्यतावच्छेदकीभूतसंयोगेन न धूमव्यापकत्वमिति यत्तुमते अयोगोलकभेदाभावस्य न यावदन्तर्गतत्वमिति भावः। स्वमतेऽतिव्याप्तिं निराकरोति—**अस्माकमिति**। स्वरूपसम्बन्धस्य साध्यव्यापकतावच्छेदकत्वादिति भावः।

### ❀ दीधितिः ❀

**व्याप्यवृत्तिश्च प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यसमानाधिकरणो वा। तेन तत्तत्साध्यव्यक्तेरव्याप्यवृत्तेर्वा साध्यस्याभाववति वृत्तावपि हेतोर्नाव्याप्तिः।**

### ❀ जागदीशी ❀

ननु कपिसंयोगी एतत्त्वादित्यत्राव्याप्तिः, कपिसंयोगसामान्याभावस्यापि प्रतियोगिवैयधिकरण्यघटितसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वेन यावदन्तर्गतत्वात्, तत्सजातीयस्य तदधिकरणवृत्तित्वसामान्याभावस्य हेतावसत्त्वादत आह—व्याप्यवृत्तिश्चेति। व्याप्यवृत्तित्वम्—अवच्छिन्नवृत्तिकान्यत्वम्। संयोगी सत्त्वादित्यादौ तु द्रव्यत्वादिसामान्याभावस्यापि साध्याभावतया हेतोस्तदधिकरणवृत्तित्वादेव नातिव्याप्तिः।

### ❀ दीपिका ❀

अथ कपिसंयोगी एतद्वृक्षत्वादित्यत्र कपिसंयोगाभाववति एतद्वृक्षे एतद्वृक्षत्वरूपहेतोः सत्त्वेनाव्याप्तिः। न च कपिसंयोगत्वस्य कपिसंयोगाभावसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकतया साध्यव्यापकतावच्छेदकरूपत्वाभावेन न कपिसंयोगाभावो निरुक्तसाध्याभावपदेन ग्रहीतुं शक्यते, अपि तु द्रव्यत्वाभाव एव, तत्सजातीयस्य तदधिकरणीभूतगुणादिनिरूपितवृत्तित्वसामान्याभावस्य एतद्वृक्षत्वे

सत्त्वाद्यव्याप्तिरिति वाच्यम्, व्यापकत्वलक्षणे प्रतियोगिवैयधिकरण्यस्यावश्यं निवेशनीयतया कपिसंयोगाभावस्य व्यापकत्वघटकप्रतियोगिव्यधिकरणस्वसमानाधिकरणात्यन्ताभावपदेन ग्रहीतुमशक्यतया घटाद्यभावमादाय कपिसंयोगत्वस्य साध्यव्यापकतावच्छेदकरूपत्वात्। प्रतियोगिवैयधिकरण्यानिवेशे तु वाच्यत्वत्वादिकमपि साध्यव्यापकतावच्छेदकन्न स्यात्, तथाहि— वाच्यत्वसमानाधिकरणो वाच्यत्वत्वेन घटाभावस्तत्प्रतियोगितावच्छेदकत्वस्यैव वाच्यत्वत्वे सत्त्वादित्याशङ्कते— **नन्विति।**

ननु साध्याभावे व्याप्यवृत्तित्वनिवेशेपि संयोगी सत्त्वादित्यादावतिव्याप्तिः, तथाहि—निरवच्छिन्नवृत्तिकत्वमेव व्याप्यवृत्तित्वम्। एवञ्च संयोगसामान्याभावस्य द्रव्ये सावच्छिन्नवृत्तिकतया व्याप्यवृत्तित्वाभावेन यावदनन्तर्गततया व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकत्वादित्यत आह—**संयोगी सत्त्वादित्यादाविति।** अयमाशयः—अवच्छिन्नवृत्तिकान्यत्वमेव व्याप्यवृत्तिम्। अवच्छिन्नवृत्तिकान्यत्वं च—स्वाधिकरणीभूतयत्किंचिद्व्यक्तिनिष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यदभावव्यक्तित्वं तदभावत्वरूपम्। अत्र स्वाधिकरणत्वं स्वाधिकरणीभूतयत्किंचिद्व्यक्तिवृत्तित्वं च दैशिकविशेषणतया ग्राह्यम्, अन्यथा धूमवान् वह्नेरित्यादौ धूमाभावस्य स्वरूपसम्बन्धेन स्वाधिकरणीभूतायोगोलके कालिकेन वर्तमानस्य धूमाभावाभावस्य प्रतियोगित्वेन व्याप्यवृत्तित्वविरहेण लक्षणघटकत्वं न स्यात्। एवञ्च स्वाधिकरणीभूतयत्किंचिद्व्यक्तिः एतद्वृक्षस्तत्र शाखावच्छेदेन वर्तमानस्य कपिसंयोगाभावाभावस्य प्रतियोगितया कपिसंयोगाभावस्य न व्याप्यवृत्तित्वमिति द्रव्यत्वसामान्याभावमादायाव्याप्तिरतिव्याप्तिश्च वारणीयेति।

## ❀ जागदीशी ❀

**ननु रूपवान् पृथिवीत्वादित्यादावव्याप्तिः, रूपत्वेन नित्यसमवेताभावस्यापि निरुक्तयावत्साध्याभावान्तर्गतत्वात्, तत्सजातीयस्य तदधिकरणवृत्तित्वसामान्याभावस्य हेतावसत्त्वात्। सामान्यरूपेण विशेषाभावस्वीकारे तु रूपत्वेन तत्तद्रूपाभावमादायाव्याप्तिरत आह—**प्रतियोगितावच्छेदकावच्छिन्नेत्यादि।

## ❀ दीपिका ❀

अथ साध्याभावे व्याप्यवृत्तित्वनिवेशेपि रूपवान् पृथिवीत्वादित्यादावव्याप्तिः। तथाहि—रूपत्वावच्छिन्नप्रतियोगिताकः जलपरमाणुगतरूपात्मकनित्यसमवेतप्रतियो-

गिताकाभावोपि साध्यव्यापकतावच्छेदकीभूतरूपत्वावच्छिन्नप्रतियोगिताकत्वेन यावदन्तर्गतः, तत्सजातीयस्य तदधिकरणपृथिवीनिरूपितवृत्तित्वाभावस्य पृथिवीत्वहेतावसत्त्वादित्याशङ्कते—**नन्विति । अव्याप्तिरिति ।** न च रूपत्वावच्छिन्नप्रतियोगिताकनित्यसमवेताभावाधिकरणवृत्तितात्वेन पृथिवीवृत्तित्व-पृथिव्यन्यवृत्तित्वोभयाभावोपि तादृशवृत्तितात्वरूपसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वेन रूपत्वेन नित्यसमवेताभावसजातीय इति तादृशोभयाभावस्य पृथिवीत्वे हेतौ सत्त्वात् कथमव्याप्तिरिति वाच्यम्, प्रमेयवान् वाच्यत्वादित्यत्र प्रमेयत्वावच्छिन्नप्रतियोगिताकघटाभावाधिकरणवृत्तित्वाभावात्मकस्य साध्याभावसजातीयस्य तादृशवृत्तितात्वेन पृथिवीवृत्तित्वपृथिव्यन्यवृत्तित्वोभयाभावस्य वाच्यत्वहेतावसत्त्वेनाव्याप्तेः । अतएव तर्कालङ्कारेण 'पृथिवीत्वादित्यादौ' इत्यत्रादिपदमुपात्तम् । न च रूपत्वेन नित्यवृत्त्यभावमादाय रूपवान् पृथिवीत्वादित्यत्राव्याप्तिसम्भवे समवेतपदोपादानं व्यर्थमिति वाच्यम्, साध्यतावच्छेदकसम्बन्धेन वृत्तिमन्मात्रवृत्तित्वस्य प्रतियोगिताविशेषणत्वेनैव तादृशाभावस्य वारणात् । न चैवमपि रूपत्वेन नित्यसमवेताभावमादाय वह्निमान् धूमादित्यादौ प्रसिद्धस्थलेव्याप्तिसम्भवे स्थलान्तरानुधावनं व्यर्थमिति वाच्यम्, साध्यतावच्छेदकसम्बन्धेन व्यापकता, तेनैव सम्बन्धेन प्रतियोगिता, इति मते रूपत्वस्य संयोगेन वह्निव्यापकतावच्छेदकत्वाभावेन तादृशाभावस्य साध्याभावपदेन ग्रहीतुमशक्यतया वह्निमान् धूमादित्यादौ नाव्याप्तिरिति मतद्वयसाधारणाव्याप्तिप्रदर्शनाय तत्स्थलोपन्यासात् । यत्तु साध्याभावीयप्रतियोगितायां साध्यनिष्ठत्वविशेषणेन वह्निमान् धूमादित्यादौ रूपत्वेन नित्यसमवेताभावमादाय नाव्याप्तिरिति स्थलान्तरानुधावनमिति, तन्न मह्यं रोचते, वाच्यत्वनिष्ठप्रतियोगिताकाभावाप्रसिद्धया वाच्यं ज्ञेयत्वादित्यादावव्याप्त्या प्रतियोगितायां साध्यनिष्ठत्वनिवेशस्याशक्यत्वात् । **नित्यसमवेत** इत्यत्र नित्यश्चासौ समवेत इति कर्मधारय एव, न तु नित्ये समवेत इति सप्तमीतत्पुरुषः, तथा सति रूपत्वेन नित्यसमवेताभावस्य व्याप्यवृत्तित्वं न स्यात्, प्रलयावच्छेदेन पार्थिवपरमाणौ तस्यापरकालावच्छेदेन तदभावस्य (च) सत्त्वात् ।

**निरुक्तेति ।** साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकेत्यर्थः । **सामान्यरूपेणेति ।** अयमाशयः—सामान्यरूपेण विशेषाभावाभ्युपगमे रूपत्वेन तत्तद्रूपाभावस्यापि निरुक्तयावत्साध्याभावान्तर्गततया तत्सजातीयस्य तदधिकरणघटादिनिरूपितवृत्तित्वाभावस्य पृथिवीत्वहेतावसत्त्वेन रूपवान् पृथिवीत्वादित्यादावव्याप्तिर्दुरुद्धरैवेति ।

## ❀ जागदीशी ❀

प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणत्वं च यत्प्रतियोगिताकाभावे स्वावच्छेदकसम्बन्धेन स्वसमानाधिकरणस्वावच्छेदकावच्छिन्नसामानाधिकरण्यं तदन्यप्रतियोगिताकत्वम् । तेन नित्यरूपात्मकेन प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिना सामानाधिकरण्यविरहेऽप्युक्ताभावस्य न सङ्ग्रहः, न वा वाच्यत्वत्वेन प्रमेयत्वाद्यभावस्यैव ज्ञेयत्वत्वेन वाच्यत्वाद्यभावतया व्यधिकरणधर्मावच्छिन्नाभावमात्रस्यैव प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिसमानाधिकरणत्वेपि तदसङ्ग्रहः ।

## ❀ दीपिका ❀

अथ ह्रदादौ पूर्वक्षणवृत्तित्वविशिष्टवह्न्यभावादीनामपरक्षणावच्छेदेनाभावसत्त्वात् सर्वेषामेव वह्न्यभावादीनां स्वाभावात्मकप्रतियोगिसमानाधिकरणतया प्रतियोग्यसमानाधिकरणसाध्याभावाप्रसिद्धिः । न च प्रतियोग्यसमानाधिकरणघटकप्रतियोगिपदस्य भावरूपप्रतियोगिपरत्वे नाप्रसिद्धिः, स्वाभावात्मकप्रतियोगिनोभावरूपत्वादिति वाच्यम्, कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्य गगनाभावाभावस्य साध्यतायामात्मत्वादिसद्धेतौ गगनाभावात्मकसाध्याभावस्य भावरूपप्रतियोग्यसमानाधिकरणतया तदधिकरणे आत्मनि हेतोर्वृत्तितयाव्याप्तेरिति प्रतियोग्यसमानाधिकरणत्वं व्याचष्टे—**प्रतियोगितावच्छेदकेति**। स्वपदं प्रतियोगितापरम् । तथा च वह्निनिष्ठप्रतियोगिताकाभावे स्वसमानाधिकरणः स्वावच्छेदको धर्मो वह्नित्वादिः, संयोगेन तदवच्छिन्नसामानाधिकरण्यं नास्तीति तदन्यप्रतियोगिताकतया वह्निसामान्याभावस्य निरुक्तप्रतियोगिवैयधिकरण्यं वर्त्तते । यदि च वह्नित्वेन घटाभावीयप्रतियोगिताया यत्पदेन ग्रहणं तदापि तदीयप्रतियोगितायाः समानाधिकरणधर्मो वह्नित्वादिर्नास्तीति तदन्यप्रतियोगिताकतया सोप्यभावः प्रतियोगिव्यधिकरण एवेति । अतएव स्वसमानाधिकरणपदं प्रवेश्यते । तेन=निरुक्तप्रतियोगिवैयधिकरण्यप्रवेशेन । अन्यथा प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यसमानाधिकरणत्वरूपप्रतियोगिवैयधिकरण्यप्रवेशे तु रूपत्वावच्छिन्ननित्यरूपात्मकप्रतियोगिनासमानाधिकरणतया रूपत्वेन नित्यसमवेताभावमादाय रूपवान् पृथिवीत्वादित्यादावव्याप्तिर्दुरुद्धरा स्यात् । तथा प्रवेशे तु नित्यसमवेतनिष्ठप्रतियोगिताके रूपत्वेन नित्यसमवेताभावे पृथिव्यां स्वसमानाधिकरणस्वावच्छेदकरूपत्वावच्छिन्नेन रूपेण सामानाधिकरण्यं वर्त्तत इति तदन्यप्रतियोगिताकत्वाभावेन न रूपत्वेन नित्यसमवेताभावः प्रतियोगिव्यधिकरण इति न दोषः ।

एवं समनियताभावानामैक्यमते वाच्यत्वत्वेन प्रमेयत्वाभावस्य ज्ञेयत्वत्वेन वाच्यत्वाभावात्मकतया व्यधिकरणधर्मावच्छिन्नाभावमात्रस्य वाच्यत्वत्वात्मकप्रतियोगितावच्छेदकावच्छिन्नेन वाच्यत्वरूपप्रतियोगिना सामानाधिकरण्येपि न व्यधिकरणधर्मावच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्यक्षतिः, समनियताभावानामभेदेपि तादृशाभावीयप्रतियोगिताव्यक्तीनां परस्परं भेदाद् वाच्यत्वत्वेन प्रमेयत्वाभावीयप्रतियोगितायाः वाच्यत्वत्वेन सामानाधिकरण्यविरहेण निरुक्ताभावस्य तदन्यप्रतियोगिताकतया निरुक्तप्रतियोगिवैयधिकरण्यसत्त्वात् । न तदसंग्रहः=व्यधिकरणधर्मावच्छिन्नाभावस्यासंग्रहो नेत्यर्थः ।

❀ जागदीशी ❀

अत्र च निरुक्तायास्तदन्यप्रतियोगिताया एव साध्यव्यापकतावच्छेदकरूपावच्छिन्नत्वं बोध्यम् । तेन कपिसंयोगात्मकस्यैव साध्याभावस्य समवेतसामान्याभावनिष्ठनिरुक्तप्रतियोगिताकत्वकपिसंयोगाभावत्वरूपसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वयोः सत्त्वेपि कपिसंयोगाभाववान् वाच्यत्वादित्यादौ, रूपत्वेन नित्यसमवेताभावस्यैव नित्यरूपसामान्याभावतया नित्यरूपत्वावच्छिन्ननिरुक्तप्रतियोगिताकत्वसाध्यव्यापकतावच्छेदकीभूतरूपत्वावच्छिन्नप्रतियोगिताकत्वयोः सत्त्वेपि रूपवान् पृथिवीत्वादित्यादौ नाव्याप्तिः, समवेतसामान्याभावत्वाद्यवच्छिन्नप्रतियोगितायाः साध्यव्यापकतावच्छेदकरूपानवच्छिन्नत्वादिति ध्येयम् ।

द्वितीयरीतेः प्रवेशफलमाह—तत्तत्साध्यव्यक्तेरिति । अभाववति हेतोर्वृत्तावपि नाव्याप्तिरित्यन्वयः । व्याप्यवृत्तित्वादेः फलमाह—अव्याप्यवृत्तेर्वा साध्यस्येति । पूर्ववद् योजना ।

❀ दीपिका ❀

अथ कपिसंयोगाभावाभावस्य समवेतसामान्याभावाभावात्मकतया समवेतसामान्याभावनिष्ठप्रतियोगितामादाय निरुक्तप्रतियोगिव्यधिकरणतया कपिसंयोगाभावत्वरूपसाध्यव्यापकतावच्छेदकरूपावच्छिन्नत्वेन च निरुक्तसाध्याभावतया तदधिकरणीभूतवृक्षनिरूपितवृत्तित्वाभावस्य वाच्यत्वहेतावसत्त्वेन कपिसंयोगाभाववान् वाच्यत्वादित्यादावव्याप्तिः । एवं रूपत्वेन नित्यसमवेताभावस्यैव नित्यरूपसामान्याभावतया नित्यरूपसामान्याभावीयप्रतियोगितामादाय निरुक्तप्रतियोगिव्यधिकरणत्वसत्त्वेन साध्यव्यापकतावच्छेदकीभूतरूपत्वावच्छिन्नप्रतियोगिताकत्वेन निरुक्तसाध्याभावतया रूपत्वेन

नित्यसमवेताभावमादाय रूपवान् पृथिवीत्वादित्यत्र चाव्याप्तिर्दुर्वारैवेति निरुक्तप्रतियोगिवैयधिकरण्यघटकतदन्यप्रतियोगितायां साध्यव्यापकतावच्छेदकरूपावच्छिन्नत्वं प्रवेश्यमित्याह = अत्र चेति । तथा च समवेतसामान्याभावनिष्ठप्रतियोगितायाः समवेतसामान्याभावत्वावच्छिन्नत्वेन समवेतसामान्याभावत्वस्य च कपिसंयोगाभावात्मकसाध्यव्यापकतानवच्छेदकत्वात्, द्रव्ये कपिसंयोगाभावस्य सत्त्वेपि समवेतसामान्याभावस्यासत्त्वेन व्यभिचारान्न दोषः । एवं नित्यरूपसामान्याभावीयप्रतियोगिताया नित्यरूपत्वावच्छिन्नत्वेन नित्यरूपत्वस्य च रूपात्मकसाध्यव्यापकतानवच्छेदकत्वात् पृथिव्यां साध्यसत्त्वेपि नित्यरूपासत्त्वेन व्यभिचारादिति रूपवान् पृथिवीत्वादित्यादावपि न दोषः । तेन = तदन्यप्रतियोगितायां साध्यव्यापकतावच्छेदकरूपावच्छिन्नत्वप्रवेशेन ।

### ❀ दीधितिः ❀

**तत्तदधिकरणवृत्तित्वाभावस्तु तत्तत्साध्याभाववद्वृत्तितात्वव्यापकव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकः, तत्तत्साध्याभाववद्वृत्तितात्वातिरिक्तसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताको वा बोध्यः ।**

### ❀ जागदीशी ❀

तत्तत्साध्याभावेत्यादि । सामान्यतः साध्याभाववद्वृत्तित्वत्वव्यापक इत्युक्तौ वह्निसामान्याभावसजातीयस्य व्यधिकरणधर्मावच्छिन्नाभावसाधारणसाध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकाभावस्याप्रसिद्ध्या व्यतिरेकमात्रेऽव्याप्तिरतस्तत्तदिति साध्याभावविशेषणम् । तथा च निर्वह्निवृत्तित्वत्वव्यापकप्रतियोगिताकस्तत्र साध्याभावसजातीयोऽस्तीत्यदोषः ।

### ❀ दीपिका ❀

**तत्तत्साध्याभाववदिति** दीधितिः । तत्तत्साध्याभाववद्वृत्तितात्वव्यापिका व्यासज्यवृत्तिधर्मानवच्छिन्ना या प्रतियोगिता, तादृशप्रतियोगितानिरूपकोभाव इत्यर्थः । अत्र तत्तत्पदानुपादाने साध्याभावपदेन व्यधिकरणधर्मावच्छिन्नाभावस्य साध्यसामान्याभावस्य च ग्रहणं स्यात्, तथा च वह्निमान् धूमादित्यादौ व्यतिरेकिण्यव्याप्तिः, वह्नित्वेन घटाभाव-वह्निसामान्याभावोभयवद्वृत्तित्वाभावस्य वह्निसामान्या-

भावसजातीयस्याप्रसिद्धेरित्याह—**सामान्यत** इति । निर्वह्निवृत्तितात्वव्यापकप्रतियोगिताकः=वह्निसामान्याभाववद्वृत्तित्वसामान्याभावः । साध्याभावसजातीयः=वह्निसामान्याभावसजातीयः ।

## ❀ जागदीशी ❀

नन्वेवमपि निर्धूमवृत्तित्वेन निर्धूमवृत्तित्व-वह्निभेदोभयाभावस्य जलवृत्तित्वत्वेन निर्धूमवृत्तित्वाभावस्य च धूमाभावसजातीयस्य निरुक्तरूपशालिनो वह्नौ सत्त्वादतिव्याप्तिः । न च व्यासज्यवृत्तिधर्मानवच्छिन्नत्वमिव परित्यज्य स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वमपि प्रतियोगितायां विशेषणं वाच्यम्, अतो नोक्तदोषः, तथापि निर्धूमवृत्तितात्वेन जलवृत्तित्व-जलान्यनिर्धूमवृत्तित्वोभयाभावमादायातिव्याप्तितादवस्थ्यात्, गुणभेदाभावसजातीयस्य पूर्वक्षणवृत्तित्वविशिष्टगुणसमवेतत्वाभावस्य हेतौ सत्त्वाद् गुणभिन्नं सत्त्वादित्यादावतिप्रसङ्गाच्चेत्यत आह—तत्तत्साध्याभाववद्वृत्तितात्वातिरिक्तसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताको वा बोध्य इति । अयं पाठः क्वाचित्कः । तत्रातिरिक्तान्तेन निर्वह्निवृत्तित्वसामान्याभावादेः सङ्ग्रहः, अन्यथा वह्निसामान्याभावसजातीयस्य समानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्ध्याऽव्याप्तिप्रसङ्गात् ।

## ❀ दीपिका ❀

अथैवमपि धूमवान् वह्नेरित्यादौ धूमसामान्याभावसजातीयं धूमसामान्याभाववद्वृत्तितात्वेन धूमसामान्याभाववद्वृत्तित्ववह्निभेदोभयाभावमादायातिव्याप्तिः, तादृशोभयाभावस्य धूमसामान्याभाववद्वृत्तितात्वावच्छिन्नप्रतियोगिताकतया व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वान्निरुक्तवृत्तित्वाभावपदेन धर्तुं शक्यत्वादित्याह—**नन्वेवमपीति** । अतिव्याप्तिमुद्धर्तुं शङ्कते—**न चेति** । **नोक्तदोष इति** । तथा च प्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वनिवेशे न पूर्वोक्तोभयाभावस्य लक्षणघटकत्वम्, निरुक्तोभयाभावीयप्रतियोगिताया वह्निभेदेपि सत्त्वेन तत्र च धूमसामान्याभाववद्वृत्तितात्वस्यासत्त्वेन तादृशवृत्तितात्वस्य स्व( प्रतियोगिता )न्यूनवृत्तिधर्मत्वादिति भावः । **तथापीति** । अयमाशयः—प्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वनिवेशे धूमवान् वह्नेरित्यत्रातिव्याप्त्यभावेपि गुणभिन्नं सत्त्वादित्यत्रातिव्याप्तिः, तथाहि—गुणभेदाभावसजातीयः पूर्वक्षणवृत्तित्वविशिष्टगुणसमवेतत्वाभावोपीति तादृशसमवेतत्वाभावस्य स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वेन

लक्षणघटकत्वात्, सत्तायां हेतौ पूर्वक्षणवृत्तित्वविशिष्टगुणसमवेतत्वस्यापरक्षणावच्छेदेनाभावसत्त्वादिति । निर्धूमवृत्तितात्वेन=धूमसामान्याभाववद्वृत्तितात्वेन । निरुक्तरूपशालिनः=तत्तत्साध्याभाववद्वृत्तितात्वव्यापकव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकस्य । गुणसमवेतत्वाभावस्य=समवायेन गुणवृत्तित्वाभावस्य। साध्याभाववद्वृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्यावश्यं निवेशनीयतया गुणसमवेतत्वाभावं धृतवान् जगदीशः । **तत्तत्साध्याभाववद्वृत्तित्वेति** दीधितिः। तत्तत्साध्याभाववद्वृत्तितात्वातिरिक्तो यः स्वसमानाधिकरणधर्मस्तदनवच्छिन्नप्रतियोगिताक इत्यर्थः। तथा च तादृशगुणसमवेतत्वाद्यभावीयप्रतियोगितायाः साध्याभाववद्वृत्तितात्वातिरिक्तेन स्वसमानाधिकरणेन पूर्वक्षणवृत्तित्ववैशिष्ट्यादिनावच्छिन्नत्वेन न तादृशगुणसमवेतत्वाद्यभावमादायातिव्याप्तिरिति भावः।

ननु स्वसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकत्वनिवेशेनैव तादृशगुणसमवेतत्वाद्यभावस्य वारणसंभवे तत्तत्साध्याभाववद्वृत्तित्वातिरिक्तत्वविशेषणं व्यर्थमित्यत आह—**तत्रातिरिक्तान्तेनेति**। अन्यथा=अतिरिक्तान्तत्वानिवेशे। अयमाशयः—वह्निसामान्याभाववद्वृत्तित्वसामान्याभावस्य एव समानाधिकरणेन निर्वह्निवृत्तितात्वेनावच्छिन्नप्रतियोगिताकतया स्वसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकत्वासम्भवेन वह्निमान् धूमादित्यादावव्याप्तिरिति।

## ❀ जागदीशी ❀

**न च निर्धूमत्वादिसजातीयस्य निर्धूमवृत्तितात्वादिना वह्न्यवृत्तेरभावस्य हेतौ सत्त्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिः, हेतुताघटकसम्बन्धावच्छिन्नवृत्तिमात्रनिष्ठत्वेन प्रतियोगिताया विशेषणीयत्वेपि निर्धूमवृत्तित्वत्वेन जलवृत्तित्वजलान्यनिर्धूमवृत्तित्वोभयाभावमादायातिव्याप्तितादवस्थ्यमिति वाच्यम्, एतदस्वरसेनैव यद्वेत्यादिलक्षणान्तरस्य वक्ष्यमाणत्वात्।**

## ❀ दीपिका ❀

अथैवमपि निर्धूमवृत्तितात्वेन वह्न्यवृत्तिर्नास्तीति प्रतीतिसाक्षिकोपि तादृशस्वसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताको धूमसामान्याभावसजातीयश्चेति लक्षणघटकस्य निर्धूमवृत्तितात्वेन वह्न्यवृत्त्यभावस्य वह्नौ सत्त्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिरित्याशङ्कते—**न चेति**। अस्य वाच्यमिति परेणान्वयः। **हेतुताघटकेति**। तथा च हेतुतावच्छेदकसम्बन्धावच्छिन्नतादृशवृत्तितामात्रनिष्ठ-

प्रतियोगिताकाभावनिवेशे नायं दोषः, निर्धूमवृत्तितात्वेन वह्निवृत्त्यभावीयप्रतियोगिताया धूमत्वादिनिष्ठवृत्तितायामपि सत्त्वेन धूमत्वादिनिष्ठवृत्तितायाश्च समवायादिसम्बन्धावच्छिन्नत्वेन तादृशाभावस्य हेतुताघटकसंयोगसम्बन्धावच्छिन्नवृत्तितामात्रनिष्ठप्रतियोगिताकत्वाभावादिति भावः। अतिव्याप्तिं दृढयति—**जलवृत्तित्वेति।** एवञ्च निर्धूमवृत्तितात्वेन जलवृत्तित्वजलान्यनिर्धूमवृत्तित्वोभयाभावस्य संयोगसम्बन्धावच्छिन्नवृत्तित्वमात्रनिष्ठप्रतियोगिताकस्य वह्नौ सत्त्वेनातिव्याप्तितादवस्थ्यमिति भावः। समाधानन्तु स्पष्टम्।

## ❀ जागदीशी ❀

**यद्यपि तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्नाभावा इत्यस्यैव सम्यक्त्वे समानाधिकरणधर्मादिकं प्रक्षिप्य निषेधद्वयप्रवेशो व्यर्थः, सर्वत्र व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वेन घटाद्यभावस्यैव तादृशसाध्याभावसजातीयस्य संभवात्, तथापि यथासन्निवेशान्न वैयर्थ्यम्। यत्र तादात्म्यसम्बन्धेन हेतुता तत्र सद्धेतौ व्यधिकरणधर्मावच्छिन्नाभाववत्तादात्म्यस्य जगत्स्वरूपतया तादृशतादात्म्यत्वस्य केवलान्वयित्वेन तदवच्छिन्नाभावस्याप्रसिद्ध्याऽव्याप्तिः स्यादतो निषेधद्वयगर्भता।**

## ❀ दीपिका ❀

ननु तत्तत्साध्याभाववद्वृत्तितात्वमात्रावच्छिन्नप्रतियोगिताकाभावमात्रनिवेशेनैव गुणभिन्नं सत्त्वादित्यादावतिव्याप्तिवारणं संभवति, पूर्वक्षणवृत्तित्वविशिष्टगुणसमवेतत्वाद्यभावस्य पूर्वक्षणवृत्तित्ववैशिष्ट्येनाप्यवच्छिन्नप्रतियोगिताकतया तत्तत्साध्याभाववद्(गुण)समवेतत्वत्वमात्रानवच्छिन्नत्वेन लक्षणाघटकत्वात्, वह्निमान् धूमादित्यादौ वह्नित्वेन घटाभावसजातीयो वह्नित्वेन घटाभाववद्वृत्तितात्वेन घटाभाव एवेति तस्य धूमे सत्त्वान्नाव्याप्तिरपीति तत्तत्साध्याभाववद्वृत्तितात्वातिरिक्तेत्यादौ निषेधद्वयोपादानं व्यर्थमित्याशङ्कते—**यद्यपीति। तत्तत्साध्याभाववदिति।** तत्तत्साध्याभाववद्वृत्तितात्वमात्रावच्छिन्नप्रतियोगिताक इत्यर्थः। अन्यथा यथाश्रुते तु पूर्वक्षणवृत्तित्वविशिष्टगुणसमवेतत्वाभावस्य गुणसमवेतत्वत्वेनाप्यवच्छिन्नतया लक्षणघटकत्वं स्यात्। **व्यधिकरणेति।** व्यधिकरणधर्मावच्छिन्नप्रतियोगिताको वह्नित्वेन घटाभावात्मकसाध्याभावस्तदधिकरणवृत्तितात्वेनेत्यर्थः। तादृशसाध्याभावसजातीयस्य = व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकसाध्याभावसजातीयस्य। निषेधद्वयोपादानं समाधत्ते—**तथापीति।** अयं भावः—अखण्डाभाव-

घटकतया निषेधद्वयघटिततादृशाभावत्वस्य निषेधद्वयाघटिततादृशाभावत्वस्य च परस्परं भेदात् स्वसमानाधिकरणः प्रकृतसाध्यव्याप्यतावच्छेदकः स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदको यो धर्मस्तदवच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकत्वरूपवैयर्थ्यं नास्तीति । अव्याप्तिपरिहारायापि तदावश्यकमित्याह—**यत्रेति** । अयमाशयः—निषेधद्वयानुपादाने इदं वाच्यं प्रमेयादित्यादौ तादात्म्येन हेतुतास्थले वाच्यत्वत्वेन घटाद्यभावस्यैव साध्याभावतया तत्सजातीयस्य तत्साध्याभाववद्वृत्तित्वाभावस्याप्रसिद्ध्याऽव्याप्तिः, तादृशसाध्याभावाधिकरणे हेतुतावच्छेदकीभूततादात्म्यसम्बन्धेन जगतो वृत्तितया तत्सम्बन्धावच्छिन्नवृत्तितात्वस्य केवलान्वयित्वेन तदवच्छिन्नाभावस्याप्रसिद्धेः । निषेधद्वयोपादाने तु तादृशसाध्याभाववद्वृत्तित्वस्य घटत्वेनाभावमादाय लक्षणं संगतं भवति । तत्र = इदं वाच्यं प्रमेयादित्यादौ । **व्यधिकरणेति** । अयमाशयः—वाच्यत्वत्वेन घटाद्यभावस्य केवलान्वयित्वेन तदधिकरणं जगत्, तत्र हेतुतावच्छेदकीभूततादात्म्यसम्बन्धेन जगत् वर्त्तत इति तादृशसाध्याभाववत्तादात्म्यस्य जगदात्मकतया व्यधिकरणधर्मावच्छिन्नसाध्याभाववन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तितात्वस्य 'वृत्तिमदत्यन्ताभावाप्रतियोगित्वरूपं' केवलान्वयित्वमिति । तादृशतादात्म्यत्वस्य = व्यधिकरणधर्मावच्छिन्नसाध्याभाववन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तितात्वस्य ।

### ❀ जागदीशी ❀

**यत्तु तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्नाभावा इत्युक्तौ असम्भवः स्यात्, व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वावच्छिन्नाभावाप्रसिद्धेः, तादृशाभाववद्वृत्तित्वत्वमपेक्ष्य लघोर्वृत्तित्वत्वमात्रस्यैव उक्ताभावप्रतियोगितावच्छेदकत्वादिति । तत्तुच्छम् । गुरोः प्रतियोगितावच्छेदकत्वमङ्गीकृत्यैव लक्षणकरणात्, अन्यथा महाकालभेदे साध्ये जन्यत्वविशिष्टघटादेः कालिकसम्बन्धेन हेतुतायामव्याप्तिप्रसङ्गात्, महाकालभेदाभाववद्वृत्तित्वत्वमपेक्ष्य लघुना वृत्तित्वमात्रेणैव महाकालभेदाभाववद्वृत्तित्वाभावप्रतियोगिताया अवच्छेदात्, महाकालभेदाभावसजातीयस्य तद्वृत्तित्वत्वातिरिक्तसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्धेरिति ध्येयम् ।**

### ❀ दीपिका ❀

निषेधद्वयसार्थक्यप्रदर्शनपरं यत्तुमतं निरसितुमुपन्यस्यति—**यत्त्विति** । अयं

भावः—तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावमात्रनिवेशे वह्निमान् धूमादित्यादावसंभवः। तथाहि—यावत्साध्याभावान्तर्गतो वह्नित्वेन घटाद्यभावोपीति निषेधद्वयाप्रवेशे तादृशसाध्याभाववद्वृत्तितात्वेन घटाद्यभावस्यैव निरुक्तसाध्याभावसजातीयत्वं सम्भवति, तादृशवृत्तितात्वेन घटाद्यभावस्य च प्रतियोगितावच्छेदकं लाघवाद् वृत्तितात्वमात्रमिति तादृशाभावस्य तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्नप्रतियोगिताकत्वं नास्तीति। तादृशवृत्तितात्वम्=व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तितात्वम्। **उक्ताभावेति**। तादृशवृत्तितात्वेन घटाद्यभावेत्यर्थः। यत्तुमतं निरस्यति—**तत्तुच्छमिति**। तुच्छत्वे बीजमाह—**गुरोरिति**। अयमाशयः—गुरुधर्मस्य प्रतियोगितावच्छेदकत्वानभ्युपगमे नञ्द्वयप्रवेशेपि कालो महाकालभेदवान् जन्यत्वविशिष्टघटादित्यादावव्याप्तिः, तथाहि—महाकालभेदसामान्याभाववन्निरूपितकालिकसम्बन्धावच्छिन्नवृत्तित्वसामान्याभावस्यैव महाकालभेदसामान्याभावात्मकसाध्याभावसजातीयत्वमिति तादृशवृत्तित्वसामान्याभावस्य च लाघवाद् वृत्तितात्वमात्रावच्छिन्नप्रतियोगिताकत्वेन महाकालभेदाभाववन्निरूपितवृत्तित्वत्वातिरिक्तसमानाधिकरणवृत्तितात्वावच्छिन्नप्रतियोगिताकतया लक्षणघटकत्वं न स्यादिति।

## ❀ दीधितिः ❀

**तेन साध्याभाववद्व्यक्तिविशेषवृत्तित्वस्य पार्थिवत्वादिविशेषितस्य द्वित्वाद्यवच्छिन्नस्य वा साध्याभाववद्वृत्तित्वस्याभावमादाय नातिप्रसङ्गः। अत्र च हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वं बोध्यम्। तेन वह्न्यभाववति स्वावयवे वृत्तावपि धूमस्य न दोषः।**

## ❀ जागदीशी ❀

तादृशवृत्तितात्वव्यापकेत्यस्य प्रयोजनमाह—साध्याभाववद्व्यक्तिविशेषवृत्तित्वस्येति। अभावमादाय नातिप्रसङ्ग इत्यन्वयः। ननु व्यभिचारनिरूपकाधिकरणव्यक्त्यन्यत्वाभावस्यापि साध्याभावतया तद्वद्वृत्तित्वसामान्याभावस्य व्यभिचारिण्यसत्त्वात् कुतोतिव्याप्तिरित्यत आह—पार्थिवत्वादीति। पार्थिवत्वादिविशिष्टं यन्निर्धूमवृत्तित्वं तद्वह्नौ नास्ति वह्नेरपार्थिवत्वादित्यतिप्रसङ्ग इति भावः। आदिना जलत्वादिसंग्रहः। व्यासज्यवृत्तिधर्मानवच्छिन्नेत्यस्य प्रयोजनमाह—द्वित्वाद्यवच्छिन्नस्येति। निर्धूमवृत्तित्ववह्निभेदोभय-

त्वावच्छिन्नस्येत्यर्थः। न दोष इति। अन्यथा निर्वह्निसंयुक्तत्वाभावस्य साध्याभाववद्वृत्तितात्वव्यापकप्रतियोगिताकत्वाभावान्निर्वह्निवृत्तित्वसामान्याभावस्य च धूमेसत्त्वादव्याप्तिरेव स्यादिति भावः।

### ❀ दीपिका ❀

**तेनेति** दीधितिः। प्रतियोगितायाः तत्तत्साध्याभाववद्वृत्तितात्वव्यापकत्वस्य व्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्य च निवेशेनेत्यर्थः। तथा च व्यापकत्वानिवेशे धूमवान् वह्नेरित्यादावतिव्याप्तिः, धूमसामान्याभाववज्जलनिरूपितवृत्तित्वसामान्याभावस्य वह्नौ सत्त्वात्। व्यापकत्वनिवेशे तु न दोषः, धूमाभाववन्निरूपितवृत्तितात्वस्यायोगोलकनिरूपितायां वह्निनिष्ठवृत्तितायामप्यस्ति, तत्र च जलवृत्तित्वाभावीयप्रतियोगित्वन्नास्तीति तादृशवृत्तित्वाभावीयप्रतियोगितायाः धूमसामान्याभाववद्वृत्तितात्वाव्यापकत्वादिति।

एवं व्यासज्यवृत्तिधर्मानवच्छिन्नत्वानिवेशे धूमवान् वह्नेरित्यत्रैवातिव्याप्तिः, धूमसामान्याभाववद्वृत्तित्ववह्निभेदोभयाभावस्यापि निरुक्तान्यतररूपेण धूमाभावसजातीयतया लक्षणघटकस्य तादृशोभयाभावस्य वह्नौ सत्त्वात्। तन्निवेशे तु तादृशोभयाभावस्योभयत्वरूपव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकतया न लक्षणघटकतेति भावः। ननु वह्निसामान्याभावाधिकरणं धूमावयवस्तत्र धूमः समवायेन वर्त्तत इति वह्निसामान्याभावसजातीयस्य वह्न्यभावाधिकरणनिरूपितवृत्तित्वसामान्याभावस्य धूमहेतावसत्त्वेनाव्याप्तिरित्यत आह दीधितौ—**अत्र चेति**। तेन=साध्याभाववद्वृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वविवक्षणेनेत्यर्थः। तथा च वह्निसामान्याभावाधिकरणे धूमावयवे धूमस्य हेतुतावच्छेदकीभूतसंयोगसम्बन्धेन वृत्तित्वं नास्तीति संयोगसम्बन्धावच्छिन्नवृत्तित्वाभावस्य धूमे सत्त्वान्न दोषः। अन्यथा=वृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे। निर्वह्निसंयुक्तत्वाभावस्य=वह्निसामान्याभावाधिकरणनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वाभावस्य। अयमाशयः—निर्वह्निसंयुक्तत्वाभावीयप्रतियोगिता संयोगसम्बन्धावच्छिन्नवृत्तितायामेवास्ति, वह्निसामान्याभाववद्वृत्तितात्वं समवायसम्बन्धावच्छिन्नवृत्तितायामपीति निर्वह्निसंयुक्तत्वाभावस्य निर्वह्निवृत्तितात्वव्यापकप्रतियोगिताकत्वाभावेन न लक्षणघटकत्वम्, अपि तु निर्वह्निवृत्तित्वसामान्याभावस्यैवेति तस्य च धूमेसत्त्वेनाव्याप्तिरिति।

❀ दीधितिः ❀

इत्थं च साध्याभावोपि हेतुतावच्छेदकसम्बन्धेन कस्यचिदधिकरणे वर्त्तमानो ग्राह्यः। तेन जातिमान् सत्त्वादित्यादौ हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वस्याप्रसिद्धावपि न क्षतिरिति।

❀ जागदीशी ❀

इत्थं चेति। वृत्तित्वस्य हेतुतावच्छेदकसम्बन्धेनोक्तौ चेत्यर्थः। तादृशसम्बन्धेन हेत्वधिकरणत्वप्रवेशे गौरवमतः कस्यचिदित्युक्तम्। तथा च हेतुतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतावद्वृत्तित्वं साध्याभावे विशेषणमित्यर्थः। सत्तादीत्यादिपदेन वह्निमान् धूमादित्यादेः परिग्रहः। तत्रापि जातिसामान्याभावादेः साध्याभावतया तद्वति संयोगेन वृत्तेरप्रसिद्धेरव्याप्तिसम्भवात्।

❀ दीपिका ❀

नन्वेवं जातिमान् सत्त्वादित्यादावव्याप्तिः, जातिसामान्याभावाधिकरणे सामान्यादौ हेतुतावच्छेदकसमवायसम्बन्धेन वृत्तित्वाप्रसिद्धया जातिसामान्याभाववन्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाभावस्याप्रसिद्धेरित्यत आह—दीधितौ **इत्थं चेति**। वृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे चेत्यर्थः। **साध्याभावोपीति**। तथा च हेतुतावच्छेदकीभूतसमवायसम्बन्धेनाधिकरणानि द्रव्यगुणकर्माणि, तत्र जातिसामान्याभावस्यासत्त्वेन न लक्षणघटकसाध्याभावत्वम्, किन्तु जातित्वेन घटाद्यभाव एवेति तत्सजातीयस्य घटत्वेन तदधिकरणवृत्तित्वाभावस्य हेतौ सत्त्वान्न दोष इति भावः। तत्रापि = वह्निमान् धूमादित्यत्रापि। साध्याभावतया = साध्यव्यापकतावच्छेदकीभूतजातित्वावच्छिन्नप्रतियोगिताकतया। तद्वति = जातिसामान्याभाववति सामान्यादौ। साध्याभावे हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तित्वविवक्षणे तु जातिसामान्याभावे संयोगसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावद्( द्रव्य )निरूपितवृत्तित्वाभावेन जातिसामान्याभावस्य वह्निसाध्यकसद्धेतौ न लक्षणघटकतेति भावः।

❀ दीधितिः ❀

यद्वा यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तेषां सजा-

**तीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं तत्त्वम् ।**

❀ जागदीशी ❀

ननु द्रव्यं विशिष्टसत्त्वादित्यत्राव्याप्तिः, विशिष्टसत्त्वस्य सत्तानतिरिक्तत्वेन द्रव्यत्वाभाववति वृत्त्या द्रव्यत्वाभावसजातीयस्य तद्वद्वृत्तित्वाभावस्य हेतावसत्त्वात् । न चैवं विशिष्टहेत्वधिकरणे वर्त्तमान एव साध्याभावो गृह्यताम्, तावतैवोक्तदोषव्युदासादिति वाच्यम्, तथापि धूमवान् वह्नेरित्यत्रातिव्याप्तिः, निर्धूमवृत्तित्वसामान्याभावस्यापि महानसीयवह्नौ सत्त्वात् । न च हेतुतावच्छेदकधर्मावच्छेदेन तादृशवृत्तित्वाभाववत्त्वं विवक्षितम्, तथापि निर्धूमवृत्तितात्वेन जलवृत्तित्वजलान्यनिर्धूमवृत्तित्वोभयाभावसत्त्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तेः, महागौरवापत्तेश्चेत्यत आह—यद्वेति ।

❀ दीपिका ❀

अथैवमपि द्रव्यं विशिष्टसत्त्वादित्यत्रातिव्याप्तिः, तथाहि—द्रव्यत्वाभावाधिकरणं गुणादिः, तत्र सत्ताया वर्त्तमानत्वेन विशिष्टसत्ताया अपि सत्तानतिरेकित्वेन गुणादिवृत्तित्वमिति द्रव्यत्वसामान्याभावद्वृत्तित्वसामान्याभावस्य विशिष्टसत्ताहेतावसत्त्वादित्याशङ्कते—**नन्विति** । तद्वद्वृत्तित्वाभावस्य = द्रव्यत्वाभाववद्वृत्तित्वाभावस्य । **विशिष्टहेत्वधिकरण इति** । हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणे इत्यर्थः । तावतैव = साध्याभावे हेतुतावच्छेदकावच्छिन्नहेतुसामानाधिकरण्यप्रवेशेनैव । तथा च विशिष्टसत्तात्वावच्छिन्नाधिकरणे द्रव्ये द्रव्यत्वसामान्याभावस्यासत्त्वेन न लक्षणघटकसाध्याभावत्वमिति न तमभावमादायाव्याप्तिरिति भावः । **तादृशवृत्तित्वाभाववत्त्वमिति** । तत्तत्साध्याभाववद्वृत्तित्वाभाववत्त्वमित्यर्थः । तथा च महानसीयवह्नौ धूमसामान्याभाववद्वृत्तित्वसामान्याभावसत्त्वेपि न वह्नित्वावच्छेदेन निर्धूमवृत्तित्वाभावः, अयोगोलकीयवह्नौ धूमसामान्याभाववद्वृत्तित्वस्यैव सत्त्वादिति नातिव्याप्तिरिति भावः । **तथापीति** । हेतुतावच्छेदकावच्छेदेन तत्तत्साध्याभाववद्वृत्तित्वाभावविवक्षणेपीत्यर्थः । **गौरवापत्तेश्चेति** । वक्ष्यमाणलक्षणे तत्तत्साध्याभाववद्वृत्तित्वाभावाद्यप्रवेशेन तल्लक्षणापेक्षया प्रकृतलक्षणस्य गौरवमस्तत्वमि-

त्यर्थः। अत्रेदं विचारणीयम्—ननु धूमवान् वह्नेरित्यत्र निर्धूमवृत्तितात्वेन जलवृत्तित्वनिर्धूमवृत्तित्वोभयाभावमादायातिव्याप्तिसंभवे जलान्यनिर्धूमवृत्तित्वानुसरणं जगदीशस्य व्यर्थमिति चेन्न, परस्परविरुद्धधर्मद्वयस्यैव धर्मितावच्छेदकीकृत्य द्वित्वभानमनुभवसिद्धम्, न तु परस्परसमानाधिकरणधर्मद्वयस्य, अनुभवविरोधात्। तथा च जलवृत्तित्वस्य निर्धूमवृत्तित्वस्य च परस्परं सामानाधिकरण्येन न तत्र द्वित्वभानं सम्भवति, अतो जलान्यनिर्धूमवृत्तित्वानुसरणस्य सार्थक्यात्। न चैवमपि निर्धूमवृत्तितात्वेन जलवृत्तित्वजलान्यवृत्तित्वोभयाभावमादायातिव्याप्तिसंभवे निर्धूमवृत्तित्वपर्यन्तानुसरणं व्यर्थमिति वाच्यम्, प्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वनिवेशेनैव तादृशोभयाभावस्य स्वन्यूनवृत्तिनिर्धूमवृत्तितात्वावच्छिन्नत्वेन लक्षणाघटकतया नातिव्याप्तिरिति तत्पर्यन्तानुसरणस्यावश्यकत्वादिति दिक्।

**यद्वेति** दीधितिः। यावन्तः साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावाः प्रत्येकं तत्तत्सजातीयो व्यापकीभूतो व्याप्यवृत्तिश्च योभावस्तत्प्रतियोगितावच्छेदकं यद्रूपावच्छिन्नव्यापकतावच्छेदकं तद्रूपवत्त्वमित्यर्थः। यद्रूपपदं प्रकृतहेतुतावच्छेदकपरम्। तथा च वह्निमान् धूमादित्यादौ यदि साध्याभावपदेन वह्निसामान्याभावो गृह्यते तदा तस्य व्यापकीभूतः सजातीयो व्याप्यवृत्तिश्च वह्निसामान्याभाव एव तत्प्रतियोगितावच्छेकं वह्नित्वं हेतुतावच्छेदकीभूतधूमत्वावच्छिन्नस्य व्यापकतावच्छेदकं वर्त्तत इति लक्षणसमन्वयः यदि च वह्नित्वेन घटाभावः साध्याभावपदेन गृह्यते तदा तस्य सजातीयो व्यापकीभूतो व्याप्यवृत्तिश्च वह्नित्वेन घटाभाव एव तत्प्रतियोगितावच्छेदकं वह्नित्वं धूमत्वावच्छिन्नस्य व्यापकतावच्छेदकं वर्त्तत इति लक्षणसमन्वयः। धूमवान् वह्नेरित्यादौ यावदन्तर्गतो धूमसामान्याभावस्तस्य सजातीयो व्यापकीभूतो धूमसामान्याभाव एवेति तदीयप्रतियोगितावच्छेदकस्य धूमत्वस्य वह्निव्यापकतावच्छेदकत्वाभावान्नातिव्याप्तिरिति।

❀ जागदीशी ❀

वह्नित्वावच्छिन्नधूमाभावसजातीयस्य तद्व्यापकीभूतस्य तस्यैवाभावस्य प्रतियोगितावच्छेदकेन वह्नित्वादिना वह्नित्वावच्छिन्नं प्रति व्यापकतावच्छेदाद् व्यभिचारिणि अतिव्याप्तिरतो यावन्त इति। तथा च धूमादिसामान्याभावस्यापि साध्याभावत्वात्तद्व्यापकीभूतस्य तस्यैवाभावस्य प्रतियोगितावच्छेदकेन धूमत्वादिना वह्न्यादिकं प्रति व्यापकत्वाभावान्नातिप्रसङ्गः। तत्तद्वह्न्यभावसजातीयस्य तद्व्यापकीभूताभावस्य

प्रतियोगितावच्छेदकेन तत्तद्वह्नित्वादिना धूमादिकं प्रति व्यापकत्वाभावादसम्भव इत्यतस्तादृशाः साध्याभावा इति । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभावा इति तदर्थः । तत्तद्वह्नित्वादिकन्तु न साध्यव्यापकतावच्छेदकम् । अतस्तदवच्छिन्नाभावमादाय नोक्तदोषः । तादृशयावत्साध्याभावसाजात्यं तादृशयावत्साध्याभाववृत्तिप्रागुक्तान्यतररूपवत्त्वम् । तच्च व्यतिरेकिणि अप्रसिद्धम् । अतः प्रत्येकमिति । यद्यपि तादृशयावत्साध्याभावानां प्रत्येकनिरूपितमपि साजात्यं न कुत्राप्यभावेस्तीति व्यतिरेकिणि अव्याप्तितादवस्थ्यम्, तथापि तेषामित्यत्र तस्य तस्येत्येकशेषकरणाद् यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीयस्य तद्व्यापकीभूताभावस्य लाभाददोषः । धूमादिसामान्याभावव्यापकस्य वह्नित्वादिना घटाभावस्य प्रतियोगितावच्छेदकेन वह्नित्वादिना वह्नित्वावच्छिन्नं प्रति व्यापकत्वाद् व्यभिचारिण्यतिव्याप्तिरतः सजातीयस्येति । साजात्यन्तु प्रागुक्तचरमदिशा ग्राह्यम् । तेन संयोगादिसम्बन्धावच्छिन्नगगनाभावात्मकद्रव्यत्वाभावप्रतियोगितावच्छेदकेन द्रव्यत्वत्वादिना वह्न्यादिव्यापकत्वेपि धूमवान् वह्नेरित्यादौ नातिव्याप्तिः, तादृशाभावस्यापि धूमादिसामान्याभावसाजात्यविरहादिति ध्येयम् । धूमादिसामान्याभावसजातीयस्य तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकतया तद्व्यापकीभूतस्य वह्निसंयोगाद्यभावस्य च प्रतियोगितावच्छेदकेन वह्निसंयोगत्वादिना वह्न्यादिकं प्रति व्यापकत्वादतिव्याप्तिरतो व्याप्यवृत्तेरिति ।

## ❀ दीपिका ❀

अत्र यावत्पदाभावे वह्नित्वेन धूमाभावोपि तादृशसाध्याभावः तत्सजातीयो व्यापकीभूतश्च स एवाभावः, तत्प्रतियोगितावच्छेदकं वह्नित्वं वह्निव्यापकतावच्छेदकं वर्तत इति धूमवान् वह्नेरित्यादावतिव्याप्तिरित्याशयेनाह—**वह्नित्वावच्छिन्नेति** । वह्नित्वावच्छिन्नप्रतियोगिताक इत्यर्थः । यावत्पदोपादाने तु धूमसामान्याभावस्यापि यावदन्तर्गततया तादृशाभावमादाय दोषाभावस्य पूर्वमुक्तत्वादिति । साध्याभावपदव्यावृत्तिमाह—**तत्तद्वह्न्यभावेति** । प्रत्येकपदव्यावृत्तिमाह—**तादृशयावत्साध्याभावेति** ।

अथैवमपि धूमवान् वह्नेरित्यादावतिव्याप्तिः, द्रव्यत्वाभावे धूमसामान्याभावव्यापकत्वविरहेपि संयोगेन गगनाभावस्य व्यापकत्वात् तादृशगगनाभाव-द्रव्यत्वा-

भावयोश्च समनियततयैक्येन तत्प्रतियोगितावच्छेदकीभूतद्रव्यत्वत्वस्य वह्निव्यापकतावच्छेदकत्वादित्यत आह—**साजात्यन्त्विवति** । **प्रागुक्तचरमदिशेति** । गगनाभावत्व-तदन्यत्वान्यतररूपेणेत्यर्थः । तथा च धूमाभावे गगनाभावान्यत्वस्य तादृशगगनाभावात्मकद्रव्यत्वाभावे गगनाभावत्वस्य च सत्त्वेन साजात्यविरहान्न दोष इति भावः । **वह्न्यादिकं प्रति व्यापकत्वादतिव्याप्तिरिति** । अथ वह्निसंयोगाभावस्याव्याप्यवृत्तितया वह्निसंयोगत्वे वह्निसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्व(रूप)व्यापकतावच्छेदकत्वासम्भवेन नातिव्याप्तिरिति चेन्न, यद्रूपावच्छिन्नसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वरूपव्यापकत्वाभिप्रायेणातिव्याप्तिदानात्। वह्निसंयोगवान्नेति भेदस्य वह्नित्वावच्छिन्नाधिकरणे वर्तमानतया वह्निसंयोगस्य वह्निव्यापकत्वात् , अरुचिमिमामादाय वा वस्तुतस्तु कल्पानुसरणाच्चेति भावः ।

❀ जागदीशी ❀

वस्तुतो वह्नित्वेन धूमवद्वृत्तेरभावस्य प्रतियोगितावच्छेदकेन वह्नित्वेन वह्निं प्रति व्यापकत्वादतिव्याप्तिरतो व्याप्यवृत्तितानिरूपकप्रतियोगितालाभाय व्याप्यवृत्तिपदम् । तेन यत्प्रतियोगिताकाभावे स्वावच्छेदकावच्छिन्नसामानाधिकरण्य-व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभावस्तादृशप्रतियोगिताया एव लक्षणघटकत्वान्नोक्तदोषः ।

धूमाद्यभावसजातीयस्य वह्न्यभावस्य प्रतियोगितावच्छेदकेन वह्नित्वादिना वह्न्यादिकं प्रति व्यापकत्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिरतो व्यापकीभूतस्येति । यद्यपि व्यभिचारिस्थलान्यत्वाभावस्यापि निरुक्तसाध्याभावतया तत्समानाधिकरणस्य तत्तत्सजातीयाभावस्य प्रतियोगितावच्छेदकेन धर्मेण तत्तदयोगोलकभेदत्वादिना वह्नित्वावच्छिन्नं प्रति व्यापकत्वाभावात् सामानाधिकरण्योक्तावपि नातिव्याप्तिः, तथापि साध्याभावव्यापकत्वघटितनिरुक्तौ साध्याभावसजातीयाभावे सामानाधिकरण्यस्याप्रविष्टतया न व्यापकीभूतपर्यन्तस्य व्यर्थतेति ध्येयम् ।

❀ दीपिका ❀

अथ धूमाभावसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपं धूमाभावव्यापकत्वं वह्निसंयोगाभावे नास्ति, किन्तु वह्नित्वेन धूमवद्वृत्त्यभावस्य धूमसामान्याभावसजातीयस्य धूमाभावव्यापकस्य प्रतियोगितावच्छेदकं वह्नित्वं

वह्नित्वावच्छिन्नव्यापकतावच्छेदकं वर्तत इति धूमवान् वह्नेरित्यत्रातिव्याप्तिस्तद-वस्थैवेति साध्याभावसजातीयाभावीयप्रतियोगितायां व्याप्यवृत्तितानिरूपकत्वलाभायैव व्याप्यवृत्तिपदमित्याह—**वस्तुत इति**। तेन = प्रतियोगितायां व्याप्यवृत्तितानिरूपकत्वस्य लाभेन। **नोक्तदोष इति**। वह्नित्वेन धूमवद्वृत्त्यभावे स्वा( प्रतियोगिता )-वच्छेदकं वह्नित्वं तदवच्छिन्नाधिकरणमयोगोलकं तत्र वह्नित्वेन धूमवद्वृत्त्यभावस्य वर्तमानत्वेन स्वावच्छेदकावच्छिन्नसामानाधिकरण्यस्य व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वस्य च सत्त्वेन न तादृशोभयाभाववत्त्वमिति न वह्नित्वेन धूमवद्वृत्त्यभावमादाय धूमवान् वह्नेरित्यादावतिव्याप्तिरिति भावः। अत्र यत्प्रतियोगिताकाभावे स्वावच्छेदकावच्छिन्नसामानाधिकरण्याभावमात्रनिवेशे वह्नित्वेन घटाभावस्य संग्रहो न भवेत्, स्वावच्छेदकीभूतवह्नित्वावच्छिन्नसामानाधिकरण्यस्यैव सत्त्वात्। व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वाभावमात्रनिवेशे साध्यसामान्याभावस्य संग्रहो न स्यादत उभयाभाववत्त्वं निवेशितम्। न चैवमपि स्वावच्छेदकावच्छिन्नसामानाधिकरण्यविशिष्टव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वस्याभाववत्त्वमेव निवेश्यताम्, तावतैव निरुक्तदोषवारणसंभवे तादृशोभयाभावनिवेशस्य वैयर्थ्यमिति वाच्यम्, वाच्यं ज्ञेयत्वादित्यत्राव्याप्तेः, एवं वाच्यत्वत्वेन घटाभावीयं प्रतियोगित्वं तदवच्छेदकं वाच्यत्वत्वं तदवच्छिन्नसामानाधिकरण्यविशिष्टव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वस्याप्रसिद्ध्या तत्प्रतियोगिताकाभावस्यानभ्युपगमात्।

ननु अभावे साध्याभावव्यापकत्वमनिवेश्य साध्याभावसामानाधिकरण्यमात्रनिवेशेनापि धूमवान् वह्नेरित्यत्रातिव्याप्तिवारणं सम्भवतीति व्यापकत्वनिवेशनं व्यर्थम्, तथाहि—अयोगोलकभेदाभावस्यापि साध्यव्यापकतावच्छेदकीभूतायोगोलकभेदत्वावच्छिन्नप्रतियोगिताकत्वेन यावदन्तर्गततया तादृशाभावस्य समानाधिकरणस्सजातीयश्चायोगोलकभेदाभाव एव तत्प्रतियोगितावच्छेदकस्य अयोगोलकभेदत्वस्य वह्निव्यापकतावच्छेदकत्वविरहात्, अयोगोलके व्यभिचारादित्याशङ्कते—**यद्यपीति**। व्यभिचारिस्थलान्यत्वाभावस्य = व्यभिचारितानिरूपकाधिकरणभेदाभावस्य, अयोगोलकादिभेदाभावस्येति यावत्। साध्याभावतया = साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकतया।

समाधत्ते—**तथापीति**। समाधातुरयमाशयः—व्यापकत्वघटितलक्षणे सामानाधिकरण्यस्याप्रवेशात् स्वसामानाधिकरण्यविरहान्न वैयर्थ्यम्।

❀ जागदीशी ❀

यत्तु साध्यतावच्छेदकसम्बन्धेन साध्यव्यापकताया यदवच्छेदकं तेनैव सम्बन्धेन तद्रूपावच्छिन्नाभावोऽत्र साध्याभावपदार्थः। तथा चायोगोलकभेदत्वस्य न संयोगात्मकसाध्यतावच्छेदकसम्बन्धेन धूमव्यापकतावच्छेदकत्वमिति तदवच्छिन्नाभावो न साध्याभावः, किन्तु धूमाद्यभाव एव, तत्समानाधिकरणस्य च वह्न्याद्यभावस्य प्रतियोगितावच्छेदकेन वह्नित्वादिना वह्नित्वावच्छिन्नं प्रति व्यापकत्वादतिव्याप्तिरतः समानाधिकरणस्येत्यपहाय व्यापकीभूतस्येत्युक्तम्। न चैवं वह्निमान् धूमादित्यादावव्याप्तिः, संयोगेन वह्न्यभावस्यापि साध्याभावतया तस्य केवलान्वयित्वेन तत्सजातीयतद्व्यापकीभूतव्याप्यवृत्त्यभावाप्रसिद्धेरिति वाच्यम्, यावन्तो व्याप्यवृत्तयः साध्याभावास्तेषामेव प्रवेश्यतया वह्निसामान्याभावस्य च निरवच्छिन्नहेत्वधिकरणवृत्तिकत्वरूपव्याप्यवृत्तित्वविरहेण यावदनन्तर्गतत्वात्। धूमाभावस्तु अयोगोलके एव तादृशव्याप्यवृत्तिरिति। तन्न, तादात्म्येन प्रमेयमात्रस्य साध्यतायामव्याप्तेः, तत्र प्रमेयत्वादेरेव तादात्म्येन व्यापकतावच्छेदकतया तादात्म्येन तदवच्छिन्नाभावाप्रसिद्धेः।

❀ दीपिका ❀

व्यापकत्वदलस्य सार्थक्यप्रदर्शनपरं यत्तुमत्तं निरसितुमुपन्यस्यति—**यत्त्विति**। तेनैव सम्बन्धेन = साध्यतावच्छेदकसम्बन्धेनैव। तथा च अयोगोलकभेदाभावस्य स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वेन साध्यतावच्छेदकीभूतसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकत्वविरहेण न यावत्साध्याभावान्तर्गतत्वम्, किन्तु धूमसामान्याभावस्यैव, तस्य समानाधिकरणः सजातीयश्च वह्निसामान्याभावस्तत्प्रतियोगितावच्छेदकस्य वह्नित्वस्य वह्निव्यापकतावच्छेदकत्वादतिव्याप्तिरित्यतः सामानाधिकरण्यमुपेक्ष्य व्यापकत्वं निवेश्यते। तथा च वह्निसामान्याभावस्य न धूमसामान्याभावव्यापकत्वम्, अयोगोलके व्यभिचारादिति नातिव्याप्तिरिति भावः। **न चैवमिति**। साध्याभावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे इत्यर्थः। तथा च वह्निमान् धूमादित्यत्र संयोगेन वह्न्यभावस्यापि साध्याभावतया तत्सजातीयो व्यापकीभूतोऽभावो यद्यपि संयोगेन वह्न्यभाव एव, तथापि वह्निसंयोगाभावस्याव्याप्यवृत्तित्वे संयोगेन वह्न्यभावस्याप्यव्याप्यवृत्तितया लक्षणाघटकत्वेनाव्याप्तिरिति भावः। **यावन्तो व्याप्यवृत्तय इति**। तथा च साध्याभावे व्याप्य-

वृत्तित्वनिवेशेन संयोगेन वह्न्यभावो न यावत्साध्याभावान्तर्गतः, अपि तु संयोगेन वह्नित्वेन घटाभाव एव, तस्य पूर्वोक्तदिशा व्याप्यवृत्तित्वात्, तत्सजातीयो व्यापकीभूतश्च स एवाभावस्तत्प्रतियोगितावच्छेदकस्य वह्नित्वस्य धूमव्यापकतावच्छेदकत्वान्नाव्याप्तिः, न वा धूमवान् वह्नेरित्यादावतिव्याप्तिः, संयोगेन धूमसामान्याभावस्यैवायोगोलके व्याप्यवृत्तित्वात् ।

निरस्यति—तन्नेति । तादात्म्येनेति । प्रमेयवान् धूमादित्यादावित्यर्थः । तदवच्छिन्नेति । प्रमेयत्वावच्छिन्नेत्यर्थः । तथा च तादात्म्येन प्रमेयत्वावच्छिन्नाभावाप्रसिद्ध्याव्याप्तिरिति भावः । यद्यपि प्रमेयत्वेन घटपटोभयभेदस्यैव साध्याभावतया नाव्याप्तिः, तथापि धनी चैत्रत्वादित्यादावव्याप्तिरेव, साध्यतावच्छेदकीभूतस्वामित्वसम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेः ।

## ❀ जागदीशी ❀

अन्ये तु यावन्तः साध्याभावाः प्रत्येकं तत्सजातीयनिष्ठं यद्यद्रूपावच्छिन्नप्रतियोगिताकाभावत्वं तत्तत्साध्याभावव्यापकतावच्छेदकं तत्तद्रूपेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वमर्थः । तत्र च साध्याभावव्यापकतावच्छेदकत्वमपहाय साध्याभावसमानाधिकरणवृत्तित्वोक्तौ गुणान्यत्वविशिष्टसत्ताभाववान् द्रव्यान्यत्वविशिष्टसत्ताभावादित्यत्रातिव्याप्तिः, गुणान्यत्वविशिष्टसत्ताभावाभावरूपस्य द्रव्यान्यत्वाद्यभावरूपस्य वा निरुक्तसाध्याभावस्य सजातीये समानाधिकरणे च सत्तास्वरूपेभावे वर्तते यद्द्रव्यान्यत्वविशिष्टसत्ताभावत्वरूपधर्मावच्छिन्नप्रतियोगिताकाभावत्वं तेन द्रव्यान्यत्वविशिष्टसत्ताभावत्वरूपधर्मेण हेतुतावच्छेदकावच्छिन्नं प्रति व्यापकतावच्छेदात् । साध्याभावव्यापकतावच्छेदकत्वोक्तौ तु द्रव्यान्यत्वविशिष्टसत्ताभावत्वावच्छिन्नप्रतियोगिताकाभावत्वादिकं न गुणान्यत्वविशिष्टसत्ताभावाभावात्मकस्य द्रव्यान्यत्वाभावरूपस्य वा साध्याभावस्य व्यापकतावच्छेदकम्, द्रव्ये एव व्यभिचारादतो नोक्तदोष इति प्राहुः ।

## ❀ दीपिका ❀

व्यापकत्वदलस्य प्रकारान्तरेण सार्थक्यमुपपादयतां मतमाह—अन्ये त्विति एतन्मते लक्षणसमन्वयस्तु-वह्निसामान्याभावो यावदन्तर्गतः तत्सजातीयो धूमाभावादिस्तत्र वर्तमानं यद्रूप-धूमत्वावच्छिन्नप्रतियोगिताकाभावत्वं वह्निसामान्याभावव्यापकतावच्छेदकं वर्तते इति धूमत्वादेः यद्रूपावच्छिन्नधूमव्यापकतावच्छेदकत्वेन

तद्रूपवत्त्वस्य धूमे सत्त्वात्। **गुणान्यत्वविशिष्टसत्ताभावेति।** अत्र यद्यपि सत्ताभावसाध्यकद्रव्यान्यत्वविशिष्टसत्ताभावहेतुतायामप्यतिव्याप्तिः संभवति, तथापि गुणान्यत्वविशिष्टसत्ताभावस्य साध्यतायां हेतुतायां चोभयथातिव्याप्तिरिति सूचनाय गुणान्यत्वविशिष्टसत्ताभावस्य साध्यताङ्गीक्रियते। गुणान्यत्वविशिष्टसत्ताभावसाध्यकसत्ताभावहेतोर्व्यभिचारित्वविरहेण व्यभिचारित्वसम्पत्तये सत्ताभावे द्रव्यान्यत्वविशेषणम्। **सत्तास्वरूप इति।** द्रव्यान्यत्वविशिष्टसत्ताभावाभावस्य तादृशविशिष्टसत्तारूपतया विशिष्टसत्तायाश्च शुद्धसत्तानतिरिक्तत्वेन सत्तास्वरूपत्वमिति भावः। एवञ्च यद्रूपावच्छिन्नप्रतियोगिताकाभावत्वे साध्याभावव्यापकतावच्छेदकत्वानिवेशे गुणान्यत्वविशिष्टसत्ताभाववान् द्रव्यान्यत्वविशिष्टसत्ताभावादित्यत्रातिव्याप्तिः, तथाहि—यावत्साध्याभावान्तर्गतः गुणान्यत्वविशिष्टसत्ताभावाभावो द्रव्यान्यत्वाभावो वा तत्सजातीयः समानाधिकरणश्च सत्तात्मको द्रव्यान्यत्वविशिष्टसत्ताभावाभावः, तत्प्रतियोगितावच्छेदकस्य द्रव्यान्यत्वविशिष्टसत्ताभावत्वस्य द्रव्यान्यत्वविशिष्टसत्ताभावरूपहेतुव्यापकतावच्छेदकत्वात्। व्यापकतावच्छेदकत्वनिवेशे तु नायं दोषः समापतति, गुणान्यत्वविशिष्टसत्ताभावाभावाधिकरणं द्रव्यं तद्वृत्तिः द्रव्यान्यत्वविशिष्टसत्ताभावाभावाभावः, तत्प्रतियोगितावच्छेदकमेव द्रव्यान्यत्वविशिष्टसत्ताभावाभावत्वमिति द्रव्यान्यत्वविशिष्टसत्ताभावाभावत्वस्य गुणान्यत्वविशिष्टसत्ताभावाभावरूपसाध्याभावव्यापकतानवच्छेदकत्वादित्याशयः।

## ❀ जागदीशी ❀

द्रव्यं विशिष्टसत्त्वादित्यादौ व्यापकीभूततादृशाभावप्रतियोगितावच्छेदकेन गुणत्वादिना सत्तादिकं प्रति व्यापकतानवच्छेदादव्याप्तेराह—यद्रूपावच्छिन्नं प्रतीति। न चेदं गमनं स्पन्दत्वादित्यादौ तादृशगतित्वाभावस्य प्रतियोगितावच्छेदकीभूतगतित्वत्वादिनापि कालिकसम्बन्धेन स्पन्दत्वव्यापकत्वादतिव्याप्तिरिति वाच्यम्, तादृशाभावस्य यत्प्रतियोगिताया अवच्छेदको धर्मस्तत्प्रतियोगितावच्छेदकसम्बन्धेन हेतुव्यापकत्वस्योक्तत्वादिति भावः।

## ❀ दीपिका ❀

अथ यावन्तः तादृशसाध्याभावास्तेषां सजातीयो व्यापकीभूतो व्याप्यवृत्तिश्च योभावस्तत्प्रतियोगितावच्छेदकं यद्व्यापकतावच्छेदकं तत्त्वमित्यस्यैव सम्यक्त्वे

यद्रूपावच्छिन्नोपादानं व्यर्थमित्याशङ्क्याह-द्रव्यं विशिष्टसत्त्वादिति। तथा च यद्रूपावच्छिन्नपदानुपादाने द्रव्यत्वसामान्याभावस्य सजातीयो व्यापकीभूतो व्याप्यवृत्तिश्च गुणाभावस्तत्प्रतियोगितावच्छेदकस्य गुणत्वस्य सत्तारूपहेतोर्व्यापकतावच्छेदकत्वाभावाद् द्रव्यं विशिष्टसत्त्वादित्यत्राव्याप्तिः। तदुपादाने तु यद्रूप-विशिष्टसत्तात्वावच्छिन्नाया विशिष्टसत्ताया व्यापकतावच्छेदकमेव गुणत्वमिति नाव्याप्तिरिति। नन्वेवमपि गमनं स्पन्दत्वादित्यत्रातिव्याप्तिः, गमनत्वाभावरूपसाध्याभावस्य सजातीयो व्यापको व्याप्यवृत्तिर्गमनत्वाभाव एव, तत्प्रतियोगितावच्छेदकस्य गमनत्वस्य स्पन्दत्वाधिकरणे स्पन्दे कालिकेन गमनत्वस्य वर्तमानतया स्पन्दत्वव्यापकतावच्छेदकत्वादित्याशङ्कते-न चेदमिति। समाधत्ते-तादृशाभावस्येति। प्रतियोगितावच्छेदकसम्बन्धेन हेतुव्यापकत्वस्य ग्रहणे तु समवायेन गमनत्वाभावस्यैव साध्याभावव्यापकतया तत्प्रतियोगितावच्छेदकीभूतसमवायसम्बन्धेन स्पन्दत्वाधिकरणे गमनत्वस्यासत्त्वेन गमनत्वत्वस्य व्यापकतावच्छेदकत्वाभावेन नातिव्याप्तिरिति भावः।

❀ दीधितिः ❀

**साधनस्य तादृशव्यापकाभावप्रतियोगित्वं तदवच्छेदकत्वं वा साध्यतावच्छेदकस्य इति तु न वाच्यम्, द्रव्यं सत्त्वादित्यादौ सत्त्वादेस्तादृशाभावव्यापकगुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नप्रतियोगिताकाभावप्रतियोगित्वादतिव्याप्तेः। ज्ञेयं प्रमेयादित्यादौ प्रमेयत्वादेः तादृशप्रतियोगितानवच्छेदकत्वादव्याप्तेश्च प्रमेयत्वव्यधिकरणप्रतियोगित्वस्याप्रसिद्धेः।**

❀ जागदीशी ❀

परैः परिष्कृतं निरसितुमाह—साधनस्येत्यादिना। तादृशेति। यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीयतद्व्यापकीभूताभावेत्यर्थः। तदवच्छेदकत्वं वेति। तत्तत्साध्याभावसजातीयतद्व्यापकीभूताभावप्रतियोगितावच्छेदकत्वं वेत्यर्थः। प्रथमे दूषणमाह—द्रव्यमित्यादि। तादृशाभावेति। साध्याभावसजातीयतद्व्यापकीभूताभावेत्यर्थः। द्वितीये दूषणमाह—ज्ञेयं प्रमेयादित्यादि।

❀ दीपिका ❀

द्रव्यमित्यादि दीधितिः। यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीयतद्व्यापकीभूताभावप्रतियोगित्वस्य व्याप्तिपदार्थत्वे द्रव्यं सत्त्वादित्यत्रातिव्याप्तिः,

द्रव्यत्वाभावरूपसाध्याभावस्य सजातीयो व्यापकीभूतश्चाभावो गुणकर्मान्यत्वविशिष्ट-सत्ताभावस्तत्प्रतियोगित्वस्य सत्तात्मकहेतौ सत्त्वादिति भावः । **ज्ञेयं प्रमेयादि-त्यादि** दीधितिः । यद्यपि तादृशव्यापकीभूताभावप्रतियोगितावच्छेदको यो हेतुता-वच्छेदकधर्मस्तद्धर्मवत्त्वमित्यर्थाभ्युपगमे विशिष्टसत्ताभावीयप्रतियोगितावच्छेदकस्य विशिष्टसत्तात्वस्य हेतुतावच्छेदकत्वाभावेन द्रव्यं सत्त्वादित्यादौ नातिव्याप्तिः, तथापि ज्ञेयं प्रमेयादित्यत्राव्याप्तिः, ज्ञेयत्वत्वेन घटाद्यभावस्यैव साध्याभावतया तत्स-जातीयः स एवाभावस्तत्प्रतियोगितावच्छेदकीभूतज्ञेयत्वत्वस्य हेतुतावच्छेदकीभूत-प्रमेयत्वरूपत्वाभावात् । **प्रमेयत्वव्यधिकरणेति** दीधितिः । प्रमेयत्वरूपव्यधि-करणधर्मावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेरित्यर्थः । यदि प्रमेयत्वेन घटाभावो व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावो भवेत्, तदा व्यधिकरणधर्मावच्छिन्नसा-ध्याभावसजातीयं प्रमेयत्वेन घटाभावमादाय हेतुतावच्छेदके प्रमेयत्वे तादृशाभाव-प्रतियोगितावच्छेदकत्वसत्त्वेनाव्याप्तिवारणं सम्भवेत्, तदेव तु न सम्भवति, प्रमेयत्वस्य निरुक्ताभावीयप्रतियोगितायाः समानाधिकरणधर्मत्वादिति भावः ।

## ❃ जागदीशी ❃

**प्रमेयत्वादेरिति । न च सामान्यधर्मेण विशेषाभावस्यापि व्यवस्थापि-तत्वात् प्रमेयत्वेन गगनाभावस्यैव प्रागुक्तक्रमेण साध्याभावसजातीयस्य प्रतियोगितावच्छेदकं प्रमेयत्वमादाय नाव्याप्तिरिति वाच्यम्, वह्नित्वेन महा-नसीयवह्न्यभावमादाय धूमसाध्यकवह्न्यावतिव्याप्तिभिया स्वाधिकदेशवृत्ति-धर्मानवच्छिन्नाया एव प्रतियोगितायाः प्रवेश्यत्वात्, प्रमेयत्वेन गग-नाद्यभावप्रतियोगितायाश्चातथात्वात्, विषयत्वापेक्षया गुरोः प्रमाविष-यत्वस्य प्रतियोगितानवच्छेदकत्वे चोक्ताव्याप्तितादवस्थ्यादिति भावः।**

## ❃ दीपिका ❃

अव्याप्तिदोषमुद्धर्तुं शङ्कते—**न चेति । प्रागुक्तक्रमेणेति ।** गगनाभावत्व-तदन्यत्वान्यतररूपेणेत्यर्थः । तथा च गगनाभावत्वरूपेण ज्ञेयत्वत्वेन घटाद्यभावरूप-साध्याभावसाजात्यस्य प्रमेयत्वेन गगनाभावे सत्त्वेन तत्प्रतियोगितावच्छेदके प्रमेय-त्वे हेतुतावच्छेदकत्वसौलभ्येन नाव्याप्तिरिति भावः । अव्याप्त्यभावेप्यतिव्याप्तिमाह-**वह्नित्वेनेति । अतथात्वादिति ।** स्वाधिकदेशवृत्तिधर्मानवच्छिन्नत्वाभावादि-त्यर्थः । स्वपदेन प्रतियोगिता ग्राह्या । एवञ्च धूमसामान्याभावसजातीयो व्यापकी-भूतश्च वह्नित्वेन महानसीयवह्न्यभावस्तत्प्रतियोगितावच्छेदकत्वस्य वह्नित्वरूपहेतुता-

वच्छेदके सत्त्वेन धूमवान् वह्नेरित्यत्रातिव्याप्तिरिति तन्निरासाय प्रतियोगितायां स्वाधिकदेशवृत्तिधर्मानवच्छिन्नत्वमवश्यन्निवेशनीयम्। तथा च प्रमेयत्वेन गगनाभावीयप्रतियोगितायाः स्वाधिकदेश-पटादि-वृत्तिप्रमेयत्वेनावच्छिन्नतया स्वाधिकदेशवृत्तिधर्मानवच्छिन्नत्वाभावेन न प्रमेयत्वेन गगनाभावस्य लक्षणघटकत्वमिति भावः। नन्वेवमपि वह्नित्वे स्वनिरूपकाभावीयप्रतियोगितातिरिक्तवृत्तित्वरूपस्वाधिकदेशवृत्तिधर्मत्वाभावेन वह्नित्वेन वह्निमहानसीयवह्न्युभयाभावस्य स्वनिरूपकाभावीयप्रतियोगित्वातिरिक्तवृत्तिरूपस्वाधिकदेशवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वेन लक्षणघटकतया तादृशोभयाभावमादाय धूमवान् वह्नेरित्यत्रातिव्याप्तितादवस्थ्यम्। न चोभयाभावीयप्रतियोगिता प्रत्येकपर्य्यवसन्ना, उक्तरीतिश्चादरणीया, तथा सति निरुक्तोभयाभावीयप्रतियोगिता महानसीयवह्निनिष्ठैका, महानसीयवह्नीतरवह्निनिष्ठापरा, प्रत्येकप्रतियोगिताया अधिकदेशवृत्तिधर्मत्वस्य वह्नित्वे सत्त्वान्निरुक्तोभयाभावस्य न लक्षणघटकतेति वाच्यम्, एवमपि वह्निमान् वह्निधूमोभयस्मादित्यत्र प्रतियोगितायाः प्रत्येकपर्यवसितत्वे उभयत्वस्य स्वाधिकदेशवृत्तिधर्मत्वेनोभयत्वावच्छिन्नप्रतियोगिताकवह्निधूमोभयाभावरूपहेत्वभावस्य लक्षणाघटकत्वेनाव्याप्तेरिति स्वाधिकदेशवृत्तिधर्मानवच्छिन्नत्वपदेन 'यत्प्रतियोगिताकाभावे स्वावच्छेदकसम्बन्धेन स्वावच्छेदकावच्छिन्नसामानाधिकरण्य-जगद्वृत्तिभिन्नत्वोभयाभावस्तादृशप्रतियोगितानिरूपकत्वरूपव्याप्यवृत्तितानिरूपकत्वमेव' वाच्यम्। तथा च गगननिष्ठप्रतियोगिताके प्रमेयत्वेन गगनाभावे स्वावच्छेदकीभूतप्रमेयत्वावच्छिन्नसामानाधिकरण्यसत्त्वेपि केवलान्वयित्वेन जगद्वृत्तिभिन्नत्वविरहेण निरुक्तोभयाभावसत्त्वात् प्रमेयत्वेन गगनाभावस्य लक्षणघटकत्वान्न दोष इत्यतः प्रकारान्तरेण दोषमाह—**विषयत्वापेक्षयेति। प्रमाविषयत्वस्येति।** प्रमेयत्वस्येत्यर्थः। तथा च प्रमेयत्वेन गगनाभावीयप्रतियोगितावच्छेदकीभूतविषयत्वस्य हेतुतावच्छेदकधर्मत्वाभावेनाव्याप्तिरेव। अस्माकं मते तु तादृशाभावीयप्रतियोगितावच्छेदकीभूतविषयत्वस्य प्रमेयत्वावच्छिन्नव्यापकतावच्छेदकत्वान्न दोष इति भावः।

## ❀ जागदीशी ❀

**नव्यास्तु—यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीयो यस्तत्तत्समानाधिकरणो व्याप्यवृत्त्यभावस्तत्प्रतियोगित्वमेव व्याप्तिः। व्याप्यवृत्तित्वन्तु प्रकृतहेतुसामानाधिकरण्य-व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभाववत्त्वम्। तेन धूमसामान्याभावसमानाधिकरणस्य तत्सजातीयस्य च वह्निधूमोभयत्वावच्छिन्नाभावस्य प्रतियोगित्वेपि धूमसाध्यकवह्न्यादौ**

नातिव्याप्तिः, तादृशोभयाभावस्य निरुक्तव्याप्यवृत्तित्वाभावात्। एवञ्च यत्राभावे प्रकृतसाध्यसामानाधिकरण्य-व्यधिकरणधर्मावच्छिन्नाभावभिन्न-त्वोभयाभावः स एव साध्याभावपदार्थः। तेनाभाववान् प्रमेयत्वादित्यादौ साध्यप्रतियोगिकस्य घटावृत्तित्वावच्छिन्नाभावस्यापि घटादौ वर्तमानस्य तत्सजातीयहेत्वभावस्य निरुक्तव्याप्यवृत्तित्वाप्रसिद्धावपि नाव्याप्तिः। इत्थं च द्रव्यं सत्त्वादित्यादौ गुणान्यत्वाद्यभावस्यापि निरुक्तसाध्याभाव-त्वात्तदधिकरणे गुणादौ वर्तमानस्य तत्सजातीयाभावस्य निरुक्तव्याप्य-वृत्तित्वाप्रसिद्ध्यैव नातिव्याप्तिः। वाच्यं प्रमेयादित्यादौ तु व्यधिकरणधर्मा-वच्छिन्नवाच्यत्वाभावसमानाधिकरणस्य विरुद्धघटत्वपटत्वाभ्यां प्रमेया-भावस्य घटत्वादिना वाच्यत्वाद्यभावस्य वा निरुक्तव्याप्यवृत्तिताशालिनः प्रतियोगितामादाय लक्षणसम्भव इति यथाश्रुतमेव मिश्रलक्षणं सम्यगिति प्रतीमः।

## ❀ दीपिका ❀

मिश्रलक्षणं परिष्कर्तुं स्वमतमाह—**नव्यास्त्विति**। यावत्साध्याभावान्तर्गतो यदि वह्निसामान्याभावस्तदा तत्सजातीयः समानाधिकरणश्च धूमसामान्याभावस्तत्प्रति-योगित्वं धूमे, यदि च वह्नित्वेन घटाभावः साध्याभावान्तर्गतस्तदा तत्सजातीयः समानाधिकरणश्च घटत्वेन धूमाभाव एव तत्प्रतियोगित्वं धूमे इति लक्षणसमन्वयः। धूमवान् वह्नेरित्यत्र धूमसामान्याभावस्य समानाधिकरणो न वह्निसामान्याभावः, अयोगोलके व्यभिचारादिति नातिव्याप्तिरपीति।

नन्वेवमपि धूमवान् वह्नेरित्यादावतिव्याप्तिः, धूमसामान्याभावस्य समानाधि-करणो वह्निधूमोभयाभावस्तत्प्रतियोगित्वस्य वह्नौ सत्त्वादित्यत आह—**व्याप्यवृत्ति-त्वन्त्विति**। तेन=एतादृशव्याप्यवृत्तित्वविवक्षणेन। तथा च वह्निधूमोभयाभावे प्रकृतहेतु-वह्निसामानाधिकरण्यस्य व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वस्य च सत्त्वेन निरुक्तव्याप्यवृत्तित्वविरहान्न निरुक्तोभयाभावस्य लक्षणघटकत्वमिति भावः। अथैतादृशव्याप्यवृत्तित्वविवक्षणे अभाववान् प्रमेयत्वादित्यादावव्याप्तिः, यावत्साध्या-भावान्तर्गतः अभावत्वेन घटावृत्त्यभावस्तत्समानाधिकरणस्य तत्सजातीयस्य(च) प्रमे-यत्वसामान्याभावस्य निरुक्तव्याप्यवृत्तित्वविरहेण लक्षणाघटकत्वादित्यत आह— **एवञ्चेति**। निरुक्तव्याप्यवृत्तित्वविवक्षणे इत्यर्थः। तेन = निरुक्तोभयाभावस्य साध्याभावपदार्थत्वेन। **साध्यप्रतियोगिकस्येति**। साध्यव्यापकतावच्छेदकरू-

पावच्छिन्नप्रतियोगिकस्येत्यर्थः । एवञ्च अभावत्वेन घटावृत्त्यभावे घटादौ ( वर्तमाने ) प्रकृतसाध्यसामानाधिकरण्यस्य व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वस्य च सत्त्वेन न यावत्साध्याभावान्तर्गतत्वम् , अपि तु व्यधिकरणधर्मावच्छिन्नाभावात्मकस्य अभावत्वेन घटाभावादेरेव, तत्सजातीयं समानाधिकरणञ्च निरुक्तव्याप्यवृत्तिताशालिनं समवायितया प्रमेयत्वाभावमादाय लक्षणं समन्वेयमिति भावः ।

ननु अभावत्वेन पर्वतावृत्त्यभावस्यापि वह्निरूपसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वेन यावत्साध्याभावान्तर्गततया तदधिकरणे पर्वते धूमसामान्याभावस्यावर्त्तमानत्वेन साध्याभावसामानाधिकरण्यविरहाद् वह्निमान् धूमादित्यादावव्याप्तिसंभवे अभाववान् प्रमेयत्वादिति स्थलान्तरानुसरणं व्यर्थमिति चेन्न, साध्याभावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्यावश्यं निवेशनीयतया संयोगसम्बन्धावच्छिन्नप्रतियोगिताकपर्वतावृत्त्यभावस्यातिरिक्तत्वेन तदधिकरणे गुणादौ धूमाभावस्य वर्त्तमानत्वेन तत्राव्याप्तिविरहात् । नचैवं धनी चैत्रत्वादित्यत्र साध्यतावच्छेदकीभूतस्वामित्वसम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्धयाव्याप्तिरिति वाच्यम् , प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेशेन अभावत्वेन पर्वतावृत्त्यभावीयप्रतियोगितावच्छेदकतायाः स्वरूपसम्बन्धावच्छिन्नत्वेनाव्याप्तिविरहात् । केचित्तु प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे धूमवान् वह्नेरित्यत्रातिव्याप्तिः । अतः प्रतियोगितायां साध्यतावच्छेदकातिरिक्तसम्बन्धावच्छिन्नत्व-साध्यवद्वृत्त्यभावीयत्वोभयाभावस्य निवेशेन वह्निमान् धूमादित्यादौ नाव्याप्तिरित्याहुः ।

नव्यमते द्रव्यं सत्त्वादित्यत्र नातिव्याप्तिः, तथाहि—गुणभेदाभावोपि यावत्साध्याभावान्तर्गतस्तदधिकरणं गुणादि, तत्र वर्त्तमानस्य गुणकर्मान्यत्वविशिष्टसत्ताभावस्य साध्याभावसजातीयत्वेपि निरुक्तव्याप्यवृत्तित्वविरहादित्याह—इत्थं चेति । एवं वाच्यं प्रमेयादित्यत्राव्याप्तिरपि न, वाच्यत्वत्वेन घटाभावात्मकसाध्याभावस्य सजातीयः समानाधिकरणो निरुक्तव्याप्यवृत्तिश्च घटत्वपटत्वाभ्यां प्रमेयाभावो घटत्वेन वाच्यत्वाभावो वा तत्प्रतियोगित्वस्य प्रमेयरूपहेतौ सत्त्वादित्याह—**वाच्यं प्रमेयादिति ।**

इति यतीन्द्रस्वामिश्रीरामप्रपन्नाचार्यविरचितायां दीपिकायां
साजात्यघटितमिश्रलक्षणव्याख्यानं समाप्तम् ।

❀ दीधितिः ❀

**यद्वा यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तत्प्रतियोगितावच्छेदकेन यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं वा तत्त्वमित्याहुः ।**

❀ जागदीशी ❀

व्यापकीभूतस्य सजातीयस्येत्यादिपरित्यागेन लघुलक्षणमाह—**यद्वेत्यादि । तादृशा इति ।** प्रकृतसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताका इत्यर्थः । अत्रापि यत्सम्बन्धेन साध्यव्यापकता तत्सम्बन्धावच्छिन्नाभावानां प्रतियोगितावच्छेदकधर्मैस्तत्सम्बन्धेन यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यत इति पर्यवसितार्थः । तेन गमनं स्पन्दत्वादित्यादौ गमनत्वत्वावच्छिन्नाभावप्रतियोगितावच्छेदकैर्गमनत्वत्वादिभिः कालिकसम्बन्धेन स्पन्दत्वादिहेतुव्यापकतावच्छेदकत्वेऽपि नातिव्याप्तिः, न वा वाच्यत्वादिभेदप्रतियोगितावच्छेदकमादायैव केवलान्वयिस्थले लक्षणसंभवे प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थावतारानुपपत्तिः ।

❀ दीपिका ❀

**यद्वेत्यादि** दीधितिः । साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताका यावन्तोभावास्तेषां प्रत्येकं तत्तदभावीयप्रतियोगितावच्छेदकं यद्रूपावच्छिन्नव्यापकतावच्छेदकं तद्रूपवत्त्वमिति फलितार्थः । यावत्साध्याभावान्तर्गतो वह्निसामान्याभावो वह्नित्वेन घटाद्यभावश्च, तत्तत्प्रतियोगितावच्छेदकं वह्नित्वं धूमत्वावच्छिन्नव्यापकतावच्छेदकं वर्त्तत इति तद्रूपवत्त्वं धूमस्येति लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ यावदन्तर्गतो धूमसामान्याभावस्तत्प्रतियोगितावच्छेदकस्य धूमत्वस्य वह्नित्वावच्छिन्नव्यापकतावच्छेदकत्वाभावान्नातिव्याप्तिः । ननु गमनत्वसामान्याभावस्य गमनत्वत्वेन घटाद्यभावस्य च साध्याभावस्य प्रतियोगितावच्छेदकं गमनत्वत्वं कालिकेन स्पन्दत्वात्मकहेतुव्यापकतावच्छेदकमिति गमनं स्पन्दत्वादित्यत्रातिव्याप्तिः, एवं वाच्यत्वभेदस्यापि निरुक्तसाध्याभावतया तत्प्रतियोगितावच्छेदकं वाच्यत्वत्वं ज्ञेयत्वहेतुव्यापकतावच्छेदकं वर्त्तत इति वाच्यत्वभेदमादायैव लक्षणसमन्वयसंभवे प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थावतरणानुपपत्तिश्चेत्यत आह—**अत्रापीति** । येन सम्बन्धेन साध्यव्यापकता तेनैव सम्बन्धेन साध्याभावः, तेनैव सम्बन्धेन च हेतुव्यापकता गृह्यत इत्यर्थः । तथा च समवायसम्बन्धेन गमनत्वस्य साध्यव्यापकता वर्त्तत इति

समवायेन गमनत्वस्य हेतुभूतस्पन्दत्वाव्यापकत्वाद् गमनं स्पन्दत्वादित्यादौ नातिव्याप्तिः। एवमेव वाच्यत्वस्य स्वरूपेण साध्यव्यापकतया तेनैव सम्बन्धेन साध्याभावस्य लक्षणघटकत्वमिति वाच्यत्वभेदस्य तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकतया लक्षणाघटकत्वेन प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थस्य नासङ्गतिरिति भावः।

❁ जागदीशी ❁

न च धूमत्वेन धूमाभावस्यैव वह्नित्वेन धूमवद्वृत्तेरभावत्वाद् अयःपिण्डान्यत्वाभावस्य चायःपिण्डभेदप्रतियोगिकस्वरूपसम्बन्धेन भेदत्वावच्छिन्नाभावत्वात्तत्प्रतियोगितावच्छेदकीभूतवह्नित्व-भेदत्वादिभिर्वह्नित्वावच्छिन्नं प्रति व्यापकतावच्छेदाद् धूमवान् वह्नेरित्यादावतिव्याप्तिरिति वाच्यम्, यत्प्रतियोगिताकाभावे स्वावच्छेदकावच्छिन्नवद्वृत्तित्वव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभावस्तादृशप्रतियोगिताया एवावच्छेदकधर्मस्य लक्षणघटकत्वादिति संक्षेपः।

❁ दीपिका ❁

ननु समनियताभावानामैक्यमते धूमत्वेन धूमाभावस्य वह्नित्वेन धूमवद्वृत्त्यभावस्य चैकतया तादृशधूमाभावात्मकसाध्याभावप्रतियोगितावच्छेदकं वह्नित्वमपि, एवमयोगोलकभेदाभावस्य अयोगोलकभेदप्रतियोगिकस्वरूपसम्बन्धेन भेदसामान्याभावस्य चैकरूपतया अयोगोलकभेदाभावात्मकसाध्याभावप्रतियोगितावच्छेदकं भेदत्वमपीति वह्नित्वभेदत्वयोर्वह्निरूपहेतोर्व्यापकतावच्छेदकत्वेन धूमवान् वह्नेरित्यादावतिव्याप्तिरिति शङ्कते—**न चेति**। अतिव्याप्तिं निराकरोति-**यत्प्रतियोगिताकाभाव इति**। तथा च समनियताभावानामैक्येपि तदीयप्रतियोगिता परस्परं भिन्ना, अवच्छेदकभेदेन प्रतियोगिताया भिन्नत्वादिति वह्नित्वेन धूमवद्वृत्त्यभावीयप्रतियोगिता न लक्षणघटिका, तादृशाभावे स्वावच्छेदकं वह्नित्वं तदवच्छिन्नाधिकरणायोगोलकवृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वस्य च सत्त्वेन निरुक्तोभयाभावविरहात्। धूमाभावे तु स्वावच्छेदकीभूतधूमत्वावच्छिन्नवन्महानसादिवृत्तित्वाभाववत्त्वेनोभयाभावसत्त्वेन धूमाभावस्यैव लक्षणघटकत्वेन नातिव्याप्तिः। एवं निरुक्तसम्बन्धावच्छिन्नप्रतियोगिताकभेदसामान्याभावस्य स्वावच्छेदकीभूतभेदत्वावच्छिन्नवद्वृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वस्य च सत्त्वेन निरुक्ताभावीयप्रतियोगिताया लक्षणाघटकत्वान्नातिव्याप्तिरिति भावः।

इति यतीन्द्रस्वामिश्रीरामप्रपन्नाचार्यविरचितायां दीपिकायां साजात्याघटितमिश्रलक्षणव्याख्यानं समाप्तम्।



❀ दीधितिः ❀

**परे तु वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वाभावास्तद्वत्त्वं व्याप्तिः। येन सम्बन्धेन हेतुता तेनैव सम्बन्धेन वृत्तिमद्वृत्तय इत्यत्रापि वृत्तिमत्त्वं बोध्यम्। तेन व्यधिकरणधर्मावच्छिन्नवह्न्यभाववति संयोगेन या वृत्तिस्तदभावस्य जात्यादौ वर्त्तमानस्य धूमादावसत्त्वेपि न क्षतिः।**

❀ जागदीशी ❀

समुदायपदाप्रवेशेन सार्वभौमीयलक्षणं परिष्कर्तुमाह-परे त्विति। साध्याभाववद्वृत्तित्वस्य घटत्वादिनाभावमादाय व्यभिचारिण्यतिव्याप्तिरतो यावन्त इत्युक्तम्। तादृशवृत्तित्वाभाववत्त्वमपि दैशिकविशेषणतया ग्राह्यम्। तेन निर्धूमवृत्तित्वादिसामान्याभावस्यापि कालिकादिसम्बन्धेन वह्न्यादिवृत्तित्वात् यावत्त्वोपादानेपि नातिव्याप्तितादवस्थ्यम्। वह्निमान् धूमाद् वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः, व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्संयुक्तत्वादिसमनियतप्रतियोगिताकस्य संयुक्तत्वादिसामान्याभावस्य हेतावसत्त्वादतो वृत्तिमद्वृत्तय इति। तदनुक्तावसम्भवस्तु नास्ति, तादात्म्यसम्बन्धेन सद्धेतावेव निरुक्तलक्षणगमनात्, व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्तादात्म्यप्रतियोगिकस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव वस्तुगत्या तादृशवृत्तित्वव्यापकप्रतियोगिताकतया तथाविधयावदभावस्य हेतौ सत्त्वादिति ध्येयम्।

❀ दीपिका ❀

**परे त्विति** दीधितिः। तथा च वह्नित्वेन घटाभावात्मकसाध्याभावाधिकरणं महानसादि तन्निरूपितवृत्तित्वस्य घटत्वेनाभावः, वह्निसामान्याभावाधिकरणवृत्तित्वसामान्याभावश्च यावदन्तर्गतः तादृशवृत्तित्वाभावस्य धूमहेतौ सत्त्वाद् वह्निमान् धूमादित्यादौ लक्षणसमन्वयः। धूमवान् वह्नेरित्यादौ तु धूमसामान्याभाववद्वृत्तित्वसामान्याभावोपि यावदन्तर्गतस्तस्य वह्नावसत्त्वान्नातिव्याप्तिः।

अत्र लक्षणे यावत्त्वानुपादाने धूमवान् वह्नेरित्यादावतिव्याप्तिः, धूमाभाववद्वृत्तित्वस्य घटत्वेनाभावो वह्नौ हेतौ सत्त्वात्। तदुपादाने तु यावदन्तर्गतस्य धूमसामान्याभाववद्वृत्तित्वसामान्याभावस्य हेतावसत्त्वान्नातिव्याप्तिरित्याह—**साध्याभाववद्वृत्तित्वस्येति**। ननु यावत्त्वोपादानेपि तादृशवृत्तित्वसामान्याभावस्यापि

कालिकसम्बन्धेन हेतौ सत्त्वेनातिव्याप्तितादवस्थ्यमित्यत आह—**तादृशवृत्तित्वाभावेति** । तथा च तादृशवृत्तिताया वह्नौ सत्त्वे स्वरूपसम्बन्धेन तदभावस्यासत्त्वान्नातिव्याप्तिरिति ।

ननु वृत्तिमद्वृत्तिदलस्य प्रथमं सार्थक्यमनभिधाय यावत्पदस्य व्यावृत्तिकथनं सन्दर्भविरुद्धमिति चेन्न, यावत्पदस्य व्यावृत्तिसम्भवे एव तद्दलस्य सार्थक्यसम्भवेन वैपरीत्येन व्यावृत्तिदानात् ।

ननु कूटाघटितलक्षणे तादृशवृत्तित्वाभावे वृत्तिमद्वृत्तित्वविशेषणं व्यर्थमिति चेन्न, वह्निमान् धूमाद् वाच्यं ज्ञेयत्वादित्यत्राव्याप्तेः । तथाहि—वह्नित्वावच्छिन्नप्रतियोगिताकघटाभावरूपसाध्याभावाधिकरणं महानसादि तन्निरूपितसंयोगसम्बन्धावच्छिन्नवृत्तिताया धूमहेतौ सत्त्वे तादृशवृत्तित्वसामान्याभावस्य यावदन्तर्गतस्य हेतावसत्त्वात्, एवं वाच्यत्वत्वेन घटाभावरूपसाध्याभावाधिकरणे घटादौ ज्ञेयत्वहेतोर्वर्तमानतया तादृशसाध्याभाववद्वृत्तित्वसामान्याभावस्य यावदन्तर्गतस्य ज्ञेयत्वहेतावसत्त्वात् । वृत्तिमद्वृत्तित्वविशेषणप्रवेशे तु संयोगेन वृत्तिमति मीनादौ वह्नित्वेन घटाभाववद्ध्रदादिनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वस्यैव सत्त्वेन तादृशवृत्तित्वसामान्याभावस्य हेतुतावच्छेदकीभूतसंयोगसम्बन्धेन वृत्तिमति वृत्तित्वविरहेण न यावदन्तर्गतत्वम्, किन्तु तादृशवृत्तित्वस्य घटत्वेनाभाव एव वृत्तिमद्वृत्तित्वे यावदन्तर्गतः, तस्य च धूमहेतौ सत्त्वेन नाव्याप्तिरित्याह—**वह्निमानित्यादि** । **संयुक्तत्वादीति** । संयोगसम्बन्धावच्छिन्नवृत्तित्वेत्यर्थः ।

ननु वृत्तिमद्वृत्तित्वानुक्तौ पूर्वोक्तदिशासम्भवसम्भवेऽव्याप्तिकथनमसङ्गतमित्यत आह—**तदनुक्तेति** । वृत्तिमद्वृत्तित्वानुक्तावित्यर्थः । सद्धेतौ = इदं वाच्यं प्रमेयादित्यत्र । अयमाशयः—वाच्यत्वत्वेन घटाभाववन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तितात्वस्य केवलान्वयित्वेन तदवच्छिन्नतादृशवृत्तित्वसामान्याभावस्याप्रसिद्ध्या यावदनन्तर्गतत्वेन विरुद्धघटत्वपटत्वोभयरूपव्यधिकरणधर्मावच्छिन्नतादृशवृत्तित्वाभावस्यैव यावदन्तर्गतस्य प्रमेयहेतौ सत्त्वेन लक्षणसमन्वयसम्भवेन नासम्भवसम्भव इति ध्येयम् । न च तादात्म्यसम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नवृत्तित्वस्याप्रसिद्ध्या कथं लक्षणसमन्वय इति वाच्यम्, तत्र वृत्तित्वस्थाने सम्बन्धित्वस्यैव प्रवेशात् ।

## ❀ जागदीशी ❀

**येन सम्बन्धेन हेतुता वृत्तिमद्वृत्तय इत्यत्रापि वृत्तिमत्त्वं तेनैव बोध्यमिति पाठः । तदभावस्येति । तत्सामान्याभावस्येत्यर्थः । जात्यादाविति ।**

समवेतत्वघटितजातित्वोक्तया सम्बन्धान्तरेण यो वृत्तिमांस्तद्वृत्तित्वमुपदर्शितम्। न क्षतिः = नाव्याप्तिः। हेतुताघटकसम्बन्धेन यो वृत्तिमांस्तदवृत्तित्वेन तादृशाभावस्य यावदनन्तर्गतत्वादिति भावः।

अत्र वृत्तिमति वृत्तिर्दैशिकविशेषणतया ग्राह्या। तेन वाच्यं द्रव्यत्वादित्यादौ व्यधिकरणधर्मावच्छिन्नवाच्यत्वाभाववत्समवेतत्वसमनियतप्रतियोगिताकस्य समवेतत्वसामान्याभावस्य हेतुतावच्छेदकसमवायसम्बन्धेन वृत्तिमति स्पन्दादौ कालिकसम्बन्धेन वर्तमानस्य दैशिकविशेषणतया हेतावसत्त्वेपि नाव्याप्तिः। इत्यत्रापीत्यपिकारेण साध्याभाववति वृत्तिरपि हेतुतावच्छेदकसम्बन्धेनैव ग्राह्येति व्यञ्जितम्। तेन तत्तद्धूमावयवान्यत्वाभावस्यापि पूर्वोक्तद्वितीयरीत्या साध्याभावत्वेन तद्वति सम्बन्धसामान्येन या वृत्तिस्तदभावस्य तत्तद्धूमावयवासमानकालिकद्रव्यवृत्तेर्धूमहेतावसत्त्वेपि वह्निमान् धूमादित्यादौ नाव्याप्तिः।

## ❀ दीपिका ❀

अथैवमपि वह्नित्वेन घटाभावरूपसाध्याभाववन्निरूपितसंयुक्तत्वाभावस्यापि वृत्तिमति जात्यादौ वर्तमानस्य यावदन्तर्गतत्वेन लक्षणघटकतया तस्य च धूमादिहेतावसत्त्वेन अव्याप्तितादवस्थ्यमित्यत आह-दीधितौ-**येन सम्बन्धेनेत्यादि**। तथा च तादृशसंयुक्तत्वसामान्याभावस्य जात्यादौ वर्तमानत्वेपि जात्यादेर्हेतुतावच्छेदकीभूतसंयोगसम्बन्धेन वृत्तिमत्त्वविरहान्न यावदन्तर्गतत्वमिति भावः।

अथैवमपि वाच्यं द्रव्यत्वादित्यादावव्याप्तिरेव, वाच्यत्वत्वेन घटाभाववन्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वसामान्याभावस्य हेतुतावच्छेदकसमवायसम्बन्धेन वृत्तिमति स्पन्दादौ कालिकेन वर्तमानतया लक्षणघटकस्य तस्य च द्रव्यत्वहेतावसत्त्वादित्यत आह—**अत्र वृत्तिमतीति**। तथा च स्पन्दादौ तादृशसाध्याभाववद्द्रव्यसमवेतत्वस्य सत्त्वेन स्वरूपसम्बन्धेन तदभावस्यासत्त्वान्न यावदन्तर्गतत्वमिति भावः।

हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वस्य प्रकृतलक्षणे पूर्वमनुक्तत्वात् 'वह्न्यभाववति संयोगेन या वृत्ति'रिति दीधितिग्रन्थस्याभुक्तवान्तत्वापत्तिरित्यत आह—**इत्यत्रापीति**। **तेनेति**। साध्याभाववद्वृत्तित्वस्य हेतुतावच्छेदकसम्बन्धेन विवक्षणेनेत्यर्थः। **पूर्वोक्तद्वितीयेति**। साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेद-

रूपावच्छिन्नप्रतियोगिताकत्वरूपेणेत्यर्थः । अन्यथा तत्तद्धूमावयवभेदाभावस्यापि वह्निरूपसाध्यव्यापकतावच्छेदकीभूततत्तद्धूमावयवभेदत्वावच्छिन्नप्रतियोगिताकत्वेन साध्याभावतया सम्बन्धसामान्येन तदधिकरणीभूततत्तद्धूमावयवनिरूपितवृत्तित्वसामान्याभावस्य विभिन्नकालीनयोराधाराधेयभावविरहेण तत्तद्धूमावयवासमानकालिकद्रव्ये हेतुतावच्छेदकसंयोगसम्बन्धेन वृत्तिमति वर्तमानत्वेन यावदन्तर्गतस्य धूमहेतावसत्त्वाद् वह्निमान् धूमादित्यादावव्याप्तिः । तथा निवेशे तु तादृशसाध्याभावाधिकरणीभूतधूमावयवनिरूपितसंयुक्तत्वाभावस्य धूमहेतौ सत्त्वान्नाव्याप्तिरिति भावः ।

❀ जागदीशी ❀

वस्तुतो यथाश्रुतलक्षणस्य द्रव्यत्वादिसाध्यतायामवृत्तिगगनादिहेतावतिव्याप्तिः विशिष्टसत्तादावव्याप्तिश्च, द्रव्यान्यस्मिन् गुणादौ विशिष्टसत्ताया अपि वृत्तेः । अतो वृत्तिमद्वृत्तयो यावन्तस्तत्तत्साध्याभाववद्वृत्तित्वाभावास्तद्वत्स्वावच्छिन्नाधिकरणताकधर्मवत्त्वमेव व्याप्तिर्वक्तव्येति । अत्र साध्याभाववद्वृत्तित्वं स्वरूपेणैव निवेश्यम्, न तु हेतुतावच्छेदकसम्बन्धेन, तथा सत्यधिकरणतामात्रस्यैव संयोगादिसम्बन्धेनावर्तमानत्वाद् धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः । अतएव महाकालान्यो घटादित्यादौ कालिकसम्बन्धेन हेतावपि नातिव्याप्तिः, स्वरूपसम्बन्धेन महाकालवृत्तित्वसामान्याभावस्यैव महाकालभेदादिनिष्ठस्य कालिकसम्बन्धावच्छिन्नाधिकरणतायामसत्त्वात्, अन्यथा साध्याभाववति महाकाले कालिकसम्बन्धेन वृत्तित्वाभावस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव तादृशसम्बन्धेन यो वृत्तिमांस्तद्वृत्तित्वेनातिव्याप्तेर्दुर्वारतापत्तेरिति युक्तमुत्पश्यामः ।

❀ दीपिका ❀

अथ यथाश्रुतलक्षणस्य द्रव्यं गगनादित्यत्र द्रव्यत्वाभाववति गुणादौ गगनस्यावर्तमानत्वेन साध्याभाववद्वृत्तित्वाभावस्य हेतौ गगने सत्त्वादतिव्याप्तिः, एवं द्रव्यं विशिष्टसत्त्वादित्यत्र विशिष्टस्य शुद्धानतिरिक्तत्वेन द्रव्यत्वाभाववति गुणादौ सत्ताया वृत्तित्वे विशिष्टसत्तायाश्च वर्तमानत्वेन तादृशवृत्तित्वाभावस्यासत्त्वादव्याप्तिश्चेत्यतः सार्वभौमलक्षणं परिष्कुरुते—**वस्तुत इत्यादिना** । द्रव्यान्यस्मिन्निति । द्रव्यत्वाभावरूपसाध्याभाववतीत्यर्थः । **तद्वत्स्वावच्छिन्नेति** । तद्वती स्वावच्छिन्नाधिकरणता यस्य स्वस्य तद्धर्मवत्त्वमित्यर्थः । अत्र स्वपदं हेतुतावच्छेदकपरम् । यद्धर्मावच्छि-

आधेयतानिरूपिताधिकरणतायां तादृशवृत्तित्वाभावस्तद्धर्मवत्त्वं व्याप्तिरिति फलितार्थः। एवञ्च गगनत्वावच्छिन्नाधेयतानिरूपिताधिकरणताया अप्रसिद्धया द्रव्यं गगनादित्यत्र नातिव्याप्तिः, विशिष्टसत्ताया ( शुद्धसत्तायाश्च ) अनतिरिक्तत्वेपि विशिष्टसत्तात्वावच्छिन्नाधेयतानिरूपिताधिकरणताया विलक्षणत्वेन द्रव्ये एव स्वीकारात्तत्राधिकरणतायां साध्याभाववद्गुणनिरूपितवृत्तित्वाभावस्य सत्त्वाद् द्रव्यं विशिष्टसत्त्वादित्यादौ नाव्याप्तिरपीति भावः।

ननु धूमसामान्याभाववति वह्न्यधिकरणतायाः हेतुतावच्छेदकसंयोगसम्बन्धेनावर्तमानत्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिरित्यतः साध्याभाववद्वृत्तित्वं स्वरूपसम्बन्धावच्छिन्नं ग्राह्यम्। तथा च धूमाभावाधिकरणेऽयोगोलके स्वरूपेण वह्न्यधिकरणतायाः सत्त्वान्न दोष इत्याह—**अत्र साध्याभावेति। तथा सतीति।** हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वग्रहणे इत्यर्थः। **अतएवेति।** स्वरूपसम्बन्धावच्छिन्नसाध्याभाववद्वृत्तित्वग्रहणादेवेत्यर्थः। **महाकालान्यो घटादित्यादि।** अयमाशयः—हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वग्रहणे महाकालभेदवान् घटादित्यत्रातिव्याप्तिः, महाकालभेदाभावरूपसाध्याभावाधिकरणं महाकालस्तत्र कालिकेन वस्तुमात्रस्यैव सत्त्वात् कालिकसम्बन्धावच्छिन्नतादृशवृत्तित्वाभावस्य न कालिकेन वृत्तिमति वृत्तित्वम्, अपि तु कालिकसम्बन्धावच्छिन्नतादृशवृत्तित्वस्य घटत्वेनाभावस्यैव, तस्य च घटादिहेतावपि सत्त्वात्। स्वरूपेण वृत्तित्वनिवेशे तु नायं दोषः, साध्याभाववति महाकाले महाकालभेदस्य स्वरूपेणासत्त्वान्महाकालनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्वसामान्याभावस्य वृत्तिमति महाकालभेदे वर्तमानस्य कालिकसम्बन्धावच्छिन्नघटाधिकरणतायामसत्त्वादिति।

### ❀ दीधितिः ❀

**साध्याभावश्च पूर्ववद् बोध्यः।**

### ❀ जागदीशी ❀

**ननु साध्यप्रतियोगिकाभावमात्रस्य निवेशे धूमस्य तत्तद्वह्न्यभाववद्वृत्तित्वेन वह्निमान् धूमादित्यादावव्याप्तिः। साध्यतावच्छेदकधर्मावच्छिन्नाभावस्य प्रवेशे तु गगनादेः साध्यत्वे द्रव्यत्वादावतिव्याप्तिः, साध्याभावस्य केवलान्वयित्वात्। एवं घ्राणग्राह्यगुणवान् प्रमेयवान् वा पृथिवीत्वादित्यादावव्याप्तिः, तादृशधर्मावच्छिन्नप्रतियोगित्वाप्रसिद्धेरत आह—**

पूर्ववदिति । **प्रकृतसाध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताको व्याप्यवृत्तिश्चाभावोऽत्र साध्याभावपदार्थः । यथाश्रुतसाध्याभावप्रवेशेनासङ्गत्यापत्तेः ।**

## ❀ दीपिका ❀

अथात्र यदि साध्यप्रतियोगिकाभाव एव साध्याभावपदार्थः, तदा तत्तद्वह्न्यभावस्यापि वह्निरूपसाध्यप्रतियोगिकतया तदधिकरण-महानसादिनिरूपितवृत्तित्वाभावस्य धूमादिहेतावसत्त्वाद् वह्निमान् धूमादित्यादावव्याप्तिः । न च साध्यतावच्छेदकमात्रावच्छिन्नप्रतियोगिताकाभाव एव साध्याभावपदार्थः । तथा च तत्तद्वह्न्यभावस्य साध्यतावच्छेदकीभूतवह्नित्वमात्रावच्छिन्नप्रतियोगिताकत्वाभावेन न तत्तद्वह्न्यभावस्य लक्षणघटकत्वमिति वाच्यम्, एवमपि गगनवान् द्रव्यत्वादित्यत्रातिव्याप्तेः, गगनत्वावच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयित्वेन तदधिकरणद्रव्यादिनिरूपितवृत्तित्वसामान्याभावस्य समवायेन वृत्तिमति वृत्तित्वविरहेण व्यधिकरणधर्मावच्छिन्नतादृशसमवेतत्वाभावस्यैव वृत्तिमद्वृत्तित्वेन तस्य च द्रव्यत्वहेतौ सत्त्वादित्याशङ्कते—**नन्विति ।** साध्याभावस्य = गगनाभावस्य, केवलान्वयित्वात् = अत्यन्ताभावाप्रतियोगित्वात् । नन्वधिकरणतानिरूपितनिरूपकतावच्छेदकरूपसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावस्यैव साध्याभावत्वेन गगनत्वे अधिकरणतानिरूपितनिरूपकतावच्छेदकत्वाप्रसिद्ध्यैव गगनसाध्यके हेतौ नातिव्याप्तिरित्यत आह—**एवमिति ।** तथा च घ्राणग्राह्यगुणवान् पृथिवीत्वादित्यत्र घ्राणग्राह्यगुणाभावीयप्रतियोगिताया लाघवेन गुणत्वमात्रावच्छिन्नतया घ्राणग्राह्यगुणत्वरूपसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्याऽव्याप्तिरिति । ननु कम्बुग्रीवादिमान्नास्तीतिप्रतीत्या गुरुधर्मस्यापि प्रतियोगितावच्छेदकत्वस्वीकारे घ्राणग्राह्यगुणवान् पृथिवीत्वादित्यत्र नाव्याप्तिरित्यतः स्थलान्तरमाह—**प्रमेयवानित्यादि ।** तथा च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावस्य साध्याभावपदार्थत्वे स्वरूपसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्ध्या प्रमेयवान् पृथिवीत्वादित्यत्राव्याप्तिरिति भावः । **तादृशधर्मेति ।** घ्राणग्राह्यगुणत्वादीत्यर्थः । **प्रकृतसाध्यव्यापकेति ।** तथा च घ्राणग्राह्यगुणवान् पृथिवीत्वादित्यादौ द्रव्यत्वाभावं प्रमेयवान् पृथिवीत्वादित्यादौ व्यधिकरणधर्मावच्छिन्नाभावं वादाय लक्षणं सङ्गमनीयम् ।

❀ जागदीशी ❀

अत्रापि येन सम्बन्धेन व्यापकता तत्सम्बन्धेन तादृशरूपावच्छिन्नाभावो ग्राह्यः। तेन ज्ञानवान् आत्मत्वादित्यादौ स्वरूपसम्बन्धेन साध्यव्यापकस्य प्रमेयत्वादेः कालिकसम्बन्धावच्छिन्नाभावाधिकरणात्मसमवेतत्वाभावस्य स्पन्दत्वादिनिष्ठस्य हेतावसत्त्वेपि न क्षतिः।

❀ दीपिका ❀

ननु ज्ञानवान् आत्मत्वादित्यत्र स्वरूपेण प्रमेयत्वस्य ज्ञानात्मकसाध्यव्यापकतया कालिकसम्बन्धावच्छिन्नप्रमेयत्वाभावाधिकरणीभूतात्मनिरूपितसमवेतत्वसामान्याभावस्य हेतुतावच्छेदकीभूतसमवायसम्बन्धेन वृत्तिमति स्पन्दत्वे वर्तमानस्यात्मत्वहेतावसत्त्वेनाव्याप्तिरित्यत आह—अत्रापीति। व्यापकतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावो ग्राह्य इत्यर्थः। तथा च स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयत्वाभावाधिकरणं नात्मा, अपि तु भ्रमज्ञानविषय एव, तन्निरूपितसमवेतत्वाभावस्य हेतौ सत्त्वान्नाव्याप्तिरिति भावः। तेन = साध्याभावीयप्रतियोगितायां साध्यव्यापकतावच्छेदकसम्बन्धावच्छिन्नत्वविवक्षणेन। न क्षतिः = नाव्याप्तिः। न च वाच्यत्वस्य स्वरूपेण वह्निव्यापकतया वाच्यत्वभेदस्य साध्याभावतया तदधिकरणपर्वतादि-संयुक्तत्वाभावस्य धूमेसत्त्वाद् वह्निमान् धूमादित्यत्राव्याप्तिसम्भवे ज्ञानवान् आत्मत्वादित्यत्राव्याप्तिदानमसङ्गतमिति वाच्यम्, वाच्यत्वभेदात्मकसाध्याभावाधिकरणनिरूपितसंयुक्तत्वाभावस्य संयोगेन वृत्तिमति वृत्तित्वविरहान्न यावदन्तर्गतत्वमिति घटत्वादिना तादृशसंयुक्तत्वाभावस्य धूमहेतौ सत्त्वात्प्रसिद्धस्थलेव्याप्तिविरहात्।

❀ जागदीशी ❀

यत्तु साध्यतावच्छेदकसम्बन्धेन तादृशरूपावच्छिन्नाभावानां विवक्षणान्न ज्ञानवान् आत्मत्वादित्यादावव्याप्तिः, कालिकसम्बन्धेन प्रमेयत्वाभावस्य साध्यताघटकसमवायसम्बन्धानवच्छिन्नत्वात्। इत्थं च व्यापकतापि तेनैव च सम्बन्धेन ग्राह्या। तेन विषयतया साध्यव्यापकस्य ज्ञानादेः साध्यताघटकसमवायसम्बन्धेनाभाववति हेतोर्वर्तमानत्वेपि द्रव्यं पृथिवीत्वादित्यादौ नाव्याप्तिरिति। तत्तुच्छम्। वृत्त्यनियामकसम्बन्धेन साध्यतायां तदवच्छिन्नप्रतियोगित्वाप्रसिद्ध्या सद्धेतावव्याप्तेः, धूमवान् वह्नेरित्यादावतिव्याप्तेश्च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव संयो-

गसम्बन्धावच्छिन्नाभावस्य व्याप्यवृत्तितया तद्वद्वृत्तित्वाभावस्यापि व्यधिकरणधर्मावच्छिन्नस्यैव वृत्तिमद्वृत्तित्वात्, प्रमेयं द्रव्यत्वादित्यादौ तादात्म्येन साध्यतायामव्याप्तेश्च साध्यतावच्छेदकसम्बन्धेन प्रमेयत्वादेरेव साध्यव्यापकतावच्छेदकतया तत्सम्बन्धेन तदवच्छिन्नाभावाप्रसिद्धे-रिति दिक्।

## ❀ दीपिका ❀

ज्ञानवान् आत्मत्वादित्यादावव्याप्तिवारणपरं यत्तुमतं दूषयितुमुपन्यस्यति—यत्त्विति। **तादृशरूपेति।** साध्यव्यापकतावच्छेदकरूपेत्यर्थः। अव्याप्त्यभावे बीजमाह—**कालिकसम्बन्धेनेति।** तथा च तादृशाभावस्य लक्षणाघटकत्वेन नाव्याप्तिरिति भावः। नन्वेवमपि द्रव्यं पृथिवीत्वादित्यत्राव्याप्तिः, ज्ञानस्य विषयता-सम्बन्धेन द्रव्यत्वरूपसाध्यव्यापकतया साध्यतावच्छेदकीभूतसमवायेन ज्ञानाभावा-धिकरण-पृथिवी-निरूपितसमवेतत्वसामान्याभावस्य समवायेन वृत्तिमति गुणत्वादौ वर्तमानस्य पृथिवीत्वहेतावसत्त्वादित्यत आह—**इत्थं चेति।** साध्याभावीय-प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे इत्यर्थः। तेन साध्यता-वच्छेदकसम्बन्धेन व्यापकत्वनिवेशेन। तथा च साध्यतावच्छेदकसमवायसम्बन्धेन ज्ञानस्य द्रव्यत्वव्यापकत्वविरहेण ज्ञानाभावमादाय नाव्याप्तिरिति भावः। तन्मतं दूषयति—**तन्नेति। वृत्त्यनियामकेति।** स्वामित्वादिसम्बन्धेनेत्यर्थः। अयमा-शयः—प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे धनी चैत्रत्वादि-त्यादौ स्वामित्वादिवृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगिताया अप्रसिद्ध्याव्याप्तिः, धूमसंयोगाभावस्याव्याप्यवृत्तित्वे संयोगेन धूमाभावस्याप्यव्याप्यवृत्तित्वेन निरुक्त-साध्याभावत्वाभावात् संयोगसम्बन्धेन धूमत्वेन घटाभावस्यैव तादृशसाध्याभावतया तादृशसाध्याभावाधिकरणवृत्तित्वस्य घटत्वेनाभावस्यैव वृत्तिमद्वृत्तित्वेन यावदन्तर्गतस्य वह्नौ सत्त्वाद्धूमवान् वह्नेरित्यादावतिव्याप्तिश्च, व्यापकतायां साध्यव्यापकता-वच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे तादात्म्येन प्रमेयत्वस्यैव प्रमेयरूपसाध्यव्यापकता-वच्छेदकतया तादात्म्यसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या प्रमेयं द्रव्यत्वादित्यादावव्याप्तिश्च। अस्मन्मते तु यथायथं समवायेन द्रव्यत्वस्य धनव्यापकतया द्रव्यत्वसामान्याभावं स्वरूपेणायोगोलकभेदस्य धूमव्यापकतयायो-गोलकभेदाभावं स्वरूपेण वाच्यत्वस्य प्रमेयव्यापकतया वाच्यत्वत्वेन घटा-भावमादाय न दोषः।

## ❀ जागदीशी ❀

वह्निमान् धूमादित्यादावव्याप्तिः, वह्निसंयोगाभावस्यापि साध्यव्यापकतया तदभावात्मकवह्निसंयोगवद्वृत्तित्वसामान्याभावस्यापि घटादिनिष्ठस्य हेतावभावादतो व्याप्यवृत्तित्वेनाभावो विशेषितः। वस्तुतस्तु निरुक्तसाध्याभावाधिकरणमवश्यं विशेषणताविशेषेण प्रवेश्यम्, अन्यथा द्रव्यं गुणादित्यादौ द्रव्यत्वाभावस्य कालिकसम्बन्धेनाधिकरणे काले गुणस्य वृत्तेर्द्रव्यत्वाभाववत्समवेतत्वसामान्याभावस्य ज्ञानादिनिष्ठस्य हेतावसत्त्वादव्याप्त्यापत्तेः। तथा च वह्निसंयोगाद्यात्मकाभावस्य तादृशसम्बन्धेनाधिकरणाप्रसिद्ध्या तमादायाव्याप्तेर्वारणार्थं न व्याप्यवृत्तिपदम्, परन्तु रूपवान् पृथिवीत्वादित्यादौ नित्यत्वादिना रूपाद्यभावस्यापि तादृशधर्मावच्छिन्नाभावतया तद्वत्समवेतत्वाभावस्य नित्यरूपादिनिष्ठस्य हेतावसत्त्वादतो व्याप्यवृत्तिपदम्।

## ❀ दीपिका ❀

साध्याभावे व्याप्यवृत्तित्वनिवेशफलमाह—**वह्निमान् धूमादिति**। तथा च साध्याभावे व्याप्यवृत्तित्वानिवेशे वह्निसंयोगाभावस्यापि वह्निव्यापकतया वह्निसंयोगाभावाभावस्यापि साध्यव्यापकतावच्छेदकीभूतवह्निसंयोगाभावावच्छिन्नप्रतियोगिताकत्वेन साध्याभावतया तदधिकरणीभूतमहानसादिनिरूपितसंयुक्तत्वाभावस्य संयोगेन वृत्तिमति घटादौ वर्तमानस्य धूमेसत्त्वाद् वह्निमान् धूमादित्यादावव्याप्तिः। तन्निवेशे तु वह्निसंयोगात्मकसाध्याभावस्याव्याप्यवृत्तितया न लक्षणघटकत्वमिति वह्नित्वेन घटाद्यभावमादाय लक्षणसमन्वयसम्भवे नाव्याप्तिरिति।

अथ साध्याभावाधिकरणस्य स्वरूपेणैव निवेश्यतया वह्निसंयोगात्मकसाध्याभावस्य स्वरूपेणाधिकरणाप्रसिद्ध्यैव व्याप्यवृत्तित्वनिवेशं विनैवाव्याप्तिपरिहारसम्भवे व्याप्यवृत्तित्वनिवेशस्य मूर्धाभिषिक्तं फलमाह—**वस्तुत इति**। अन्यथा=साध्याभावाधिकरणस्य स्वरूपेणाविवक्षणे। तथा च कालिकेन द्रव्यत्वाभावाधिकरणीभूतकाल-निरूपितसमवेतत्वाभावस्य समवायेन वृत्तिमति ज्ञानादौ वर्तमानस्य गुणहेतावसत्त्वादव्याप्तिः। स्वरूपेण साध्याभावाधिकरणत्वविवक्षणे तु द्रव्यत्वाभावाधिकरणीभूतगुणनिरूपितसमवेतत्वाभावस्य गुणे सत्त्वान्नाव्याप्तिरिति भावः। तादृशसम्बन्धेन=स्वरूपसम्बन्धेन। **तादृशधर्मेति**। साध्यव्यापकतावच्छेदकरूपेत्यर्थः। तथा च नित्यत्वस्य रूपात्मकसाध्यव्यापकतावच्छेदकतया नित्यत्वेन रूपाभावस्यापि तदधि-

करणीभूतपृथिवी-निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वसामान्याभावस्य समवायेन वृत्तिमति नित्यरूपे वर्तमानस्य पृथिवीत्वहेतावसत्त्वाद् रूपवान् पृथिवीत्वादित्यत्राव्याप्तिरित्यतः साध्याभावे व्याप्यवृत्तित्वं निवेशनीयमिति भावः।

## ❁ जागदीशी ❁

न च तस्यापि व्याप्यवृत्तित्वादुक्तदोषतादवस्थ्यम्, यत्प्रतियोगिताकाभावे स्वावच्छेदकसम्बन्धेन स्वावच्छिन्नवद्वृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वस्य च द्वयोर्व्यतिरेकः साध्यव्यापकतावच्छेदकरूपावच्छिन्नतादृशप्रतियोगिताकाभावस्योक्तत्वात्। नित्यत्वादिना रूपाद्यभावस्य च व्यधिकरणधर्मावच्छिन्नाभावभिन्नस्य स्वावच्छेदकीभूतनित्यत्वावच्छिन्नवद्वृत्तित्वादेव व्युदासः। एतेन संयोगाभावत्वादेः साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकतया प्रतियोगिवैयधिकरण्याघटितसाध्यव्यापकतानवच्छेदकत्वेपि न व्याप्यवृत्तिपदवैयर्थ्यमिति ध्येयम्।

## ❁ दीपिका ❁

ननु नित्यत्वेन रूपाभावस्य निरवच्छिन्नवृत्तिकतया व्याप्यवृत्तित्वमेवेत्याशङ्कते-न चेति। तस्यापि = नित्यत्वादिना रूपाद्यभावस्यापि। व्याप्यवृत्तित्वात्=अवच्छिन्नवृत्तिकान्यत्वात्। समाधत्ते-**यत्प्रतियोगिताकाभावेति**। तथा च नित्यत्वेन रूपादिनिष्ठप्रतियोगिताकाभावे स्वावच्छेदकं यन्नित्यत्वं तदवच्छिन्नवत्पृथिवीवृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वस्य च सत्त्वेन तादृशाभावस्य न लक्षणघटकत्वम्, अपि तु रूपसामान्याभावस्यैव, तदधिकरणीभूत-वाय्वादिनिरूपितसमवेतत्वाभावस्य पृथिवीत्वहेतौ सत्त्वान्न दोष इति भावः। **एतेनेति**। रूपवान् पृथिवीत्वादित्यत्र व्याप्यवृत्तित्वनिवेशफलसत्त्वेनेत्यर्थः। संयोगाभावत्वादेः= वह्निसंयोगाभावत्वादेः।

## ❁ दीधितिः ❁

तद्वद्वृत्तित्वाभावोपि स्वव्यापकतत्तत्साध्याभाववद्वृत्तितात्वव्यापकप्रतियोगिताकः तत्तत्साध्याभाववद्वृत्तितात्वातिरिक्तेन समानाधिकरणेन वृत्तित्ववृत्तिना वा धर्मेणानवच्छिन्नप्रतियोगिताको वा बोध्यः।

## ❁ जागदीशी ❁

ननु वह्निमान् धूमादित्यादावालोकाद्यवृत्तित्वादिनालोकावृत्तिसामान्याभावोपि साध्याभाववद्वृत्तित्वाभावो यावदन्तर्गतः संयोगादिसम्बन्धेन वह्निसामान्याभाववद्वृत्तित्वस्यालोकावृत्तिमध्ये निवेशात्, एवमिन्धनत्वावच्छिन्नवह्न्यभावाधिकरणीभूतमहानसवृत्तित्वादेर्महानसवृत्तित्वत्वादिना योभावः सोपि साध्याभाववद्वृत्तित्वाभावो यावदन्तर्गतस्तस्तशो धूमादावसत्त्वादसम्भव इत्यत आह-तद्वद्वृत्तित्वाभावोपीति। मिश्रलक्षण इवात्रापि तत्तत्साध्याभाववद्वृत्तितात्वव्यापकव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वनिवेशे आलोकावृत्तित्वाद्यवच्छिन्नाभावस्य हेतावसत्त्वाद् वह्निमान् धूमादित्यत्राव्याप्तिरतोन्यथा व्याचष्टे—स्वव्यापकेति। स्वं प्रतियोगिता तद्व्यापकीभूतं यत्तत्तत्साध्याभाववद्वृत्तित्वत्वं तद्व्यापकप्रतियोगिताकत्वमित्यर्थः।

## ❁ दीपिका ❁

अथ साध्याभाववद्वृत्तित्वाभाव इत्यस्य कोर्थः, यदि तादृशवृत्तित्वप्रतियोगिताकोभावस्तदा वह्निमान् धूमादित्यादावसम्भवः, संयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभाववज्जलादिवृत्तित्वस्यापि आलोकावृत्त्यन्तर्गततयालोकावृत्तित्वेनालोकावृत्त्यभावस्य तद्वद्वृत्तित्वप्रतियोगिकतया संयोगेन वृत्तिमति आलोके वर्तमानस्य यावदन्तर्गतस्य धूमादिहेतावसत्त्वात्। न च तादृशवृत्तितात्वावच्छिन्नप्रतियोगिताकाभाव एवार्थः, तथा च आलोकावृत्त्यभावस्य आलोकावृत्तित्वेनावच्छिन्नप्रतियोगिताकतया वृत्तितात्वावच्छिन्नप्रतियोगिताकत्वाभावेन नालोकावृत्त्यभावो यावदन्तर्गत इति वाच्यम्, एवमपि इन्धनत्वावच्छिन्नप्रतियोगिताकवह्न्यभावाधिकरणीभूतमहानसनिरूपितवृत्तित्वसामान्याभावस्य वृत्तितात्वावच्छिन्नप्रतियोगिताकत्वेन यावदन्तर्गतस्य धूमहेतावसत्त्वेनासम्भवस्यावारणादित्याह—**नन्विति**। तद्वद्वृत्तित्वाभावोपीति दीधितौ तच्छब्देन साध्याभावस्य परामर्शः। ननु मिश्रलक्षण इवात्रापि तत्तत्साध्याभाववद्वृत्तितात्वव्यापकव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वमेवार्थोस्तु अलं प्रकारान्तरविवक्षयेत्यत आह—**मिश्रलक्षण इवेति**। तथा च आलोकावृत्त्यभावीयप्रतियोगितायाः तत्तत्साध्याभाववद्वृत्तितात्वव्यापकत्वेन व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन चालोकावृत्त्यभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिर्दुर्वारा स्यादतः प्रकारान्तरेण विवक्षयत इति भावः।

**स्वव्यापकतेति ।** तादृशवृत्तितात्वसमनियतप्रतियोगिताक इत्यर्थः । तादृशवृत्तित्वाभावीयप्रतियोगिता तत्तत्साध्याभाववद्वृत्तितात्वव्याप्यत्वतत्तत्साध्याभाववद्वृत्तितात्वव्यापकत्वोभयरूपेण ग्राह्येति यावत् । आलोकावृत्त्यभावीयप्रतियोगितायाश्च वह्निरूपसाध्यसामान्याभाववति घटादौ सत्त्वेन साध्याभाववद्वृत्तितात्वव्याप्यत्वविरहेणालोकावृत्त्यभावस्य न लक्षणघटकत्वम् । अत्र प्रथमदलानुक्तौ वह्निसामान्याभाववद्वृत्तितात्वव्यापकप्रतियोगिताकस्य आलोकावृत्तिसामान्याभावस्यापि लक्षणघटकत्वेनाव्याप्तिरतः प्रथमदलम् । द्वितीयदलानुक्तौ वह्नित्वावच्छिन्नघटाभावाधिकरणीभूत-महानस-निरूपितवृत्तित्वसामान्याभावीयप्रतियोगितायास्तत्तत्साध्याभाववद्वृत्तित्वव्याप्यतया तादृशवृत्तित्वाभावमादाय वह्निमान् धूमादित्यादावव्याप्तिरतो द्वितीयदलम् । तथा च तादृशवृत्तितात्वस्याधिकरणे मीननिष्ठवृत्तितायां तादृशमहानसनिरूपितवृत्तित्वाभावीयप्रतियोगिताया असत्त्वेन न तादृशी प्रतियोगिता तादृशवृत्तित्वत्वव्यापिकेति न दोषः । न च वृत्तितात्वव्याप्यत्वनिवेशेनैवालोकावृत्त्यभावस्य वृत्तितात्वव्याप्यप्रतियोगिताकत्वाभावेन दोषवारणसम्भवे प्रथमदले तत्तत्साध्याभाववदित्यस्य वैयर्थ्यमिति वाच्यम्, आलोकावृत्तिवृत्तित्वाभावस्य वृत्तितात्वव्याप्यप्रतियोगिताकत्वेन यावदन्तर्गतस्य धूमहेतावसत्त्वेनाव्याप्तेरनुद्धरत्वात् । तन्निवेशे तु वह्निसामान्याभाववद्वृत्तित्वाभाववति धूमवृत्तितायामालोकावृत्तिवृत्तित्वाभावीयप्रतियोगितायाः सत्त्वेन तादृशवृत्तितात्वव्याप्यत्वाभावेन न दोष इति भावः ।

## ❀ जागदीशी ❀

व्यधिकरणधर्मावच्छिन्नसाधारणसाध्याभाववद्वृत्तितात्वव्यापकप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वाद् व्यभिचारिण्यतिव्याप्तिरत उक्तं—तत्तदिति । स्वनिष्ठवृत्तितात्वरूपेण वृत्तित्वसामान्याभावस्य व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तितात्वसमनियतप्रतियोगिताकस्य हेत्वन्तरवृत्तेः स्वस्मिन्नसत्त्वात् सद्धेतुमात्रेऽसम्भवापत्तेः कल्पान्तरमाह—तत्तदिति । समानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकस्य यावदभावस्यैव व्यभिचारिण्यतिप्रसक्तत्वादतिरिक्तान्तम् । तत्रापि निर्धूमवृत्तितात्वस्यापि सामान्यतः साध्याभाववद्वृत्तितात्वातिरिक्तसमानाधिकरणधर्मतया तदवच्छिन्नसामान्याभावमादायातिव्याप्तेर्वारणाय—तत्तदित्युक्तम् ।

## ❀ दीपिका ❀

ननु द्वितीयदले साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभाववद्वृत्तितात्वव्यापकत्वं प्रतियोगितायां निवेश्यताम्, तत्तद्व्यक्तित्वेन तथाविधाभावानां निवेशो व्यर्थ इत्यत आह—**व्यधिकरणधर्मावच्छिन्नेति**। व्यधिकरणधर्मावच्छिन्नाभाव-समानाधिकरणधर्मावच्छिन्नाभावयोर्वर्तमानं यत् साध्याभावत्वमित्यर्थः। **अतिव्याप्तिरिति**। अयमाशयः—धूमत्वावच्छिन्नप्रतियोगिताकघटाभावाधिकरणनिरूपितवृत्तितात्वस्य पर्वतादिनिरूपितवृत्तितायामप्यस्ति, तत्र च धूमसामान्याभाववद्वृत्तित्वाभावीयप्रतियोगिताया असत्त्वेन धूमसामान्याभावाधिकरणीभूतायोगोलकादिवृत्तित्वाभावीयप्रतियोगिताया धूमत्वावच्छिन्नघटाभावाधिकरणवृत्तित्वत्वव्यापकत्वन्न, किन्तु धूमत्वावाच्छिन्नघटाभाववद्वृत्तित्वस्य घटत्वेनाभावस्य प्रतियोगिताया एवेति तादृशप्रतियोगिताकस्य धूमत्वावच्छिन्नघटाभाववन्निरूपितघटत्वावच्छिन्नवृत्तित्वाभावस्य वह्नौ सत्त्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिः। तत्तद्व्यक्तित्वेन तथाविधाभावनिवेशे तु धूमसामान्याभाववद्वृत्तित्वसामान्याभावीयप्रतियोगितायाः धूमसामान्याभाववद्वृत्तितात्वव्यापकत्वेन तादृशप्रतियोगिताकस्य धूमसामान्याभाववद्वृत्तित्वसामान्याभावस्य वह्नावसत्त्वान्नातिव्याप्तिरिति। नचैवमपि प्रथमदले तत्तद्व्यक्तित्वेन साध्याभावप्रवेशो व्यर्थ इति वाच्यम्, आलोकावृत्तिवृत्तित्वाभावीयप्रतियोगिताया अपि वह्नित्वावच्छिन्नघटाभाववद्वृत्तितात्वव्याप्यतयालोकावृत्तिवृत्तित्वाभावस्य धूमेसत्त्वेन वह्निमान् धूमादित्यत्राव्याप्तेः। तत्तद्व्यक्तित्वेन साध्याभावप्रवेशे तु वह्निसामान्याभाववद्वृत्तितात्वव्याप्यत्वाभावेन न दोषः, आलोकावृत्तिवृत्तित्वान्तर्गतधूमनिष्ठवृत्तितायां तादृशप्रतियोगितायाः सत्त्वेन वह्निसामान्याभाववद्वृत्तितात्वस्यासत्त्वादिति ध्येयम्।

कल्पान्तरानुसरणे बीजमाह—**स्वनिष्ठेति**। तत्तद्धूमादिनिष्ठेत्यर्थः। तथा च महानसीयधूमादिनिष्ठवृत्तितात्वेन वह्नित्वावच्छिन्नघटाभाववद्वृत्तित्वसामान्याभावस्यापि प्रतियोगितायां वह्नित्वावच्छिन्नघटाभाववद्वृत्तितात्वसमनियतत्वसत्त्वेन संयोगेन वृत्तिमति पर्वतीयधूमे वर्तमानस्य यावदन्तर्गतस्य महानसीयधूमेसत्त्वादसम्भव इति भावः। कल्पान्तरानुसरणे तु तादृशवृत्तित्वसामान्याभावो न लक्षणघटकः, साध्याभाववद्वृत्तित्वत्वातिरिक्तेन महानसीयधूमनिष्ठवृत्तितात्वेनावच्छिन्नप्रतियोगिताकत्वात्। अथैवमपि समानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकत्वमेव तादृशवृत्तित्वाभावे निवेश्यताम्, तावतैव महानसीयधूमनिष्ठवृत्तितात्वेन तादृशवृत्तित्व-

सामान्याभावस्य वारणसम्भवादतिरिक्तान्तत्वप्रवेशो व्यर्थ इत्यत आह—**समानाधिकरणेति**। तथा च घटत्वेन निर्धूमवृत्तित्वाभावस्यैव समानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकतया यावदन्तर्गतस्य वह्नौ सत्त्वादतिव्याप्तिः। अतिरिक्तान्तत्वप्रवेशे तु निर्धूमवृत्तित्वसामान्याभावस्य निर्धूमवृत्तितात्वावच्छिन्नप्रतियोगिताकत्वेपि तदतिरिक्तसमानाधिकरणधर्मानवच्छिन्नत्वेन यावदन्तर्गतस्य वह्न्यावसत्त्वान्नातिव्याप्तिः।

नन्वेवमपि साध्याभाववद्वृत्तितात्वातिरिक्तेत्यादि एव निवेश्यताम्, किं तत्तद्व्यक्तित्वेनाभावप्रवेशेनेत्यत आह—**तत्रापीति**। तथा च तत्तद्व्यक्तित्वेनाभावाप्रवेशे धूमसामान्याभाववद्वृत्तितात्वस्य धूमत्वावच्छिन्नघटाभाववद्वृत्तितात्वातिरिक्ततया निर्धूमसामान्याभावस्य न यावदन्तर्गतत्वम्, (किन्तु) घटत्वेन निर्धूमवृत्तित्वाभावस्यैव, तस्य च वह्नौ सत्त्वान्नातिव्याप्तिवारणं सम्भवति। तद्व्यक्तित्वेनाभावप्रवेशे तु निर्धूमवृत्तितात्वस्य धूमसामान्याभाववद्वृत्तितात्वातिरिक्तत्वन्नास्तीति निर्धूमवृत्तित्वसामान्याभावस्य यावदन्तर्गतत्वान्न दोष इति भावः।

## ❀ जागदीशी ❀

**न चैवमपि व्यधिकरणधर्मावच्छिन्नद्रव्यत्वाभाववद्वृत्तित्वत्वेन घटवृत्तित्व-जातित्वान्यतरस्य घटावृत्तेर्वाभावमादाय द्रव्यं पृथिवीत्वादित्यादावव्याप्तिः; हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वभिन्नावृत्तित्वेनापि प्रतियोगिताया विशेषणीयत्वात्। अतएव तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्नाभावा इत्युक्तौ वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः, साध्याभाववद्वृत्तित्वत्वावच्छिन्नं यद्धेतुताघटकसम्बन्धावच्छिन्नवृत्तित्वभिन्नावृत्तिप्रतियोगित्वं तादृशप्रतियोगिताकस्याप्रसिद्धत्वादतो निषेधद्वयगर्भता। तेन घटत्वादिना तादृशवृत्तित्वाभावमादाय तत्सङ्गतिः।**

## ❀ दीपिका ❀

अव्याप्तिं शङ्कते—**नचैवमपीति**। नचेत्यस्याव्याप्तिरित्यनेनान्वयः। एवमपि तादृशवृत्तितात्वातिरिक्तसमानाधिकरणधर्मानवच्छिन्नत्वप्रवेशेपि। तथा च द्रव्यं पृथिवीत्वादित्यादावव्याप्तिः, द्रव्यत्वत्वावच्छिन्नघटाभाववद्वृत्तितात्वेन घटवृत्तित्व-जातित्वान्यतराभावस्य घटावृत्त्यभावस्य वा प्रतियोगिता घटाभाववद्वृत्तित्वत्वातिरिक्तेन धर्मेणानवच्छिन्नेति तादृशान्यतराभावस्य घटावृत्त्यभावस्य च पृथिवीत्वहेतावसत्त्वात्।

ननु तादृशवृत्तितात्वेन तद्धटवृत्तित्वाभावमादायाव्याप्तिसम्भवे जातित्वपर्य्य-

न्तानुधावनं व्यर्थमिति चेन्न, तथा सति वृत्तित्वस्याननुगततयान्यसम्बन्धावच्छिन्नवृत्तित्वनिष्ठप्रतियोगिताकाभावस्य व्यधिकरणधर्मावच्छिन्नाभावत्वेन समवायसम्बन्धावच्छिन्नवृत्तित्वाभावस्य सामान्यरूपेण विशेषाभावतया तस्यानङ्गीकारमते-व्याप्त्यभावेन तत्पर्यन्तानुधावनस्य सार्थक्यात्। सामान्यरूपेण विशेषाभावस्याङ्गीकारे तु सर्वत्र व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तितात्वेन हेतुनिष्ठवृत्तित्वाभावमादाय एतल्लक्षणस्यैवासम्भवापत्तेः। नचैवमपि जातित्वस्य जातीतरावृत्तित्वे सति सकलजातिवृत्तित्वरूपस्य तादृशवृत्तितात्वेनाभावस्यापि सामान्यरूपेण विशेषाभावरूपत्वमस्त्येवेति वाच्यम्, सकलजातिवृत्तित्वेत्यत्र वृत्तित्वस्य स्वरूपसम्बन्धावच्छिन्नस्य वक्तव्यतया हेतुतावच्छेदकीभूतसमवायसम्बन्धावच्छिन्नवृत्तितात्वेन तादृशवृत्तित्वरूपजातित्वघटितान्यतराभावस्यांशिकव्यधिकरणधर्मावच्छिन्नाभावतया ग्रन्थसौलभ्यात्। अनेकसमवेतत्वे सति नित्यत्वरूपस्य जातित्वस्यात्र विवक्षणान्नासङ्गतिरिति (वा बोध्यम्)। नन्वेवमपि व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तितात्वेन पर्वतवृत्तित्वजातित्वान्यतराभावमादाय वह्निमान् धूमादित्यादावव्याप्तिसंभवे स्थलान्तरानुधावनं व्यर्थमिति चेन्न, संयोगसम्बन्धावच्छिन्नवृत्तित्वाभावस्याव्याप्यवृत्तितया तादृशाभावस्य धूमहेतौ सत्त्वेनाव्याप्तिविरहात्, वह्निमान् धूमादित्यादिकस्येव समवायेन द्रव्यत्वादिसाध्यकपृथिवीत्वादिहेतुकस्यापि प्रसिद्धस्थलत्वाच्चेति ध्येयम्।

द्रव्यं पृथिवीत्वादित्यत्र प्रसक्तामव्याप्तिमुद्धरति—**हेतुतावच्छेदकेति**। तथा च तादृशवृत्तितात्वेन घटवृत्तित्व-जातित्वान्यतराभावीयप्रतियोगिताया हेतुतावच्छेदकीभूतसमवायसम्बन्धावच्छिन्नघटवृत्तित्वभिन्ने जातित्वेपि सत्त्वेन तादृशप्रतियोगिताकान्यतराभावस्य लक्षणाघटकत्वेन व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वाभावमादाय द्रव्यं पृथिवीत्वादित्यादावव्याप्तेर्निरासः। अथैवमपि प्रतियोगितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वभिन्नावृत्तित्वेन विशेषणीयत्वेपि साध्याभाववद्वृत्तितात्वेन घटवृत्तित्व-तदन्यवृत्तित्वोभयाभावस्य वृत्तिमद्वृत्तित्वात्तस्य च पृथिवीत्वहेतावसत्त्वेन द्रव्यं पृथिवीत्वादित्यादावव्याप्तिस्तदवस्थैवेति चेन्न, सार्वभौममते उभयत्वस्य एकविशिष्टापरत्वरूपत्वेन विशिष्टस्य चातिरिक्ततया निरुक्तोभयाभावस्य धर्तुमशक्यत्वादिति। सामान्यरूपेण विशेषाभावाभ्युपगमे तु प्रतियोगितायां तादृशवृत्तितात्वव्यापकत्वनिवेशेन न तादृशवृत्तितात्वेन घटवृत्तित्वाभावमादाय दोषः।

ननु तत्तत्साध्याभाववद्वृत्तितात्वावच्छिन्नाभावस्यैव निवेशेन निरुक्तदिशा द्रव्यं पृथिवीत्वादित्यादौ लक्षणसमन्वयसम्भवे नञ्द्वयोपादानं व्यर्थमित्यत आह—अतएवेति। प्रतियोगितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तिभिन्नावृत्तित्वेन विशेषणादेवेत्यर्थः। तथा च नञ्द्वयानुपादाने वाच्यं ज्ञेयत्वादित्यत्राव्याप्तिः। तथाहि—वाच्यत्वत्वावच्छिन्नघटाभाववद्वृत्तित्वस्यैव सत्त्वेन तादृशवृत्तित्वसामान्याभावस्य हेतुतावच्छेदकीभूतस्वरूपसम्बन्धेन वृत्तिमति वृत्तित्वाभावेन तादृशवृत्तितात्वेन घटाभावस्य च तादृशवृत्तितात्वावच्छिन्नप्रतियोगिताकस्य स्वरूपसम्बन्धेन वृत्तिमति वृत्तित्वेपि स्वरूपसम्बन्धावच्छिन्नवृत्तित्वभिन्नघटवृत्तिप्रतियोगिताकत्वेन घटत्वेन तादृशवृत्तित्वाभावस्य च वृत्तिमद्वृत्तेर्हेतुतावच्छेदकीभूतस्वरूपसम्बन्धावच्छिन्नवृत्तित्वभिन्नावृत्तिप्रतियोगिताकत्वेपि 'तादृशवृत्तितात्वावच्छिन्नप्रतियोगिताकत्वाभावेनैव लक्षणाघटकतयान्यादृशस्य चाभावस्यासद्भावात्। निषेधद्वयगर्भत्वे तु घटत्वेन तादृशवृत्तित्वाभावस्य तादृशवृत्तितात्वातिरिक्तसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकस्य स्वरूपसम्बन्धावच्छिन्नवृत्तित्वभिन्नावृत्तिप्रतियोगिताकस्य यावदन्तर्गतस्य ज्ञेयत्वहेतौ सत्त्वान्नाव्याप्तिरिति भावः। तेन = लक्षणस्य निषेधद्वयगर्भत्वेन। तादृशवृत्तित्वाभावम् = वाच्यत्वत्वावच्छिन्नघटाभाववद्वृत्तित्वाभावम्। तत्सङ्गतिः = लक्षणसङ्गतिः सङ्गतिप्रकारस्तु अनुपदमेवोक्तः। प्रतियोगितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वभिन्नावृत्तित्वस्यानुपादाने तु तादृशवृत्तितात्वेन घटाभावमादायैव लक्षणसङ्गत्या निषेधद्वयोपादानं व्यर्थं स्यादिति भावः।

## ❀ जागदीशी ❀

केचित्तु यद्यपि तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्ना यावन्तोभावा इत्येव लाघवाद्वक्तुमुचितम्, तथापि वाच्यं प्रमेयादित्यादौ तादात्म्येन हेतौ जगत एव साध्याभाववत्तादात्म्यतया तादृशतादात्म्यत्वावच्छिन्नाभावाप्रसिद्ध्याव्याप्तिरतो निषेधद्वयगर्भता। इत्थं च विरुद्धघटत्वपटत्वाभ्यामेव तादृशवृत्तित्वाभावः सुलभ इत्याहुः।

## ❀ दीपिका ❀

निषेधद्वयानुपादाने वाच्यत्वसाध्यके तादात्म्येन प्रमेयहेतुकस्थलेव्याप्तिः, वाच्यत्वत्वावच्छिन्नघटाभाववन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तित्वस्यैव सर्वत्र सत्त्वेन तादात्म्यसम्बन्धावच्छिन्नतादृशवृत्तितात्वावच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्धेः। निषे-

धद्वयोपादाने तु विरुद्धघटत्वपटत्वयोस्तादृशवृत्तितात्वातिरिक्तत्वेपि समानाधिकरणधर्मत्वाभावेन विरुद्धघटत्वपटत्वोभयरूपेण वाच्यत्वत्वावच्छिन्नघटाभाववन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तिरवस्याभावमादाय लक्षणसङ्गतिरिति केषाञ्चिन्मतं प्रदर्शयति- **केचित्त्विति**। साध्याभाववत्तादात्म्यतया = व्यधिकरणधर्मावच्छिन्नसाध्याभावाधिकरणनिरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तितया। **तादृशेति**। व्यधिकरणधर्मावच्छिन्नसाध्याभाववदित्यर्थः। **इत्थं चेति**। निषेधद्वयोपादाने इत्यर्थः। तादृशवृत्तित्वाभावः = व्यधिकरणधर्मावच्छिन्नसाध्याभाववन्निरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तित्वाभावः।

## ❀ जागदीशी ❀

यत्तु वृत्तित्वत्वमपेद्य गुरोर्वाच्यत्वाभाववद्वृत्तित्वत्वस्य प्रतियोगितानवच्छेदकतया केवलान्वयिनि अव्याप्तिभिया तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्नाभावा नोक्ता इति। तत्तुच्छम्। गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमादृत्यैव लक्षणकरणात्, अन्यथा एतत्कल्पे वृत्तिमद्वृत्तिपदवैयर्थ्यापत्तेः, वृत्तित्वत्वमात्रस्य तत्तत्साध्याभाववद्वृत्तित्वत्वातिरिक्तसमानाधिकरणधर्मतयैव तदवच्छिन्नसामान्याभावमादायाव्याप्त्यसम्भवात्।

## ❀ दीपिका ❀

नञ्द्वयोपादानफलं वर्णयतामन्येषां मतं दूषयितुमुपन्यस्यति—**यत्त्विति**। एतेषामयमाशयः—नञ्द्वयानुपादाने तत्तत्साध्याभाववद्वृत्तितात्वावच्छिन्नप्रतियोगिताकाभाववत्त्वस्यैव लक्षणत्वे वाच्यं ज्ञेयत्वादित्यादौ केवलान्वयिनि वाच्यत्वत्वावच्छिन्नघटाभाववद्वृत्तितात्वेन घटाभावस्यैव वृत्तिमद्वृत्तितया तादृशाभावमादायैव लक्षणं सङ्गमनीयम्, तच्च न संभवति, तादृशवृत्तितात्वेन घटाभावीयप्रतियोगितानिरूपितावच्छेदकताया लाघवाद् वृत्तितात्वमात्रे एवाङ्गीकारेण तादृशवृत्तितात्वावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेः। नञ्द्वयोपादाने तु साध्याभाववद्वृत्तित्वस्य घटत्वेनाभावमादाय लक्षणसङ्गतेरिति।

तदेतन्मतं दूषयति—**तत्तुच्छमिति**। अन्यथा=गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे। एतत्कल्पे=तत्तत्साध्याभाववद्वृत्तितात्वातिरिक्तसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकाभावनिवेशपक्षे। वृत्तिमद्वृत्तिपदवैयर्थ्ये हेतुमाह—**वृत्तितात्वमात्रस्येति**। अयमाशयः—वाच्यं ज्ञेयत्वादित्यादौ केवलान्वयिनि वाच्यत्वत्वावच्छिन्न-

प्रतियोगिताकाभाववद्वृत्तित्वस्यैव ज्ञेयत्वहेतौ सत्त्वेन तादृशवृत्तित्वसामान्याभावस्य यावदन्तर्गतस्याप्रसिद्ध्याऽव्याप्तिवारणायाभावे वृत्तिमद्वृत्तित्वविशेषणं दीयते, गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वमते तादृशवृत्तित्वसामान्याभावीयप्रतियोगितावच्छेदकत्वस्य लाघवाद् वृत्तितात्वमात्रे स्वीकर्तव्यतया वृत्तितात्वस्य तत्तत्साध्याभाववद्वृत्तितात्वातिरिक्तसमानाधिकरणधर्मतया तदनवच्छिन्नप्रतियोगिताकस्य घटत्वेन तादृशावृत्तित्वाभावस्यैव यावदन्तर्गतस्य ज्ञेयत्वहेतौ सत्त्वेनाऽव्याप्त्यभावाद् वृत्तिमद्वृत्तित्वविशेषणं व्यर्थं स्पष्टमेवेति गुरुधर्मस्य प्रतियोगितावच्छेदकत्वं स्वीकृत्यैवैतत्कल्पस्य प्रणयनमिति ।

## ❀ जागदीशी ❀

किंच गुरुधर्मस्यानवच्छेदकत्वे तद्घटभिन्नं घटत्वादित्यादावतिव्याप्तिरपि स्यात्, तद्घटवृत्तित्वत्वापेक्षया गुरुत्वेन तद्घटभेदाभाववद्वृत्तित्वत्वावच्छिन्नाभावाप्रसिद्धेः, तद्घटवृत्तित्वत्वस्य च साध्याभाववद्वृत्तित्वत्वातिरिक्तसमानाधिकरणधर्मतया तदवच्छिन्नाभावस्य लक्षणाघटकत्वात् । एवं स्नेहशून्यं द्रव्यत्वादित्यादौ स्नेहशून्यत्वाभाववद्वृत्तित्वत्वादेर्जलवृत्तित्वत्वापेक्षया गुरुत्वेन तदवच्छिन्नाभावाप्रसिद्ध्यातिव्याप्तिर्द्रष्टव्येति दिक् ।

## ❀ दीपिका ❀

नन्वत्र कल्पे वृत्तिमद्वृत्तित्वविशेषणं न देयमेवेत्यतो दोषान्तरमाह—किञ्चेति । तथा च गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वाभ्युपगमे तद्घटभिन्नं घटत्वादित्यादावतिव्याप्तिः । तथाहि—तद्घटभेदाभाववद्वृत्तित्वसामान्याभावीयप्रतियोगितावच्छेदकत्वस्य लाघवात्तद्घटवृत्तितात्वे एव त्वन्मते स्वीकर्तव्यतया तद्घटवृत्तितात्वस्य तद्घटभेदाभाववद्वृत्तितात्वातिरिक्तधर्मतया तदनवच्छिन्नप्रतियोगिताकस्य घटत्वेन तद्घटभेदसामान्याभाववद्वृत्तित्वाभावस्यैव वृत्तिमद्वृत्तितया लक्षणघटकस्य घटत्वहेतौ सत्त्वात् । अस्मन्मते तु तद्घटभेदाभाववद्वृत्तित्वत्वावच्छिन्नप्रतियोगिताकस्य तादृशवृत्तित्वसामान्याभावस्य तादृशवृत्तितात्वातिरिक्तसमानाधिकरणधर्मानवच्छिन्नस्य यावदन्तर्गतस्य हेतावसत्त्वान्नातिव्याप्तिरिति भावः । तदवच्छिन्नाभावस्य = तद्घटवृत्तितात्वावच्छिन्नप्रतियोगिताकतादृशवृत्तित्वसामान्याभावस्य ।

ननु पूर्वोक्तरीत्या घटभिन्नं द्रव्यत्वादित्यत्रातिव्याप्तिसंभवे साध्यांशे तत्पदनिवेशो व्यर्थ इति चेन्न, घटवृत्तितात्वपदेन घटनिरूपितत्वविशिष्टवृत्तितात्वमेव वक्तव्यम् । तथा च घटव्यक्तिभेदेन तादृशवृत्तितात्वं यदि नाना, तदा नैकमपि वृत्ति-

तात्वं घटभेदत्वरूपाखण्डधर्मावच्छिन्नाभाववद्वृत्तितात्वसमनियतमिति तत्रा-तिव्याप्त्यभावात्। न च घटवृत्तितात्वपदेन घटत्वावच्छिन्नवद्वृत्तितात्वमेव वक्तव्यम्, तथा चानुगतधर्मस्य घटत्वस्य तदन्तर्गततया तादृशवृत्तितात्वम-प्येकमिति समनियतत्वेन भवत्येवातिव्याप्तिरिति वाच्यम्, पृथिवीत्वतेजस्त्वादिना साङ्कर्यात् घटत्वस्य नानात्वपक्षे कस्यापि घटत्वावच्छिन्नवद्वृत्तित्वत्वस्य तादृश-वृत्तितात्वसामनैयत्याभावात्। **एवमिति**। गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे स्नेहशून्यं द्रव्यत्वादित्यत्राप्यतिव्याप्तिः, स्नेहशून्यत्वाभाववद्वृत्तित्वसामान्या-भावीयप्रतियोगितावच्छेदकत्वस्य लाघवाज्जलवृत्तितात्वे एव स्वीकर्तव्यतया जलवृत्ति-तात्वस्य च स्नेहशून्यत्वाभाववद्वृत्तितात्वातिरिक्तसमानाधिकरणतया तदनवच्छि-न्नप्रतियोगिताकस्य घटत्वेन स्नेहशून्यत्वाभाववद्वृत्तित्वाभावस्यैव लक्षणघटकतया तस्य चाभावस्य द्रव्यत्वहेतौ सत्त्वादिति भावः। तदवच्छिन्नाभावस्य = स्नेहशून्य-त्वाभाववद्वृत्तितात्वावच्छिन्नाभावस्य।

## ❀ जागदीशी ❀

यस्य कस्यचित्सामानाधिकरण्यमव्यावर्तकम्, अतस्तत्तत्प्रतियो-गितासमानाधिकरणत्वनिवेशापेक्षया लाघवमनुस्मृत्याह—वृत्तित्ववृत्तिना वेति। साध्याभाववद्वृत्तित्ववृत्तिना वेति पाठे साध्याभाववत्त्वं सम्पा-तायातम्। यद्यपि तादृशवृत्तित्ववृत्तिधर्मानवच्छिन्नप्रतियोगिताकस्य धूम-त्वादिसामान्याभावस्य घटाद्यन्यत्वाभावस्य च यावदन्तर्गतस्य हेताव-सत्त्वाद्वह्निमान् धूमादित्यादौ सर्वत्रासम्भवः, तादृशधर्मानवच्छिन्नवृत्ति-त्वनिष्ठप्रतियोगिताकाभावविवक्षणेऽपि घटभेदत्वेन घटभेद-निर्वह्निवृत्ति-त्वान्यतराभावस्य तादृशहेतावसत्त्वात्। तथापि पूर्ववदत्रापि कल्पे हेतु-ताघटकसम्बन्धावच्छिन्नवृत्तित्वभिन्नावृत्तित्वेन प्रतियोगित्वं च विशेषणीय-मित्यदोषः। अतएव पूर्ववद् वाच्यं ज्ञेयत्वादित्यादिसङ्ग्रहार्थमेव निषेध-द्वयगर्भता। स्वन्यूनवृत्तिधर्मानवच्छिन्नवृत्तित्वनिष्ठप्रतियोगिताया एव तादृ-शवृत्तितात्वातिरिक्तवृत्तित्वनिष्ठधर्मानवच्छिन्नत्वं विवक्षितमित्यपि कश्चित्। वृत्तित्ववृत्तिना धर्मेण वेति पाठे तु धूमत्वाद्यभावमादायासम्भवतया धर्मेण वेति कल्पान्तरोल्लेखः। तत्तत्साध्याभाववद्वृत्तित्वत्वातिरिक्तेन पूर्वे-णान्वयि। तथा च तत्तत्साध्याभाववद्वृत्तित्वत्वातिरिक्तधर्मानवच्छिन्न-प्रतियोगिताक इत्यर्थः। तथा च धूमत्वघटभेदत्वादेस्तादृशवृत्तित्वत्वाति-

रिक्तधर्मत्वादेव तदवच्छिन्नसामान्याभावमादाय नासम्भवः। वाच्यं प्रमेयादित्यादौ तु तादात्म्येन हेतौ विरुद्धघटत्वपटत्वाभ्याम्, अवृत्तिगगनादिना वा वृत्तित्वाभावमादाय लक्षणसमन्वय इति ध्येयम्।

❀ दीपिका ❀

तत्तत्साध्याभाववद्वृत्तितात्वातिरिक्तसमानाधिकरणेत्यत्र (सामान्यतः) सामानाधिकरण्यविवक्षणे यत्किंचित्सामानाधिकरण्यस्य सर्वत्र सत्त्वेन सामानाधिकरण्यनिवेशो व्यर्थः, स्वसामानाधिकरण्यविवक्षणे स्वत्वस्याननुगतत्वेन स्वसामानाधिकरण्यमप्यननुगतं स्यादिति समानाधिकरणपदेन तत्तत्साध्याभाववद्वृत्तित्वाभावीयप्रतियोगितासामानाधिकरण्यं विवक्षयत इत्याशयेनाह—**तत्तत्प्रतियोगितेति**। अथ तत्तत्प्रतियोगितासामानाधिकरण्यविवक्षणेऽपि कालिकसम्बन्धमादायाव्यावर्तकमिति स्वावच्छेदकताघटकसम्बन्धेन तत्र वृत्तित्वं ग्राह्यम्। तथा च तत्तदनिवेशेऽपि विरुद्धघटत्वादिना व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वाभावसङ्ग्राहकतया सार्थक्यसम्भवादव्यावर्तकत्वकथनमनुचितमिति चेन्न, जन्यमात्रस्य कालोपाधित्वास्वीकारेण स्वावच्छेदकताघटकसम्बन्धेन सामानाधिकरण्यघटकवृत्तित्वस्याप्रवेशादिति। एवञ्च तत्तत्साध्याभाववद्वृत्तितात्वातिरिक्तवृत्तित्ववृत्तिधर्मानवच्छिन्नप्रतियोगिताकाभावस्तादृशवृत्तित्वाभावपदेन विवक्षणीय इति फलितम्। वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वत्वावच्छिन्नघटाभाववद्वृत्तित्वस्य घटत्वेन योभावस्तस्य घटत्वावच्छिन्नप्रतियोगिताकत्वेपि घटत्वस्य तादृशवृत्तित्ववृत्तिधर्मत्वाभावेन तादृशवृत्तित्ववृत्तिधर्मानवच्छिन्नप्रतियोगिताकतया यावदन्तर्गतस्य ज्ञेयत्वहेतौ सत्त्वाल्लक्षणसमन्वयः।

अथैवमपि वह्निमान् धूमादित्यादावसम्भवः, धूमत्वसामान्याभावस्य धूमत्वत्वावच्छिन्नप्रतियोगिताकत्वेपि धूमत्वत्वस्य वह्न्यभाववद्वृत्तितात्वातिरिक्तवृत्तित्ववृत्तिधर्मत्वाभावेन तादृशवृत्तित्ववृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वेन लक्षणघटकतया तस्य च धूमत्वाभावस्य धूमहेतावसत्त्वात्। न च तादृशवृत्तित्ववृत्तिधर्मानवच्छिन्नवृत्तित्वनिष्ठप्रतियोगिताकाभावविवक्षणान्न दोषः, धूमत्वसामान्याभावस्य वृत्तित्वनिष्ठप्रतियोगिताकत्वाभावेन यावदनन्तर्गतत्वादिति वाच्यम्, एवमपि घटभेदत्वेन घटभेद-निर्वह्निवृत्तित्वान्यतराभावस्य घटभेदत्वावच्छिन्नप्रतियोगिताकत्वेन घटभेदत्वस्य च निरुक्तवृत्तित्ववृत्तिधर्मत्वाभावेन तादृशवृत्तित्ववृत्तिधर्मानवच्छिन्नवृत्तित्वनिष्ठप्रतियोगिताकतया यावदन्तर्गतस्य धूमहेतावसत्त्वेनासम्भवस्य दुर्वारत्वादित्याशङ्कते—

**यद्यपीति । तादृशवृत्तित्वेति ।** वह्निसामान्याभाववद्वृत्तितात्वातिरिक्तवृत्तित्वे-त्यर्थः । **तादृशधर्मेति ।** तत्तत्साध्याभाववद्वृत्तितात्वातिरिक्तवृत्तित्ववृत्तिधर्मेत्यर्थः । तादृशहेतौ=धूमादिहेतौ । असम्भवं निराकरोति—**तथापीति । हेतुताघटकेति ।** हेतुतावच्छेदकेत्यर्थः । **अदोष इति ।** तथा च धूमत्वसामान्याभावस्य हेतुतावच्छेद-कीभूतसंयोगसम्बन्धावच्छिन्नवृत्तित्वभिन्नधूमत्वनिष्ठप्रतियोगिताकतया हेतुतावच्छेदक-सम्बन्धावच्छिन्नवृत्तित्वभिन्नावृत्तिप्रतियोगिताकत्वाभावेन यावदनन्तर्गतत्वान्न धूमत्व-सामान्याभावमादायासम्भव इति बोध्यम् । अतएव = प्रतियोगितायां हेतुतावच्छे-दकसम्बन्धावच्छिन्नवृत्तित्वभिन्नावृत्तित्वविवक्षणादेव । सङ्ग्रहप्रकारस्तु पूर्वोक्तदिशा-वसेयः । **कश्चिदिति ।** तथाचैतन्मते धूमत्वादिसामान्याभावस्य प्रतियोगिताया वृत्तित्वनिष्ठत्वाभावेन घटभेदत्वेन घटभेद-निर्वह्निवृत्तित्वान्यतराभावस्य च प्रति-योगिताया वृत्तित्वनिष्ठत्वेपि स्वन्यूनवृत्तिघटभेदत्वावच्छिन्नत्वेन लक्षणाघटकतया न पूर्वोक्तदिशासम्भवसम्भव इति भावः । स्वपदेन प्रतियोगिता ग्राह्या ।

❁ दीधितिः ❁

**तेनालोकावृत्तित्वेन रूपेण यो वह्निसामान्याभाववद्वृत्तित्वस्य यश्चेन्धनत्वाद्यवच्छिन्नवह्न्यभावाधिकरणीभूतमहानसवृत्तित्वादेर-भावस्तस्य धूमादौ स्वनिष्ठसाध्याभाववद्वृत्तित्वादेर्विरहस्य च हेत्वन्तरवृत्तेः स्वस्मिन्नसत्त्वेपि न क्षतिरित्याहुः ।**

❁ जागदीशी ❁

स्वव्यापकतत्तत्साध्याभाववद्वृत्तितात्वेत्यस्य व्यावृत्तिमाह—**आलोका-वृत्तित्वेनेति । निर्वह्निवृत्तित्वस्येति** प्रतियोगितायां तत्तत्साध्याभाववद्वृ-त्तितात्वव्यापकत्वप्रदर्शनार्थम् । न च स्वव्यापकवृत्तितात्वकेत्युक्त्वापि आलोकावृत्तित्वावच्छिन्नाभावस्य वारणसम्भवात् प्रतियोगिताव्यापकत्व-दिशि तत्तत्साध्याभाववदन्तर्भावो व्यर्थ इति वाच्यम्, आलोकावृत्तिवृत्ति-त्वाभावमादायाव्याप्तिवारणार्थं तस्यावश्यकत्वात्, स्वसमानाधिकरणात्य-न्ताभावाप्रतियोगितत्तत्साध्याभाववद्वृत्तित्वत्वाश्रयनिष्ठात्यन्ताभावाप्रतियो-गिप्रतियोगिताकत्वरूपपर्य्यवसितार्थे तत्तत्साध्याभाववतः सकृदेव निविष्ट-तया वैयर्थ्याशङ्कानवकाशाच्चेति भावः ।

## ❀ दीपिका ❀

दीधितौ **तेनेति**। स्वव्यापकतत्तत्साध्याभाववद्वृत्तितात्वस्य प्रतियोगितायां निवेशेनेत्यर्थः। अस्य न क्षतिरित्यनेनान्वयः।

**आलोकावृत्तित्वेनेति**। तथा च स्वव्यापकतत्तत्साध्याभाववद्वृत्तितात्वस्यानिवेशे वह्निमान् धूमादित्यादावव्याप्तिः, आलोकावृत्तित्वेन वह्निसामान्याभाववद्वृत्तित्वाभावस्य तत्तत्साध्याभाववद्वृत्तितात्वव्यापकप्रतियोगिताकत्वेन यावदन्तर्गततया तस्य च धूमहेतावसत्त्वात्। तदुक्तौ तु निर्वह्निवृत्तितात्वस्य निरुक्ताभावीयप्रतियोगिताव्यापकत्वं नास्ति, निर्वह्निवृत्तितात्वस्यालोकनिष्ठवृत्तितायामपि सत्त्वेन तत्र निरुक्ताभावीयप्रतियोगिताया असत्त्वादिति निरुक्ताभावस्य यावदनन्तर्गतत्वान्न दोषः।

ननु स्वव्यापकवृत्तितात्वव्यापकत्वस्यैव प्रतियोगितायां निवेशादेव निरुक्ताभावस्य वारणसम्भवे स्वव्यापकत्वदले तत्तत्साध्याभाववत्प्रवेशो व्यर्थ इत्याशङ्कते—**नचेति**। आलोकावृत्तित्वावच्छिन्नाभावस्य=आलोकावृत्तित्वेन निर्वह्निवृत्तित्वाभावस्य। समाधत्ते—**आलोकावृत्तिवृत्तित्वेति**। तथा च स्वव्यापकत्वदले तत्तत्साध्याभाववतोप्रवेशे आलोकावृत्तिवृत्तित्वाभावीयप्रतियोगिताव्यापकत्वस्य वृत्तितात्वे सत्त्वेन वह्निमान् धूमादित्यत्र तादृशाभावमादायाव्याप्तेस्तादवस्थ्यमेव। तन्निवेशे तु प्रतियोगिताया आलोकावृत्तिवृत्तित्वेपि सत्त्वेन तत्र च निर्वह्निवृत्तितात्वस्यासत्त्वान्न दोष इति भावः। किञ्चैकधैव साध्याभाववतः प्रवेशेन न वैयर्थ्याशङ्केत्याह—**स्वसमानाधिकरणेति**। स्वम् = प्रतियोगित्वम्, तत्समानाधिकरणात्यन्ताभावाप्रतियोगि यत्तत्तत्साध्याभाववद्वृत्तितात्वम्, तदाश्रयनिष्ठात्यन्ताभावाप्रतियोगिनी प्रतियोगिता यस्य स्वस्य तस्य भावस्तत्त्वमित्यर्थः। यथा वह्निमान् धूमादित्यत्र निर्वह्निवृत्तित्वसामान्याभावो लक्षणघटकः, स्वं तादृशवृत्तित्वाभावीयप्रतियोगित्वम्, तदाश्रये तादृशवृत्तित्वे वर्तमानो घटाद्यभावस्तस्याप्रतियोगि तादृशवृत्तितात्वम्, तदाश्रये तादृशवृत्तित्वे वर्तमानो घटाद्यभावीयप्रतियोगित्वाभाव एव, न तु तादृशवृत्तित्वाभावीयप्रतियोगित्वाभावः, इति तादृशवृत्तित्वाभावीयप्रतियोगिताया अप्रतियोगित्वात्। साध्याभावपदेन वह्नित्वेन घटाभावग्रहणे तु तादृशसाध्याभाववद्वृत्तित्वस्य घटत्वेनाभाव एव यावदन्तर्गत इति तत्त्वम्।

## ❀ जागदीशी ❀

तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगितेत्यस्य फलमाह—यश्चेत्यादिना। घटत्वादेः साध्यव्यापकतावच्छेदकत्वाभावात् तदवच्छि-

न्नस्य लक्षणाघटकत्वादाह—इन्धनत्वादीति । इन्धनत्वावच्छिन्नसामान्याभावस्य महानसादावसत्त्वात्तमादाय क्षतिविरहादाह—वह्न्यभावेति । तादृशवृत्तितात्वव्यापकप्रतियोगितेत्यस्यानुक्तौ असम्भव एव स्यात्, न तु वह्निमान् धूमादित्यादावव्याप्तिमात्रम्, प्रमेयमात्रस्य हेतुतास्थलेपि तत्तत्प्रमेयनिष्ठवृत्तित्वाभावस्य प्रमेयान्तरवृत्तेस्तत्तत्प्रमेये विरहादित्यावेदयितुं सर्वसाधनसाधारण्येनाह—स्वनिष्ठेति । स्वनिष्ठं यत् साध्याभाववद्वृत्तित्वं तत्सामान्याभावस्येत्यर्थः ।

## ❀ दीपिका ❀

अथैवमपि स्वव्यापकतत्तत्साध्याभाववद्वृत्तितात्वकत्वमेव निवेश्यताम्, प्रतियोगितायां तत्तत्साध्याभाववद्वृत्तितात्वव्यापकत्वनिवेशो व्यर्थ इत्यतो दीधितावाह—**यद्यपीन्धनत्वेति** । तथा च तदनिवेशे वह्निमान् धूमादित्यादावव्याप्तिः, इन्धनत्वेन वह्न्यभावस्याधिकरणं महानसादि, तन्निरूपितवृत्तित्वसामान्याभावस्यापि स्व( प्रतियोगिता )व्यापकतत्तत्साध्याभाववद्वृत्तितात्वकत्वेन संयोगेन वृत्तिमति पर्वतीयधूमे वर्तमानत्वेन च यावदन्तर्गतस्य महानसीयधूमेसत्त्वात् । तन्निवेशे तु इन्धनत्वावच्छिन्नवह्न्यभाववद्वृत्तितात्वस्य मीनादिवृत्तितायामपि सत्त्वेन तत्र च तादृशवृत्तित्वसामान्याभावीयप्रतियोगिताया विरहेण न निरुक्तवृत्तित्वसामान्याभावस्तादृशवृत्तितात्वव्यापकप्रतियोगिताक इति न दोष इति भावः । ननु घटत्वेन वह्न्यभावमादायापि दोषसम्भवे इन्धनत्वावच्छिन्नेत्यप्रसिद्धस्योपादानं विफलमित्यत आह—**घटत्वादेरिति । तदवच्छिन्नेति** । घटत्वावच्छिन्नेत्यर्थः । साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावस्यैव साध्याभावपदार्थतया घटत्वस्य वह्निव्यापकतावच्छेदकत्वाभावेन न घटत्वेन वह्न्यभावस्य साध्याभावत्वमिति भावः । दीधितौ **महानसवृत्तित्वादेरिति** । महानसवृत्तित्वत्वादिनेत्यर्थः । तादृशाधिकरणीभूतमहानसवृत्तित्वत्वावच्छिन्नस्येति वा षष्ठ्यन्तार्थः । न च गुरुधर्मस्य प्रतियोगितावच्छेदकत्वेपि इन्धनत्वावच्छिन्नवह्न्यभावाविशेषितमहानसवृत्तित्वत्वावच्छिन्नाभावमादायैव दोषप्रसक्तेस्तद्विशेषितमहानसवृत्तित्वत्वावच्छिन्नाभावपर्यन्तानुसरणे सन्दर्भविरोध इति वाच्यम्, अधिकरणत्वान्तस्योपलक्षणतया शेषांशस्य विशेषणतया प्रवेशेनानुपपत्त्यभावादिति ।

स्वनिष्ठेत्यादिदीधितिग्रन्थावतरणिकामाह—**तादृशवृत्तितात्वेति** । ननु इदं वाच्यं प्रमेयादित्यत्र लक्षणसमन्वयात् कथमसम्भव इत्यत आह—**प्रमेयमात्र-**

**स्येति**। वृत्तित्वाभावस्येत्यस्य व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वसामान्याभावस्येत्यर्थः। ननु तद्रूपे साध्ये स्वीयसमवायसम्बन्धेन तद्रसहेतौ साधनस्यैव हेतुतावच्छेदकसम्बन्धेन वृत्तिमत्तया तन्निष्ठयावदभावस्यैव हेतौ सत्त्वात्तत्राव्याप्तिविरहेणासम्भवकथनमनुचितमिति चेदत्र केचित्—वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वाभावाः तद्वत्त्वावच्छिन्नाधिकरणतासामान्यकधर्मवत्त्वं व्याप्तिरिति निष्कृष्टलक्षणाभिप्रायेणासम्भवो दर्शितः। व्यधिकरणधर्मावच्छिन्नाभाववद्धेतुमद्वृत्तित्वाभावस्यापि दैशिकविशेषणतया वृत्तिमद्वृत्तित्वेन लक्षणघटकत्वादिति प्राहुः।

दीधितौ—**स्वनिष्ठेति**। धूमादिनिष्ठसाध्याभाववद्वृत्तित्वव्यक्तेस्तद्व्यक्तित्वावच्छिन्नस्येत्यर्थः। हेत्वन्तरवृत्तेः = आलोकादिवृत्तेः। एतेन वृत्तिमद्वृत्तित्वमस्तीति सूचितम्। स्वस्मिन् = धूमादौ।

## ❀ जागदीशी ❀

अत्र घटत्वादौ साध्ये स्वीयविशेषणतया घटान्यत्वादिहेतावतिव्याप्तिः, साधनस्यैव हेतुतावच्छेदकसम्बन्धेन वृत्तिमत्तया तन्निष्ठस्य यावदभावस्यैव हेतौ सत्त्वात्। न चैतस्य विरुद्धत्वात् साध्यसमानाधिकरणत्वेन हेतुविशेषणादेव नातिव्याप्तिरिति वाच्यम्, तथापि द्रव्यत्वादौ साध्ये स्वीयसमवायादिना सत्तादिहेतावतिव्याप्तिः, तादृशसम्बन्धेन हेतोरेव वृत्तिमत्तया तन्निष्ठयावदभावस्य साध्यसामानाधिकरण्यस्य च सत्त्वात्। एवं महाकालान्यो घटादित्यत्र कालिकसम्बन्धेन हेतावतिव्याप्तिः, हेतुताघटककालिकसम्बन्धेन महाकालवृत्तेः तेन सम्बन्धेन तदवृत्तित्वासम्भवात् सामानाधिकरण्यस्य व्याप्यवृत्तित्वात्, अन्यथा घटादिहेतावपि खण्डकालावच्छेदेन महाकालवृत्तित्वाभावसत्त्वादुक्तातिव्याप्तितादवस्थ्यात्। एवं द्रव्यत्वादेः साध्यतायामवृत्तिगगनादिहेतावतिव्याप्तिः, विशिष्टसत्तायामव्याप्तिश्च, द्रव्यान्यस्मिन् गुणादौ विशिष्टसत्ताया वृत्तिमत्त्वादिति वदन्ति।

## ❀ दीपिका ❀

कूटाघटितलक्षणस्य दुष्टत्वप्रदर्शनाय दोषस्थलानि प्रदर्शयन्ति—**अत्रेति**। एतस्मिन् लक्षणे इत्यर्थः। स्वीयविशेषणतया = घटान्यत्वप्रतियोगिकस्वरूपसम्बन्धेन। साधनस्य = घटान्यत्वादेः। **हेतुतावच्छेदकेति**। घटान्यत्वप्रतियोगिकस्वरूपेणेत्यर्थः। तन्निष्ठस्य=घटान्यत्वादिनिष्ठस्य। तथा च अयं घटः घटान्यत्वा-

दित्यादौ हेतुतावच्छेदकीभूतघटान्यत्वादिप्रतियोगिकस्वरूपसम्बन्धेन वृत्तिमति हेतौ वर्तमानस्य व्यधिकरणधर्मावच्छिन्नस्य घटत्वसामान्याभाववद्वृत्तित्वाभावस्यैव लक्षण-घटकस्य घटान्यत्वादिहेतौ सत्त्वादतिव्याप्तिरिति भावः। अतिव्याप्तिमुद्धर्तुं शङ्कते— **न चेति**। एतस्य = घटान्यत्वहेतोः। विरुद्धत्वात्=साध्यव्यापकीभूताभावप्रतियोगि-त्वात्। साध्यासामानाधिकरण्यादिति यावत्। तथा च वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वाभावास्तद्वत्त्वे सति साध्यसामानाधिकरण्यस्यैव व्याप्तिरूपत्वेन घटान्यत्वहेतौ घटत्वसामानाधिकरण्यविरहेण नातिव्याप्तिरिति भावः। **तथापीति**। घटो घटान्यत्वादित्यादावतिव्याप्तिविरहेपीत्यर्थः। **स्वीयेति**। सत्ताप्रतियोगिके-त्यर्थः। तथा च द्रव्यं सत्त्वादित्यत्र सत्ताप्रतियोगिकसमवायेन हेतावतिव्याप्तिः, हेतुतावच्छेदकीभूतसत्ताप्रतियोगिकसमवायसम्बन्धेन वृत्तिमति हेतौ वर्तमानस्य व्यधि-करणधर्मावच्छिन्नप्रतियोगिताकस्य द्रव्यत्वसामान्याभाववद्वृत्तित्वाभावस्य साध्य-सामानाधिकरण्यस्य च हेतौ सत्त्वादिति भावः। स्थलान्तरेतिव्याप्तिमाह—**एवं महाकालान्येति**। तेन सम्बन्धेन = कालिकसम्बन्धेन। **तद्वृत्तित्वेति**। महाकालनिरूपितवृत्तित्वाभावेत्यर्थः। एतेन साध्यसामान्याभाववद्वृत्तित्वसामान्या-भावस्य वृत्तिमद्वृत्तित्वाभावः सूचितः। तथा च महाकालान्यो घटादित्यत्र महा-कालान्यत्वसामान्याभाववन्महाकालनिरूपितवृत्तित्वाभावस्य व्यधिकरणधर्मावच्छि-न्नप्रतियोगिताकस्यैव वृत्तिमद्वृत्तितया तादृशस्य चाभावस्य हेतौ सत्त्वादतिव्याप्तिरिति भावः। ननु खण्डकालावच्छेदेन साध्याभाववन्निरूपितवृत्तित्वसामान्याभावः प्रसिद्धये-दित्यत आह—**सामाधिकरण्यस्येति**। तदधिकरणनिरूपितवृत्तित्वस्येत्यर्थः। व्याप्यवृत्तित्वात् = निरवच्छिन्नवृत्तिकत्वात्। अन्यथा = सामानाधिकरण्यस्याव्याप्य-वृत्तित्वे। महाकालवृत्तित्वाभावस्य=महाकालान्यत्वसामान्याभाववद्वृत्तित्वसामान्या-भावस्य। **उक्तेति**। महाकालान्यो घटादित्यत्रेत्यर्थः।

**एवं द्रव्यत्वादेरिति**। तथा च द्रव्यं गगनादित्यादौ द्रव्यत्वसामान्याभाव-वद्वृत्तित्वाभाववत्त्वस्य अवृत्तिगगनहेतौ सत्त्वादतिव्याप्तिरिति भावः। वस्तुतो नेदं युक्तम्, विरुद्धहेतावतिव्याप्तिवारणाय हेतौ साध्यसामानाधिकरण्यस्योक्ततया तत एव अवृत्तिगगनादावप्यतिप्रसङ्गवारणसम्भवात्। अत्र लक्षणे न केवलमतिव्याप्ति-रेव, किन्तु अव्याप्तिरपीत्याह—**विशिष्टसत्तायामिति**। तथा च द्रव्यं विशिष्ट-सत्त्वादित्यत्र द्रव्यत्वाभाववद्गुणादिनिरूपितवृत्तित्वस्य सत्तायां सत्त्वे 'विशिष्टः शुद्धान्नातिरिच्यते' इति न्यायेन विशिष्टसत्तायामपि वर्तमानत्वादव्याप्तिरिति भावः।

## ❀ जागदीशी ❀

यदि च वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वाभावास्तद्वत्त्वावच्छिन्नाधिकरणतासामान्यकधर्मवत्त्वं व्याप्तिरिति वक्ष्यते, तदा नैतेषामेकोपि दोषः पदमादधाति। वृत्तिमद्वृत्तय इत्यादौ सर्वत्र दैशिकविशेषणतासम्बन्धेनैव वृत्तेर्निवेशनीयत्वात्, अन्यथा अधिकरणत्वमात्रस्यैव संयोगादिसम्बन्धेनावर्तमानत्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तेरपि प्रसङ्गादिति ध्येयम्।

## ❀ दीपिका ❀

निरुक्तदोषानुद्धरति जगदीशः—**यदि चेति। तद्वत्त्वावच्छिन्नेत्यादि।** तद्वत्त्वावच्छिन्नाधिकरणतासामान्यं यस्य स्वस्य तद्धर्मवत्त्वमित्यर्थः। तत्पदेन तादृशवृत्तित्वाभावो ग्राह्यः। स्वपदेन हेतुतावच्छेदको धर्मो धर्तव्यः। धूमत्वावच्छिन्नाधिकरणतायां निर्वह्निवृत्तित्वसामान्याभावसत्त्वाद् वह्निमान् धूमादित्यादौ लक्षणसमन्वयः। एवञ्च घटत्वाधिकरणतायां प्रसिद्धस्य घटत्वाभाववद्वृत्तित्वसामान्याभावस्य घटान्यत्वहेतावसत्त्वेन न घटो घटान्यत्वादित्यादावतिव्याप्तिः। गगनादिहेतौ गगनत्वावच्छिन्नाधिकरणताया अप्रसिद्धयैव नातिव्याप्तिः। द्रव्यं विशिष्टसत्त्वादित्यत्र विशिष्टसत्तात्वावच्छिन्नाधिकरणतायां द्रव्यमात्रनिष्ठायां द्रव्यत्वाभाववद्गुणादिवृत्तित्वाभावस्य सत्त्वान्नाव्याप्तिरिति भावः। अथैवमपि धूमवान् वह्नेरित्यादावतिव्याप्तिः, धूमसामान्याभावाधिकरणेऽयोगोलके स्वरूपेणैव वृत्तित्वाद्धेतुतावच्छेदकीभूतसंयोगेनावृत्तित्वादित्यत आह—**वृत्तिमद्वृत्तय इति।** सर्वत्र=वृत्तिमद्वृत्तय इत्यत्र साध्याभाववद्वृत्तित्वाभावा इत्यत्र च। अन्यथा=स्वरूपेण वृत्तित्वाविवक्षणे। तथा च धूमाभावाधिकरणेऽयोगोलके वह्न्यधिकरणतायाः स्वरूपेण सत्त्वान्नातिव्याप्तिरिति भावः। अत्रापि आलोकावृत्तिवृत्तित्वाभावं महानसनिरूपितवृत्तित्वाभावञ्चादाय प्रागुक्तरीत्या दोषसम्भवेन साध्याभाववद्वृत्तित्वाभावोपि स्वव्यापकतत्तत्साध्याभाववद्वृत्तितात्वव्यापकप्रतियोगिताको ग्राह्य इति ध्येयम्।

इति यतीन्द्रस्वामिश्रीरामप्रपन्नाचार्यविरचितायां दीपिकायां कूटाघटितसार्वभौमलक्षणव्याख्यानं समाप्तम्।

—०:०:०—

## ❀ दीधितिः ❀

**अन्ये तु वृत्तिमद्वृत्तयो यावन्तः साध्याभावसमुदायाधिकरणवृत्तित्वाभावास्तद्वत्त्वम् ।**

## ❀ जागदीशी ❀

कूटपदप्रवेशे सार्वभौमीयं लक्षणं परिष्कुर्वन्नाह—अन्ये त्वित्यादि । अत्र साध्याभावकूटाधिकरणवृत्तित्वस्य घटत्वादिनाभावमादाय व्यभिचारिणि अतिव्याप्तिरतो यावन्त इत्युक्तम् । तथा च तादृशवृत्तित्वसामान्याभावस्यैव तत्र हेतावसत्त्वान्नातिप्रसङ्गः । न च तादृशवृत्तित्वत्वावच्छिन्नाभाववत्त्वोक्त्यापि तादृशाभावव्युदासः सम्भवतीति वाच्यम्, तथापि तादृशवृत्तित्वत्वेन घटादेरभावमादायातिव्याप्तितादवस्थ्यात्, इदं वाच्यं ज्ञेयत्वादित्यादौ तादृशवृत्तित्वत्वस्य गुरुतया तदवच्छिन्नाभावाप्रसिद्धेश्च ।

## ❀ दीपिका ❀

ननु साध्याभाववद्वृत्तित्वाभावो व्याप्तिरिति व्याप्तिलक्षणे महानसीयवह्न्यभावमादाय वह्निमान् धूमादित्यादावव्याप्तिः । न चाभावे साध्यतावच्छेदकमात्रावच्छिन्नप्रतियोगिताकत्वविवक्षणान्न दोष इति वाच्यम्, केवलान्वयिनि गुरुधर्मावच्छिन्नसाध्यके चाव्याप्तेरिति चेत्तत्राह दीधितौ—**अन्ये त्विति** । आहुरिति परेणान्वयः । तथा च साध्याभावकूटान्तर्गतवह्निसामान्याभावाधिकरणनिरूपितवृत्तित्वाभावस्य धूमहेतौ सत्त्वाल्लक्षणसमन्वयः ।

**यावन्त इत्युक्तमिति** । तथा च यावत्पदानुपादाने धूमवान् वह्नेरित्यादौ धूमसामान्याभावाधिकरणवृत्तित्वस्य घटत्वादिनाभावमादायातिव्याप्तिः । यावत्पदोपादाने तु निर्धूमवृत्तित्वसामान्याभावस्य यावदन्तर्गतस्य वह्नावसत्त्वान्नातिव्याप्तिः । ननु तादृशवृत्तितात्वावच्छिन्नप्रतियोगिताकाभावनिवेशेनैव निर्धूमवृत्तित्वाभावस्य घटत्वावच्छिन्नप्रतियोगिताकस्य वारणसम्भवे यावत्त्वनिवेशो व्यर्थ इति शङ्कते-**न चेति** । तादृशेत्यस्य धूमसामान्याभाववदित्यर्थः । **तादृशाभावेति** । घटत्वावच्छिन्नप्रतियोगिताकनिर्धूमवृत्तित्वाभावेत्यर्थः ।

अतिव्याप्तिं द्रढयति—**तथापीति** । तादृशवृत्तितात्वावच्छिन्नप्रतियोगिताकत्वनिवेशेपीत्यर्थः । तथा च निर्धूमवृत्तितात्वेन घटाभावस्य तादृशवृत्तितात्वावच्छिन्नप्रतियोगिताकस्य वह्नौ हेतौ सत्त्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिस्तदवस्थैवेति भावः । तादृशनिवेशेऽव्याप्तिश्चेत्याह—**इदं वाच्यमिति** । **तदवच्छिन्नेति** ।

तादृशवृत्तित्वत्वावच्छिन्नेत्यर्थः। तथा च गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेन वाच्यत्वाभाववद्वृत्तितात्वावच्छिन्नाभावस्याप्रसिद्धया वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः, तादृशवृत्तित्वाभावीयप्रतियोगितावच्छेदकत्वस्य लाघवाद् वृत्तितात्वमात्रे एवाभ्युपगमादिति भावः।

ननु साध्याभावकूटाधिकरणनिरूपितवृत्तितात्वावच्छिन्नाभावनिवेशे साध्याभावकूटाधिकरण-ह्रद-निरूपितवृत्तितात्वावच्छिन्नप्रतियोगिताकाभावमादाय धूमवान् वह्नेरित्यादावतिव्याप्तिवारणाय इतरवारकपर्य्याप्तिनिवेशस्यावश्यकत्वेपि न्यूनवारकपर्य्याप्तिनिवेशे प्रयोजनविरहेण 'तादृशवृत्तितात्वस्य' इत्यादिग्रन्थेनाप्रसिद्धिकथनमसङ्गतम्, वृत्तितात्वेन घटाभावमादाय लक्षणसमन्वयादिति चेन्न, तद्व्यक्तेः स्वरूपतो भानाङ्गीकर्तृमते साध्याभावकूटाधिकरण(तद्व्यक्ति)निरूपितवृत्तित्वाभावमादायातिव्याप्तिवारणाय न्यूनवारकपर्य्याप्तिनिवेशस्यावश्यकत्वेन तद्ग्रन्थसङ्गतेः। अन्ये तु साध्याभावकूटाधिकरणनिरूपितवृत्तित्वमित्याकारकधीविशेषविषयतात्मकसमुदायत्वावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोग्यवच्छेदकताकप्रतियोगिताकाभाव एव निवेश्यः, इतरवारकपर्य्याप्तिनिवेशस्य कर्तुमशक्यत्वात्, साध्याभावकूटाधिकरण—ह्रद—निरूपितवृत्तित्वाभावश्च न तादृशः। (एवञ्च) तादृशनिवेशाभिप्रायेणैव तद्ग्रन्थसङ्गतिरित्याहुः।

## ❀ जागदीशी ❀

अतएव तादृशवृत्तित्वसामान्याभाववत्त्वमपि न विवक्षितम्, केवलान्वयिनि अव्याप्तेः, वाच्यत्वाभावकूटाधिकरणवृत्तित्वसामान्याभावस्य ज्ञेयत्वहेतावभावादिति भावः। इत्थमपि वाच्यत्वाभावकूटाधिकरणवृत्तित्वसामान्याभावस्य यावदन्तर्गतस्य ज्ञेयत्वादिहेतावसत्त्वाद् वाच्यं ज्ञेयत्वादित्यदावव्याप्तिरतो वृत्तिमद्वृत्तय इत्युक्तम्। तथा च तस्य वृत्तिमदवृत्तित्वान्न यावदन्तर्गतत्वम्, किन्तु घटत्वादिना तादृशवृत्तित्वाभावस्यैव, स च ज्ञेयत्वहेतौ वर्तत एवेति नाव्याप्तिः। अत्र वृत्तित्वादिकं पूर्वोक्तलक्षणदिशावसेयम्। तेन न प्रागुक्तदोषः।

## ❀ दीपिका ❀

ननु गुरुधर्मावच्छिन्नप्रतियोगिताकाभावस्वीकारे केवलान्वयिनि नाव्याप्तिरित्यत आह—**अतएवेति**। वक्ष्यमाणाव्याप्तिभयादेवेत्यर्थः। **वाच्यत्वाभावेति**। घटत्वादिना वाच्यत्वाभावेत्यर्थः।

अत्र वृत्तिमद्वृत्तिपदस्यानुपादाने वाच्यं ज्ञेयत्वादित्यादौ घटत्वादिना वाच्यत्वाभावाधिकरण-पटादि-निरूपितवृत्तित्वसामान्याभावस्य यावदन्तर्गतस्य ज्ञेयत्वहेतावसत्त्वेनाव्याप्तिरिति तदुपादानमित्याह—**इत्थमपीति**। यावत्पदनिवेशेनातिव्याप्त्यादिवारणेपीत्यर्थः। तस्य = घटत्वादिना वाच्यत्वाभावकूटाधिकरणवृत्तित्वाभावस्य वृत्तिमदवृत्तित्वात् = वृत्तिमद्वृत्तित्वाभावात्। **तादृशेति**। घटत्वादिना वाच्यत्वाभाववदित्यर्थः। पूर्वोक्तेत्यस्य कूटाघटितेत्यर्थः। तथा च हेतुतावच्छेदकसम्बन्धेन वृत्तिमति स्वरूपसम्बन्धेन वर्तमानत्वं विवक्षितमिति भावः। तेन = पूर्वोक्तलक्षणदिशा वृत्तिमत्त्वादिग्रहणेन। **न प्रागुक्तदोष इति**। कूटाघटितलक्षणोक्तः वह्निमान् धूमादित्यादौ वह्न्यभावकूटाधिकरणसमवेतत्वाद्यभावमादाय न दोष इति भावः।

## ❁ जागदीशी ❁

**ननु प्रलयभिन्नं गोत्वादित्यादौ कालिकसम्बन्धेन हेतावतिव्याप्तिः, महाकालस्यापि कालिकसम्बन्धेन प्रलयान्यत्वाभावकूटवत्त्वेन तत्र या हेतुताघटककालिकसम्बन्धेन वृत्तिः, तस्याः व्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वात्।**

## ❁ दीपिका ❁

अथ प्रलयभिन्नं गोत्वादित्यादौ प्रलयान्तर्भावेण व्यभिचारिणि अतिव्याप्तिः, तथाहि—साध्याभाववति वृत्तित्वमवश्यं हेतुतावच्छेदकसम्बन्धेनैव ग्राह्यम्, एवञ्च प्रलयभेदाभावाधिकरणे महाकाले हेतुतावच्छेकीभूतकालिकसम्बन्धेन जगतो वर्तमानत्वेन महाकालनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तित्वसामान्याभावस्य कालिकेन वृत्तिमति अवर्तमानत्वेन यावदनन्तर्गततया घटत्वादिव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य प्रलयभेदाभावकूटाधिकरणनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तित्वाभावस्यैव यावदन्तर्गतस्य गोत्वहेतौ सत्त्वादिति शङ्कते—**नन्विति**। अथात्र द्रव्यं महाकालत्वादित्यादौ आत्मत्वाधिकरणत्वरूपवृत्तिमद्वृत्तेः कालिकसम्बन्धेन साध्याभावकूटाधिकरणवृत्तित्वाभावकूटस्य महाकालत्वहेतावसत्त्वेनाव्याप्तिसम्भवेतिव्याप्त्यभिधानमसङ्गतम्, अनुपपत्तिसम्भवे आपत्तेरन्याय्यत्वादिति चेन्न, यत्किंचित्सम्बन्धेन तादृशकूटाधिकरणत्वप्रवेशेव्याप्तेरभावात्।

नन्वेवमपि धूमवान् वह्नेरित्यादावतिव्याप्तिसम्भवे स्थलान्तरानुधावनं व्यर्थम्, तथाहि—धूमाभावकूटाधिकरणं महाकालः, तन्निरूपितवृत्तित्वाभावो व्यधिकरणधर्मावच्छिन्नप्रतियोगिताक एव वृत्तिमद्वृत्तिः, तस्य हेतौ सत्त्वादिति चेन्न, संयोगसम्ब-

न्धावच्छिन्नवृत्तितायाः संयोगस्वरूपत्वेन स्वरूपसम्बन्धेन साध्याभावकूटाधिकरणत्व-निवेशेऽप्यतिव्याप्तेरनिरासात्, निरवच्छिन्नस्वरूपसम्बन्धेन वृत्तित्वाभाववत्त्वविवक्षणे तत्र नातिव्याप्तिरिति विशेषविवक्षणेनैव तत्र व्यावृत्तिः, अत्र तूभयथापीति तत्स्थलस्य त्यागात्। केचित्तु संयोगत्वस्य जातित्वेपि न संयोगत्वेन संसर्गता, अपि तु वृत्तिनियामकसंयोगत्वेन वृत्त्यनियामकसंयोगत्वेन चेति। तथा च वृत्त्यनियामकसंयोगेन वह्हेर्हेतुतायां धूमस्य साध्यत्वे सद्धेतुरेव, तेन सम्बन्धेनायोगोलके वह्नेरसत्त्वात्। वृत्तिनियामकसंयोगेन हेतुत्वे तु महाकालनिरूपिततादृशवृत्तित्वस्याप्रसिद्धेः, घटादीनां संयोगस्य महाकाले वृत्त्यनियामकत्वात्। अतः साध्याभावकूटाधिकरणमहाकालनिरूपिततादृशसम्बन्धावच्छिन्नवृत्तित्वस्याप्रसिद्धया धूमवान् वह्नेरित्यादौ नातिव्याप्तिसम्भव इत्याहुः। नन्वेवमपि सत्तावान् जातेरित्यादौ साध्याभावकूटाधिकरणसामान्यादि-निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वस्याप्रसिद्धया हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयत्वीयस्वरूपसम्बन्धेन साध्याभावकूटाधिकरणनिरूपितवृत्तित्वाभावस्य प्रवेश्यतया धूमवान् वह्नेरित्यादावतिव्याप्तिसम्भव इति चेन्न, हेतुसामानाधिकरण्यस्याग्रे निवेशनीयतया सत्तावान् जातेरित्यादौ दोषाभावेन तादृशनिवेशस्यानावश्यकतया स्थलान्तरानुसरणस्यौचित्यात्।

## ❀ जागदीशी ❀

न च दैशिकविशेषणतया साध्याभावकूटवत्त्वं विवक्षितम्, अतस्तादृशकूटाधिकरणप्रलयवृत्तित्वसामान्याभावस्याधुनिकघटादिवृत्तेर्गोत्वादिहेतावसत्त्वान्नातिव्याप्तिरिति वाच्यम्, घटत्वाभाववान् पटत्वादित्यादौ अभावसाध्यकेऽव्याप्तिप्रसङ्गात्, साध्याभावकूटान्तर्गतस्य घटत्वरूपसाध्याभावस्य विशेषणतयाधिकरणाप्रसिद्धेः। विशेषणतया वृत्तिमतामेव साध्याभावानां प्रवेशे तु घटत्वाभाववान् द्रव्यत्वादित्यादावतिव्याप्तिः, व्यधिकरणधर्मावच्छिन्नसाध्याभावस्यैव तत्र दैशिकविशेषणतया वृत्तिमद्वृत्तित्वात्। एवं कालिकसम्बन्धावच्छिन्नप्रतियोगिताके गगनत्वाद्यभावस्याभावे साध्ये ज्ञानादिहेतावव्याप्तिः, गगनत्वाद्यभावघटितकूटस्य दैशिकविशेषणतासम्बन्धेन यदधिकरणं तद्वृत्तित्वाभावस्य शब्दादौ प्रसिद्धस्य ज्ञानादिहेतावभावादिति चेत्?

## ❀ दीपिका ❀

अथ साध्याभावकूटाधिकरणत्वं स्वरूपसम्बन्धेन विवक्ष्यते, एवञ्च स्वरूपसम्बन्धेन प्रलयभेदाभावकूटस्य प्रलयत्वात्मकस्याधिकरणं प्रलयः, तन्निरूपित-

वृत्तित्वाभावस्य कालिकेन वृत्तिमति सृष्टिकालीनघटादौ प्रसिद्धस्य गोत्वहेतावसत्त्वात् प्रलयभिन्नं गोत्वादित्यादौ नातिव्याप्तिरित्याशङ्कते—**न चेति**। **तादृशकूटेति**। प्रलयभेदाभावकूटेत्यर्थः। स्वरूपेण तादृशाधिकरणत्वविवक्षणे दोषमाह—**घटत्वाभाववानित्यादि**। ननु स्वरूपसम्बन्धेन वृत्तिमतामेव साध्याभावानां प्रवेशः, एवञ्च घटत्वाभाववान् पटत्वादित्यादौ घटत्वाभावत्वेन घटादीनामभाव एव साध्याभावकूटान्तर्गतस्तस्य स्वरूपेणाधिकरणस्य प्रसिद्धया नाव्याप्तिरित्यत आह—**विशेषणतया वृत्तिमतामेवेति**। तथा चाव्याप्तिविरहेपि घटत्वाभाववान् द्रव्यत्वादित्यादौ घटान्तर्भावेण व्यभिचारिण्यतिव्याप्तिरिति भावः। अतिव्याप्तिमेवोपपादयति—**व्यधिकरणधर्मावच्छिन्नेति**। एवञ्च घटत्वस्वरूपस्य साध्याभावस्य स्वरूपेण वृत्तिमत्त्वाभावात् घटत्वाभावत्वेन घटाभावकूटाधिकरणनिरूपितवृत्तित्वाभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव वृत्तिमद्वृत्तित्वात्तस्य च द्रव्यत्वहेतौ सत्त्वेनातिव्याप्त्या तथानिवेशस्य कर्तुमशक्यत्वादिति भावः। ननु अभावत्वप्रतीतेः प्रमात्वरक्षार्थे अभावाभावस्यातिरिक्तत्वमते स्वरूपेण साध्याभावकूटाधिकरणत्वविवक्षणेपि घटत्वाभाववान् द्रव्यत्वादित्यादौ नातिव्याप्तिरित्यत आह—**एवमिति**। आत्मनि कालिकेन गगनत्वाभावो नास्तीति प्रतीत्या कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्य गगनत्वाभावाभावस्य स्वरूपेण साध्यत्वे ज्ञानहेतौ साध्याभावकूटान्तर्गतस्य गगनत्वाभावस्य स्वरूपेणाधिकरणमात्मादि, तन्निरूपितवृत्तित्वसामान्याभावस्य समवायेन वृत्तिमति शब्दादौ वर्तमानस्य ज्ञानहेतावसत्त्वेनाव्याप्तिरिति भावः।

ननु कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्य गगनत्वाभावस्य स्वरूपेण साध्यत्वे शब्दहेतुकेप्यव्याप्तिसम्भवे द्वितीयाभावपर्यन्तानुसरणं व्यर्थम्, तथाहि—अत्र साध्याभावस्य शब्दाश्रयत्वरूपगगनत्वस्वरूपतया स्वरूपेण वृत्तिमत्तया तद्घटितकूटाधिकरणत्वस्य गगने एव सत्त्वेन तन्निरूपितवृत्तित्वसामान्याभावस्य ज्ञानादौ प्रसिद्धस्य शब्दहेतावसत्त्वादिति चेन्न, गगनत्वस्य शब्दाश्रयत्वरूपत्वमिव शब्दवत्त्वरूपत्वमपि, शब्दवत्त्वञ्च शब्द एवेति मते साध्याभावस्य शब्दरूपत्वेन शब्दस्य च स्वरूपेण वृत्तिमत्त्वाभावेन स्थलान्तरानुसरणात्।

## ❀ जागदीशी ❀

न, साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्त्वबुद्धेः संसर्गविधया प्रतिबन्धकतावच्छेदको यः सम्बन्धस्तेन वृत्तिमतः साध्याभावकूटस्य तादृशसम्बन्धेनैवाधिकरणत्वस्योक्तत्वात्।

संयोगाभाववान् प्रमेयादित्यादौ च संयोगादिरूपः साध्याभावो न तादृशसम्बन्धेन वृत्तिमान्, निरवच्छिन्नसमवायसम्बन्धेनैव संयोगादिनिश्चयस्य तदभावविरोधित्वादतो न तत्राव्याप्तिः। केवलान्वयिनि च तादृशप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताबुद्धिर्भ्रमरूपैव सुलभा, सत्यां हि घटत्वेन वाच्यत्वं नास्तीति बुद्धौ जात्वपि घटत्वेन वाच्यत्वमस्तीति ज्ञानानुदयात्, घटत्वाद्यभाववत्ताबुद्धिं प्रति च समवायादिना घटत्वादिमत्तानिश्चयस्य प्रतिबन्धकत्वादेवोक्ताव्याप्तेर्व्युदासः।

## ❀ दीपिका ❀

प्रलयभिन्नं गोत्वादित्यत्र पूर्वोक्तामतिव्याप्तिं निराकरोति—**साध्यतेत्यादिना**। एवञ्च संयोगेन वह्निमत्ताबुद्धिं प्रति स्वरूपेण वह्न्यभाववत्तानिर्णयस्य प्रतिबन्धकत्वात् प्रतिबन्धकतावच्छेदकीभूतस्वरूपेण साध्याभावकूटाधिकरणत्वं ग्राह्यम्। प्रलयभिन्नं गोत्वादित्यादौ स्वरूपेण प्रलयभेदवत्ताबुद्धेः प्रतिबन्धकतावच्छेदकीभूतस्वरूपेण, घटत्वाभाववान् पटत्वादित्यादौ स्वरूपेण घटत्वाभाववत्ताबुद्धेः प्रतिबन्धकतावच्छेदकीभूतसमवायेन साध्याभावकूटाधिकरणत्वविवक्षणेन न क्वापि दोषलेशोपीति बोध्यम्। तादृशसम्बन्धेन=निरुक्तप्रतिबन्धकतावच्छेदकसम्बन्धेन। पर्वतादौ वह्न्यभाववत्तानिश्चयेपि कालिकादिना वह्निमत्ताबुद्धिसम्भवेन सामान्यतः साध्यवत्ताग्रहविरोधित्वमप्रसिद्धमित्यत आह—**साध्यतावच्छेदकसम्बन्धेनेति**। साध्याभाववत्तानिश्चयेपि प्रमेयत्वादिना साध्यवत्ताग्रहोदयादाह—**स्वप्रतियोगितावच्छेदकविशिष्टेति**। न चोक्तदोषवारणाय साध्यतावच्छेदकविशिष्टसाध्यवत्ताग्रह एव कथं नोक्त इति वाच्यम्, केवलान्वयिनि साध्यतावच्छेदकविशिष्टसाध्यवत्ताग्रहविरोधित्वस्याप्रसिद्ध्याव्याप्तिः। अत्र स्वप्रतियोगिसाध्यवत्त्वोपादाने जगदीशोक्तज्ञानहेतावव्याप्तिः, घटत्वेन कालिकसम्बन्धावच्छिन्नगगनत्वाभावाभावप्रकारकबुद्धेः स्वरूपस्य प्रतिबन्धकतावच्छेदकसंसर्गतया तेन सम्बन्धेन साध्याभावकूटाधिकरणे हेतोर्वर्तमानत्वात्। संयोगाभाववान् प्रमेयादित्यत्राप्यव्याप्तिर्बोध्या, समवायस्यापि संयोगरूपसाध्याभावप्रतियोगिसमवेताभावसाध्यवत्ताबुद्धेः प्रतिबन्धकतावच्छेदकसंसर्गत्वात्। स्वप्रतियोगितावच्छेदकविशिष्टमात्रप्रवेशे वाच्यं ज्ञेयत्वादित्यत्राव्याप्तिः, घटानुयोगिकस्वरूपसम्बन्धेन वाच्यत्वाभावत्वेन वाच्यत्वस्याभावस्य प्रतियोगितावच्छेदकीभूतं यत्तादृशाभावत्वं तद्विशिष्टवत्ताबुद्धेः प्रतिबन्धकतावच्छेदकीभूतघटानुयोगिकस्वरूपसम्बन्धेन तादृशकूटाधिकरणाप्रसिद्धेः।

नन्वेवं घटत्वाभाववान् पटत्वादित्यत्राव्याप्तिः दुर्वारा। तथाहि—स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताबुद्धेरित्यत्र स्वपदेन यदि साध्यसामान्याभावस्य ग्रहणम्, तदा प्रतिबन्धकतावच्छेदकः समवायसम्बन्धः, यदि व्यधिकरणधर्मावच्छिन्नाभावग्रहणम्, तदा प्रतिबन्धकतावच्छेदकः स्वरूपसम्बन्धः। एवं च तेन सम्बन्धेन सर्वेषामेव व्यधिकरणधर्मावच्छिन्नाभावानां वृत्तिमत्त्वम्, तथा च तादृशसम्बन्धेन कदाचित् स्वरूपं कदाचित् समवायं चादाय सर्वेषां वृत्तिमत्त्वेन साध्यसामान्याभावघटितव्यधिकरणधर्मावच्छिन्नाभावकूटाधिकरणत्वं न निरुक्तान्तःपातिना केनापि सम्बन्धेनापि प्रसिद्धमिति चेन्न, स्ववृत्तित्व-साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताबुद्धिप्रतिबन्धकतावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन साध्याभावविशिष्टा या निरूपकता, तन्निरूपिताधिकरणतावत्कूटवत्त्वस्यैव विवक्षणादिति। ननु संयोगाभाववान् प्रमेयादित्यत्र संयोगात्मकसाध्याभावकूटाधिकरणद्रव्यनिरूपितवृत्तित्वसामान्याभावस्य गुणत्वादौ वर्तमानस्य प्रमेयहेतावसत्त्वादव्याप्तिरित्यत आह—**संयोगाभाववानिति**। तादृशसम्बन्धेन=साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताग्रहप्रतिबन्धकतावच्छेदकसम्बन्धेन। **तद्भावेति**। संयोगाभावेत्यर्थः। एवं च तादृशप्रतिबन्धकतावच्छेदकीभूतनिरवच्छिन्नसमवायसम्बन्धेन संयोगात्मकसाध्याभावकूटस्य वृत्तिमत्त्वाभावेन साध्याभावपदेन ग्रहीतुमशक्यतया व्यधिकरणधर्मावच्छिन्नसाध्याभावमादाय लक्षणसमन्वय इति भावः।

अथ वाच्यं ज्ञेयत्वादित्यत्र व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्ताज्ञानस्य व्यधिकरणधर्मविशिष्टसाध्यवत्ताबुद्धेः प्रतिबन्धकत्वे मानाभावेन निरुक्तप्रतिबन्धकतावच्छेदकसंसर्गाप्रसिद्ध्याव्याप्तिरित्यत आह—**केवलान्वयिनि चेति**। तथा च निरुक्तानुभवबलान्निरुक्तप्रतिबन्ध्यप्रतिबन्धकभावस्यावश्यकतया नाव्याप्तिरिति भावः।

❀ दीधितिः ❀

**तादृशवृत्तित्वाभावः स्वव्यापकतादृशवृत्तित्वत्वव्यापकप्रतियोगिताको बोध्यः। प्रयोजनं चोक्तप्रायम्।**

❀ जागदीशी ❀

तादृशवृत्तित्वत्वव्यापकप्रतियोगिताकत्वे प्रवेशिते एव समुदायपदं सार्थकं भवति, अतः प्रागेव वृत्तित्वाभावं व्याचष्टे—तादृशेति। स्वेति। स्वं प्रतियोगिता तद्व्यापकं यत्साध्याभावसमुदायाधिकरणवृत्तित्वत्वं तद्व्या-

पकप्रतियोगिताका इत्यर्थः । प्रयोजनं चेति । वह्निमान् धूमादित्यत्रालोकावृत्तिसामान्याभावस्य साध्याभावकूटाधिकरणवृत्तित्वव्यापकप्रतियोगिताकस्य यावदन्तर्गतस्य हेतावसत्त्वादव्याप्तिरतः स्वव्यापकेति । तथा चालोकावृत्तित्वावच्छिन्नाभावप्रतियोगित्वस्य व्यापकं न निर्वह्निवृत्तित्वत्वम्, धूमत्वादौ व्यभिचारादित्ययमभावो न लक्षणघटक इति नाव्याप्तिः । प्रतियोगितायां तादृशवृत्तित्वत्वव्यापकत्वानुक्तौ वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः, स्वप्रतियोगिताव्यापकसाध्याभावकूटवद्वृत्तित्वत्वकस्य घटवृत्तित्वसामान्याभावस्य यावदन्तर्गतस्य हेतावसत्त्वात् । तदुपादाने च तादृशाभावप्रतियोगित्वं न वाच्यत्वाभाववद्वृत्तित्वत्वव्यापकं पटवृत्तित्वे व्यभिचारादित्येतस्य लक्षणाघटकत्वान्नाव्याप्तिरिति भावः ।

❀ दीपिका ❀

अथ प्रथमोक्तस्य कूटपदस्य प्रयोजनमनुक्त्वा पश्चादुक्तस्य वृत्तित्वाभावस्य व्याख्यानं सन्दर्भविरुद्धमित्यत आह—**तादृशवृत्तित्वेति** । तथा च वृत्तित्वाभावस्य दीधितिकारोक्तव्याख्याया अभावे धूमाभाववन्निरूपितवृत्तित्वसामान्याभावस्य वह्निहेतावसत्त्वेन धूमवान् वह्नेरित्यादावतिव्याप्तिविरहेण तन्निरासाय समुदायपदप्रवेशो व्यर्थः स्यात् । स्वव्यापकतादृशवृत्तितात्वव्यापकप्रतियोगिताकत्वनिवेशे तु समुदायाप्रवेशे यथा दोषस्तथा दीधितिकृतैव वक्ष्यत इति भावः । एवं च साध्याभावसमुदायाधिकरणनिरूपितवृत्तितात्वव्यापिका अथ च तादृशवृत्तितात्वव्याप्या च या प्रतियोगिता तादृशप्रतियोगिताकाभावा यावन्तो वृत्तिमद्वृत्तयस्तद्वत्त्वं व्याप्तिरिति फलितम् । अत्र स्वव्यापक( प्रतियोगितायां तादृशवृत्तितात्वव्याप्य )त्वानिवेशे साध्याभावसमुदायाधिकरणवृत्तितात्वव्यापकत्वमात्रोक्तौ आलोकावृत्तिसामान्याभावस्य वह्न्यभावकूटाधिकरणवृत्तितात्वाधिकरणे मीनादिवृत्तितायामालोकावृत्त्यभावीयप्रतियोगित्वाभावस्यावर्तमानत्वेन वर्तमानघटाद्यभावाप्रतियोगिप्रतियोगिताकस्य धूमहेतावसत्त्वेन वह्निमान् धूमादित्यादावव्याप्तिः । अतः स्व( प्रतियोगिता )व्यापकत्वं निवेशितमित्याह—**वह्निमानित्यादि** । स्वव्यापकत्वनिवेशे तु धूमत्वे आलोकावृत्त्यभावीयप्रतियोगितायाः सत्त्वेन वह्न्यभावकूटाधिकरणवृत्तितात्वस्यासत्त्वेन नाव्याप्तिरिति प्रघट्टकार्थः । **तादृशवृत्तितात्वेति** । साध्याभावकूटाधिकरणवृत्तितात्वेत्यर्थः । **तादृशाभावेति** । घटवृत्तित्वसामान्याभावेत्यर्थः । **वाच्यत्वाभावेति** । समवायितया वाच्यत्वाभावेत्यर्थः । पटवृत्तित्वे समवायितया वाच्यत्वाभावकूटाधिकरणवृत्तितात्वस्य सत्त्वेन तत्र

घटवृत्तित्वाभावीयप्रतियोगिताया असत्त्वेन घटवृत्तित्वाभावीयप्रतियोगितायाः समवायितया वाच्यत्वाभावकूटाधिकरणवृत्तितात्वव्यापकत्वाभाव इति ।

## ❀ जागदीशी ❀

**अत्र च प्रतियोगिता स्वन्यूनवृत्तिधर्मानवच्छिन्ना ग्राह्या। तेनेदं वाच्यं ज्ञेयत्वादित्यादौ घटवृत्तितात्वेन वृत्तित्वसामान्याभावस्य घटान्यत्वादिवृत्तेर्ज्ञेयत्वहेतावसत्त्वेपि नाव्याप्तिः। सार्वभौममते च एकविशिष्टापरत्वमेवोभयत्वम्। तेन घटवृत्तित्व-घटान्यवृत्तित्वोभयाभावमादायापि नासम्भवः, तत्प्रतियोगितायाः तादृशवृत्तित्वत्वाव्यापकत्वादिति ध्येयम्।**

## ❀ दीपिका ❀

अथ वाच्यं ज्ञेयत्वादित्यादौ घटवृत्तितात्वेन वृत्तित्वसामान्याभावस्य तादृशवृत्तितात्वसमनियतस्य घटान्यत्वे प्रसिद्धस्य यावदन्तर्गतस्य ज्ञेयत्वहेतावसत्त्वेनाव्याप्तिरित्यत आह—**अत्र चेति**। तथा च घटवृत्तित्वत्वेन वृत्तित्वसामान्याभावीयप्रतियोगितायाः स्वन्यूनवृत्तिना घटवृत्तितात्वेनावच्छिन्नत्वान्न तादृशवृत्तित्वाभावस्य लक्षणघटकत्वमिति भावः।

नन्वेवमपि घटवृत्तित्व-घटान्यवृत्तित्वोभयाभावस्यापि यावदन्तर्गतस्य ज्ञेयत्वादिहेतावसत्त्वेनासम्भव इत्यत आह—**सार्वभौममते चेति**। तेन = एकविशिष्टापरत्वस्यैवोभयत्वपदार्थत्वेन। तत्प्रतियोगितायाः = निरुक्तोभयाभावीयप्रतियोगितायाः। **तादृशवृत्तित्वेति**। साध्याभावकूटाधिकरणवृत्तित्वेत्यर्थः। तथा च समवायित्वावच्छिन्नवाच्यत्वाभावकूटाधिकरणनिरूपितवृत्तितात्वस्य घटवृत्तितायां सत्त्वेन तत्र च घटवृत्तित्वविशिष्टघटान्यवृत्तित्वाभावीयप्रतियोगिताया असत्त्वेन न व्यापकत्वमिति भावः।

ननु वह्निमान् धूमादित्यादौ धूमहेतौ घटवृत्तित्वविरहप्रयुक्तोभयाभावस्य सत्त्वेन लक्षणसमन्वयसम्भवेसम्भवाभिधानमसङ्गतम्। न च पर्वतवृत्तित्व-पर्वतान्यवृत्तित्वोभयाभावमादाय तत्राप्यसम्भव इति वाच्यम्, निरुक्तोभयाभावीयप्रतियोगिताया वह्न्यभावकूटवद्वृत्तितात्वव्यापकत्वसत्त्वेपि तादृशवृत्तितात्वव्याप्यत्वविरहात्, मीननिष्ठवृत्तितायां व्यभिचारादिति चेन्न, साध्याभावे हेतुसामानाधिकरण्यविशेषणोपादानेन लक्षणघटकस्य घटत्वावच्छिन्नवह्न्यभावकूटाधिकरणत्वस्य पर्वतेपि सत्त्वेन निरुक्तोभयाभावस्य तादृशवृत्तितात्वसमनियतस्य यावदन्तर्गतस्य धूमहेतावसत्त्वात्। एवं तद्रूपवान् तद्रसादित्यादौ रसत्वावच्छिन्नवृत्तित्व-तदनवच्छिन्नवृत्तित्वोभयाभाव-

मादायातिव्याप्तिर्बोध्या। ननूभयाभावीयप्रतियोगितायाः प्रत्येकपर्यवसितत्वेन स्वन्यूनवृत्त्युभयत्वावच्छिन्नतया निरुक्तोभयाभावस्य वारणसम्भवे सार्वभौममतविशेषाश्रयणं विफलमिति चेन्न, स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वमेव स्वन्यूनवृत्तित्वम्। स्वसामानाधिकरण्यं च निरवच्छिन्नस्वरूपेण बोध्यम्। एवं च उभयपदार्थे उभयत्वावच्छिन्नप्रतियोगिताकभेदो न निरवच्छिन्नस्वरूपेणेति न तस्योभयत्वस्य न्यूनवृत्तित्वम्, अन्यथाव्याप्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्याव्याप्यवृत्तित्वमते धूमाधिकरणवृत्तित्वं नास्तीत्यभावीयप्रतियोगितायां स्वन्यूनवृत्तिधर्मानवच्छिन्नत्वस्यासत्त्वेन व्यधिकरणधर्मावच्छिन्नतादृशवृत्तित्वाभावमादाय धूमवान् वह्नेरित्यत्रातिव्याप्तिः, संयोगसम्बन्धावच्छिन्नवृत्तितायाअव्याप्यवृत्तित्वेन तदवच्छिन्नभेदस्य केवलान्वयित्वात्।

❁ जागदीशी ❁

स्वव्यापकत्वदलस्य पूर्वलक्षणोक्तैव व्यावृत्तिः। तादृशवृत्तित्वत्वव्यापकत्वदलस्य तु प्रागिव न वह्निमान् धूमादित्यादौ व्यावृत्तिः, तादृशमहानसादेः साध्याभावकूटानधिकरणत्वात्; किन्तु केवलान्वयिस्थले एवेत्याशयेनाह—उक्तप्रायमिति। न च स्वव्यापकेत्याद्यपेक्षया लाघवात् साध्याभावकूटाधिकरणवृत्तित्वत्वावच्छिन्नाभावा एव यावन्तो निवेश्यन्ताम्, तादृशवृत्तित्वत्वेन घटादेरभावमादाय केवलान्वयिनि लक्षणसम्भवादिति वाच्यम्, वह्निमान् धूमाद् वाच्यं ज्ञेयत्वादित्यादौ सर्वत्रासम्भवापत्तेः, निर्वह्निवृत्तित्वत्वस्य वृत्तित्वत्वाद्यपेक्षया गुरुत्वेन वह्न्यभावकूटवद्वृत्तित्वघटत्वेन वाच्यत्वाभावकूटवद्वृत्तित्वत्वादेः प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नाभावस्याप्रसिद्धेरिति भावः।

❁ दीपिका ❁

ननु स्वव्यापकतादृशवृत्तितात्वव्यापकत्वदलस्य प्रयोजनं कूटाघटितलक्षणोक्तमेवेति दीधितिकृतः प्रायपदोपादानं व्यर्थमित्यत आह—**स्वव्यापकत्वदलस्येति**। तथा च उक्तप्रायमिति दीधितिग्रन्थस्य यत्किंचिदुक्तम्, यत्किंचिन्नोक्तमित्यर्थः। तथा च प्रथमदलप्रयोजनं प्रथमलक्षणोक्तमेव, द्वितीयदलप्रयोजनं पूर्वानुक्तमन्यदेवेति प्रयोजनस्योक्तप्रायत्वम्। **तादृशवृत्तित्वत्वेनेति**। साध्याभावकूटाधिकरणवृत्तितात्वेनेत्यर्थः। असम्भवे बीजमाह—**निर्वह्नित्वेति**। तथा च वह्निमान् धूमादित्यत्र वह्न्यभावकूटाधिकरणवृत्तित्वसामान्याभावीयप्रतियोगितावच्छेदकत्वस्य लाघवान्नि-

वह्निवृत्तितात्वे वाच्यं ज्ञेयत्वादौ घटत्वावच्छिन्नवाच्यत्वाभावकूटवद्वृत्तितात्वेन घटाद्यभावीयप्रतियोगितावच्छेदकत्वस्य लाघवाद् वृत्तितात्वमात्रे एवाभ्युपगमेन साध्याभावकूटाधिकरणवृत्तितात्वावच्छिन्नप्रतियोगिताकाभावस्यैवाप्रसिद्ध्यासम्भव इति ध्येयम् । तदवच्छिन्नेति । साध्याभावकूटाधिकरणवृत्तितात्वावच्छिन्नेत्यर्थः ।

## ❁ दीधितिः ❁

**साध्याभावाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकस्य च व्यधिकरणधर्मावच्छिन्नस्यैवाभावस्य वृत्तिमद्वृत्तित्वाद् व्यभिचारिण्यतिव्याप्तिरतः समुदायेति ।**

## ❁ जागदीशी ❁

ननु वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकाभावाः तद्वत्त्वमेवोच्यतां कृतं कूटनिवेशनेत्यत आह—साध्याभावेति। साध्यप्रतियोगिताकाभावेत्यर्थः । व्यधिकरणेति । साध्यप्रतियोगिताकाभाववद्वृत्तित्वसामान्याभावस्यावृत्तिमात्रवृत्तित्वादिति भावः । अत इति । तथा च धूमाभावकूटाधिकरणवृत्तित्वव्यापकप्रतियोगिताकस्य निर्धूमवृत्तित्वसामान्याभावस्यैव वह्न्यादिहेतावसत्त्वान्न व्यभिचारिण्यतिव्याप्तिः । न चैवं गगनाभाववान् वाच्यत्वादित्यत्राव्याप्तिः, गगनस्यापि साध्याभावतया तदधिकरणाप्रसिद्धेरिति याच्यम्, वृत्तिमत्त्वेनापि साध्याभावस्य विवक्षणीयत्वात्, नव्यमते गगनस्य स्वाभावविरहत्वे मानाभावाच्चेति भावः ।

## ❁ दीपिका ❁

दीधितौ-**अतिव्याप्तिरिति** । अयमाशयः—कूटपदाप्रवेशे साध्यप्रतियोगिकाभाववद्वृत्तितात्वव्यापकप्रतियोगिताकाभावस्यैव निवेशनीयत्वे धूमवान् वह्नेरित्यादावतिव्याप्तिः, घटत्वेन धूमाभावस्यापि साध्यप्रतियोगिताकाभावतया घटत्वावच्छिन्नधूमाभावाधिकरणवृत्तित्वसामान्याभावस्य वृत्तिमद्वृत्तित्वाभावेन न लक्षणघटकत्वम्, अपि तु घटत्वावच्छिन्नप्रतियोगिताकस्य तादृशवृत्तित्वाभावस्यैव, तादृशाभावस्य च वह्निहेतौ सत्त्वात् । कूटपदप्रवेशे तु कूटान्तर्गतधूमसामान्याभाववद्वृत्तित्वाभावस्य हेतावसत्त्वान्नातिव्याप्तिरिति ।

ननु साध्याभावसमुदायाधिकरणवृत्तितात्वव्याप्यत्वे सति साध्याभाववद्वृत्तितात्वव्यापिका या प्रतियोगिता, तादृशप्रतियोगिताकाभावस्याप्रसिद्ध्यैव धूमवान्

वह्निरित्यादावतिव्याप्तिवारणसम्भवे द्वितीयदले कूटपदाप्रवेशेतिव्याप्त्यभिधानमसाम्प्रतम्। न च घटत्वेन जगद्वृत्तित्वाभावस्तथा, तदीयप्रतियोगितायां सत्यन्ताभावात्। निर्धूमवृत्तित्वत्वावच्छिन्नाभावोपि न तथा, तदीयप्रतियोगितायां विशेष्यदलासत्त्वात्, किन्तु वह्निमान् धूमादित्यादौ तथाविधाभावाप्रसिद्ध्याऽव्याप्तिरेवेति चेन्न, द्वितीयदले समुदायपदाप्रवेशे प्रथमसमुदायप्रवेशो व्यर्थ एव, आलोकावृत्तिवृत्तित्वाभावीयप्रतियोगिताया व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वाव्यापकेन आलोकावृत्तिवृत्तित्वाभावस्य लक्षणाघटकतया साम्प्रतं तादृशाभावमादायाव्याप्त्यभावात्। एवं च व्यधिकरणधर्मावच्छिन्नाभावमादाय वह्निमान् धूमादित्यादौ लक्षणसमन्वयसम्भवे समुदायपदस्य फलं पूर्वोक्तदिशातिव्याप्तिवारणमेव। वस्तुतः समुदायपदस्य सकृदेव प्रवेश इति न कोपि दोषः।

कूटपदप्रवेशेप्यव्याप्तिमाशङ्कते—**न चैवमिति।** एवम् = कूटपदप्रवेशेपि। **अव्याप्तिरिति।** अथात्र 'साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताबुद्धेः संसर्गविधया प्रतिबन्धकतावच्छेदको यः सम्बन्धः तेन सम्बन्धेन वृत्तिमतः साध्याभावकूटस्य तेनैव सम्बन्धेनाधिकरणत्वस्योक्तत्वादि'ति ग्रन्थेनैव गगनस्वरूपाभावस्य लक्षणाघटकतया तमादायाव्याप्तिदानं वृत्तिमत्त्वेनापीत्याद्यग्रिमग्रन्थेनाव्याप्तिदानञ्चासङ्गतमिति चेन्न, पूर्वग्रन्थं विस्मृत्याव्याप्तिदानम्, विवक्षणीयत्वादित्यस्यानन्तरं 'साध्यतावच्छेदकसम्बन्धेनेत्यादिग्रन्थेने'ति शेषः। विवक्षणीयत्वादित्यस्य विवक्षितत्वादित्यर्थः। तेन न समाधानान्तरमित्यवसेयम्। **मानाभावाच्चेति।** अयमाशयः—अभावाभावस्य प्रथमाभावप्रतियोगिस्वरूपत्वाङ्गीकारे एव गगनाभावाभावस्य गगनस्वरूपत्वमभ्युपगम्यैव गगनाभाववान् वाच्यत्वादित्यत्राव्याप्तिः स्यात्, परन्तु गगनस्य तद्रूपत्वे न किंचिन्मानम्, घटवद्भूतले घटो नास्तीत्यप्रतीत्या घटाभावो नास्तीति प्रतीत्या च घटस्य घटाभावाभावात्मकत्वं भवति, प्रकृते तथा प्रतीतेरभावादिति गगनाभावाभावस्यातिरिक्तत्वेन तदधिकरणप्रसिद्ध्या नाव्याप्तिरिति।

## ❀ जागदीशी ❀

**अत्र साध्याभावसमुदायाधिकरणवृत्तित्वत्वव्यापकप्रतियोगितेत्यत्र समुदायपदस्य फलं ग्रन्थकृतैवोक्तम्। प्रतियोगिताव्यापकसाध्याभावसमुदायाधिकरणवृत्तित्वत्वमित्यत्र समुदायपदस्य फलन्तु नालोकावृत्तेरभावमादाय वह्निमान् धूमादित्यादावव्याप्तिवारणम्, तादृशाभावस्य स्वव्यापक-**

साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकेत्युक्तावपि वारणसम्भवाद् धूमत्वादावपि तदभावप्रतियोगितासत्त्वात्, परन्तु आलोकावृत्तिवृत्तित्व-स्याभावमादायाव्याप्तिवारणमेव तत्फलमिति प्राञ्चः ।

❀ दीपिका ❀

द्विधा समुदायपदं प्रवेश्य व्याचक्षाणानां प्राचां मतं दूषयितुमुपन्यस्यति—अत्रेति । एषामयमाशयः—साध्याभावकूटाधिकरणवृत्तितात्वव्यापिका अथ च साध्याभावकूटाधिकरणवृत्तितात्वव्याप्या या प्रतियोगिता, तादृशप्रतियोगिताकाभाव एव तादृशवृत्तित्वाभावपदेन ग्राह्यः। तत्र प्रथमकूटपदप्रयोजनं दीधितिकारोक्तं धूमवान् वह्नेरित्यादावतिव्याप्तिवारणमेव । द्वितीयकूटपदप्रयोजनं वह्निमान् धूमादित्यादौ आलोकावृत्त्यभावमादायाव्याप्तिवारणं न सम्भवति, तदीयप्रतियोगिताया धूमत्वेपि सत्त्वेन तत्र वह्निसामान्याभाववद्वृत्तितात्वस्यासत्त्वेन साध्याभाववद्वृत्तित्वत्वाव्याप्यत्वेन अलोकावृत्त्यभावस्य लक्षणाघटकत्वात्, किन्तु आलोकावृत्तिवृत्तित्वाभावमादायाव्याप्तिवारणाय तन्निवेशः, तादृशाभावीयप्रतियोगितायाः साध्याभाववद्वृत्तित्वत्वव्याप्यत्वात् । कूटपदप्रवेशे तु कूटान्तर्गतनिर्वह्निवृत्तितात्वस्य पर्वतादिनिरूपितवृत्तितायामसत्त्वेन तत्र चालोकावृत्तिवृत्तित्वाभावीयप्रतियोगितायाः सत्त्वेन न लक्षणघटकत्वमिति ।

❀ जागदीशी ❀

तत्तुच्छम्, स्वाश्रयनिष्ठात्यन्ताभावाप्रतियोगिनः साध्याभावकूटाधिकरणवृत्तित्वत्वस्याश्रये वर्तमानस्यात्यन्ताभावस्याप्रतियोगिप्रतियोगिताकाभावेनेव तादृशवृत्तित्वाभावानां निवेशात् तत्र च सकृदेव समुदायपदस्यान्तर्भावेणोभयथा तन्निवेशफलानुसन्धानस्य वायसदशनानुसन्धानसमानत्वात्, अन्यथा साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नाभावस्यापि प्रतियोगिताव्यापकसाध्याभावकूटाधिकरणवृत्तित्वत्वकत्वाभावादेव व्युदासात्तमादाय व्यभिचारिणि अतिप्रसङ्गवारणार्थं ग्रन्थकृता समुदायपदोपन्यासानौचित्यापत्तेरिति ध्येयम् ।

❀ दीपिका ❀

स्वव्यापकसाध्याभावकूटाधिकरणवृत्तितात्वव्यापकप्रतियोगिताक इत्यत्र स्वव्यापकताविशेष्यतापन्नमेव साध्याभावकूटाधिकरणवृत्तितात्वं व्यापकविशेषणतया भासते न तु स्वातन्त्र्येण । एवञ्च साध्याभावकूटाधिकरणवृत्तितात्वस्यैव द्विधानिवेशाभावेन

तद्घटककूटपदस्यापि न द्विधानिवेश इति तत्फलविचारः काकदन्तपरीक्षणमात्रमित्यभिप्रेत्याह—**तत्तुच्छमिति**। एकधानिवेशप्रकारमाह—**स्वाश्रयेत्यादि**। स्वपदेन प्रतियोगिता ग्राह्या। तादृशवृत्तित्वाभावानाम्=साध्याभावकूटाधिकरणवृत्तित्वाभावानाम्। अन्यथा=समुदायपदस्य द्विधाप्रवेशे। एवं च धूमवान् वह्नेरित्यत्र दीधितिकृता घटत्वेन निर्धूमवृत्तित्वाभावमादायातिव्याप्तिवारणं कूटपदप्रयोजनमुपात्तम्। द्विधा कूटपदनिवेशे तु घटत्वेन निर्धूमवृत्तित्वाभावस्य निर्धूमवृत्तितात्वव्यापकप्रतियोगिताकत्वेपि साध्याभावकूटाधिकरणवृत्तितात्वव्याप्यप्रतियोगिताकत्वाभावेन न लक्षणघटकत्वम्, पर्वतनिरूपितवृत्तितायां तादृशाभावीयप्रतियोगितायाः सत्त्वेन निर्धूमवृत्तितात्वस्यासत्त्वादिति समुदायपदव्यावृत्तिरसङ्गता स्यादिति ध्येयम्।

❀ दीधितिः ❀

**साध्याभावश्च साध्यतावच्छेदकसम्बन्धेन बोध्यः। तेन समवायेन वह्नेः साध्यत्वे धूमे संयोगेन च तथात्वे वह्न्यवयवत्वे पर्वतवह्न्यवयवसंयोगे च पर्वतस्य वह्न्यवयवस्य च सम्बन्धद्वयावच्छिन्नवह्न्यभावद्वयानधिकरणत्वेपि नातिव्याप्तिः।**

❀ जागदीशी ❀

धूमे इति। नातिव्याप्तिरित्यग्रेन्वयः। एवमग्रेपि। इदमापाततः। साध्यतावच्छेदकसम्बन्धावच्छिन्नाभावस्य प्रवेशेपि अतिव्याप्तेर्दुरुद्धरत्वात्, साध्याभाववत्संयुक्तत्वसामान्याभावस्य कुत्रापि संयोगेन वृत्तिमति असत्त्वात्, वह्न्यवयवमात्रसंयुक्तस्य वस्तुनोसत्त्वादिति ध्येयम्।

❀ दीपिका ❀

अथ समवायेन वह्नेः साध्यत्वे धूमे हेतावतिव्याप्तिः, साध्याभावीयप्रतियोगितायां सम्बन्धविशेषावच्छिन्नत्वाप्रवेशेन साध्याभावकूटान्तर्गतं संयोगसम्बन्धावच्छिन्नवह्न्यभाव-समवायसम्बन्धावच्छिन्नवह्न्यभावद्वयम्, एतद्द्वयाधिकरणं गगनादि, तन्निरूपितवृत्तित्वाभावस्य घटादौ प्रसिद्धस्य धूमहेतौ सत्त्वादित्यत आह-दीधितौ—**साध्याभावश्चेति**। साध्याभावः=साध्यतावच्छेदकसमनियतप्रतियोगिताकः, सम्बन्धेनेत्यत्र तृतीयार्थोवच्छिन्नत्वम्, तस्य साध्याभावपदार्थैकदेशे प्रतियोगितायामन्वयः। एवं च साध्यतावच्छेदकसम्बन्धावच्छिन्ना या साध्यतावच्छेदकसमनियतप्रतियोगिता तादृशप्रतियोगिताकाभाव इत्यर्थः। दीधितौ-तेन=साध्याभावीय-

प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशेन । समवायेन वह्नेः साध्यत्वे पर्वतस्य सम्बन्धद्वयावच्छिन्नवह्न्यभावद्वयानधिकरणत्वेपि धूमे नातिव्याप्तिः, संयोगेन वह्नेस्तथात्वे वह्न्यवयवस्य तादृशाभावद्वयानधिकरणत्वेपि वह्न्यवयवत्वे नातिव्याप्तिः, समवायेन वह्नेः साध्यत्वे संयोगेन तस्य तथात्वे च पर्वतस्य वह्न्यवयवस्य च तादृशाभावद्वयानधिकरणत्वेपि पर्वतवह्न्यवयवसंयोगे नातिव्याप्तिरिति ग्रन्थयोजना । तथात्वे=साध्यत्वे । **सम्बन्धद्वयावच्छिन्नेति ।** संयोगसम्बन्धावच्छिन्न-समवायसम्बन्धावच्छिन्नेत्यर्थः । प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे च समवायसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावाधिकरणपर्वतनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वाभावस्य संयोगेन वृत्तिमति घटादौ प्रसिद्धस्य धूमहेतावसत्त्वान्नातिव्याप्तिरिति भावः ।

ननु साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशेपि समवायेन वह्नौ साध्ये संयोगेन धूम हेतौ नातिव्याप्तिवारणम्, समवायसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावकूटाधिकरणं गगनादि, तन्निरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वस्यैव संयोगेन वृत्तिमति घटादौ सत्त्वेन तादृशवृत्तित्वसामान्याभावस्याप्रसिद्ध्या प्रसिद्धस्य व्यधिकरण-घटत्वादि-धर्मावच्छिन्नस्य तादृशवृत्तित्वाभावस्य धूमहेतौ सत्त्वादित्यत आह—**इदमापातत इति ।** आपातत्वमेव दर्शयति—**साध्यतावच्छेदकेति ।** न च घटादेर्गगनादिसंयुक्तत्वेपि गगनादिनिरूपितसंयोगस्य वृत्त्यनियामकतया गगनादिसंयुक्ते घटादौ संयोगसम्बन्धावच्छिन्नतादृशवृत्तित्वसामान्याभावस्य प्रसिद्धेरिति वाच्यम्, तादात्म्यादिवृत्त्यनियामकसम्बन्धेन हेतुतायां वाच्यं प्रमेयादित्यादौ तादात्म्यसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्ध्या अव्याप्तिभिया वृत्तित्वस्थाने सम्बन्धित्वस्यैव निवेशे नातिव्याप्तेर्जागरूकत्वादिति । वक्ष्यमाणविशेषणताविशेषसम्बन्धावच्छिन्नतादृशवृत्तित्वाभाववत्त्वावच्छिन्नाधिकरणतासामान्यकत्वविवक्षणेऽतिव्याप्त्यादिदोषवारणसम्भवादित्याशयेन ध्येयमित्युक्तम् ।

## ❁ जागदीशी ❁

ननु सम्बन्धविशेषाविवक्षायां प्रलयोत्पन्नकर्म-तद्ध्वंसनित्यरूपादिकमेव वह्न्यभावकूटाधिकरणं वाच्यम्, जन्य-विभु-मूर्तानां यथायोगं कालिक-संयोग-दिक्कृतविशेषणताभिर्वह्निमत्त्वेन द्रव्यस्य साध्याभावकूटवत्त्वविरहात्, वह्न्यसमानकालीनस्य धूमासंयोगिद्रव्यस्यासत्त्वात् । तथा च साध्याभावकूटाधिकरणे हेतुतावच्छेदकसंयोगसम्बन्धेन वृत्त्यप्रसिद्ध्यैव

धूमे नातिव्याप्तिः। समवायेन धूमस्य हेतुत्वे च विरुद्धत्वात् साध्यसामानाधिकरण्यविवक्षणादेव तद्व्युदासम्भवादत आह—संयोगेनेति। तथात्वे=वह्नेः साध्यत्वे। तथा चात्र वह्न्यभावकूटाधिकरणं यन्नित्यरूपादिकं तत्र हेतुतावच्छेदकसमवायसम्बन्धेन तद्वृत्तित्वस्य रूपत्वादौ प्रसिद्धस्याभावो वर्तत एव वह्न्यवयवत्वे इत्यतिव्याप्तिः स्यात्, यदि साध्यतावच्छेदकसम्बन्धेन साध्याभावस्य प्रवेशो न स्यादिति भावः।

## ❀ दीपिका ❀

स्थलान्तरानुसरणे बीजमाह—**नन्विति**। सम्बन्धविशेषाविवक्षायाम्=साध्याभावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे। एवञ्च साध्याभावकूटाधिकरणनित्यरूपादिनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्धयैव निरुक्तस्थले नातिव्याप्तिरिति सारांशः। अथात्र समवायेन वह्निसाध्यकधूमहेतुकस्थले सम्बन्धसामान्येन साध्याभावस्य विवक्षायामपि साध्याभावकूटाधिकरणत्वस्य चरमद्व्यणुके एव सत्त्वेन तन्निरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वस्य प्रसिद्धयाप्रसिद्ध्यभिधानमसङ्गतम्। न च तेजस्त्वेन वह्निसाध्यकस्थलाभिप्रायेण ग्रन्थ उक्तः, तथा च चरमद्व्यणुककालेपि तेजसः सत्त्वान्न तेजस्त्वावच्छिन्नाभावः सम्बन्धसामान्येन द्व्यणुके वर्तते इति वाच्यम्, 'वह्न्यसमानकालीनधूमासंयोगिद्रव्यस्यासत्त्वा'दित्यत्र संयोगिद्रव्यस्यासत्त्वादित्युक्तावेव सामञ्जस्ये धूमपदस्य वैयर्थ्यात्। वस्तुतस्तु धूमप्रतियोगिकसंयोगेन धूमहेतुकस्थलाभिप्रायेणातिव्याप्त्युपन्यासान्न ग्रन्थासङ्गतिः।

ननूक्तग्रन्थस्य समवायेन धूमहेतुकस्थलपरता, तथा च साध्याभावकूटाधिरण-नित्यरूपादि-निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वस्य रूपत्वे प्रसिद्धत्वात् कथमप्रसिद्ध्यभिधानमित्यत आह—**समवायेन धूमस्य हेतुत्वे चेति**। तथा च विरुद्धस्थले हेतौ साध्यसामानाधिकरण्यविरहादेव नातिव्याप्तिरिति तत्त्वम्। **तद्व्युदासेति**। अतिव्याप्तिवारणेत्यर्थः। **प्रवेशो न स्यादिति**। तत्प्रवेशे तु संयोगेन वह्नौ साध्ये समवायेन वह्न्यवयवत्वहेतौ नातिव्याप्तिः, संयोगसम्बन्धावच्छिन्नवह्न्यभावकूटाधिकरण-वह्न्यवयव-निरूपित-समवायसम्बन्धावच्छिन्नवृत्तित्वाभावस्य रूपत्वादौ प्रसिद्धस्य वह्न्यवयवत्वे हेतावसत्त्वादिति भावः। अथ समवायेन वह्नेर्हेतुतायामेवातिव्याप्तिसम्भवे वह्न्यवयवत्वानुसरणं व्यर्थमिति चेदत्र केचित्—वह्न्यवयवत्वम्=वह्निमत्त्वम्, तच्च समवायेन वह्निरेवेत्याहुः।

ननु समवायेन केवलवह्नित्वस्य केवलावयवत्वस्य च हेतुतायामप्यतिव्याप्ति-सम्भवे वह्न्यवयवत्वपर्यन्तानुसरणं व्यर्थमिति चेन्न, साध्याभावकूटाधिकरणं वह्न्यसमवायिवह्न्यसंयुक्तवह्निं वह्न्यसमवायिवह्न्यसंयुक्तजलीयपरमाण्वादिकं चादाय नातिव्याप्तिसम्भव इत्युभयमतसाधारण्याय वह्न्यवयवत्वहेत्वनुसरणम् ।

## ❀ जागदीशी ❀

ननु समवायेन वह्न्यभावस्य वह्न्यवयवत्वासमानाधिकरणत्वादग्रे-वक्ष्यमाणेन साध्याभावानां हेतुसमानाधिकरणत्वविशेषणेनैव न तादृशा-भावमन्तर्भाव्योक्तहेतावतिव्याप्तिरतो हेत्वन्तरमाह—पर्वतेति । अत्र सम-वायेन वह्न्यभावस्य पर्वते, संयोगेन वह्न्यभावस्य च वह्न्यवयवे हेतुसमा-नाधिकरणत्वात्तदुभयघटितसाध्याभावकूटस्याधिकरणं यन्नित्यरूपादिकम्, तत्समवेतत्वाद्यभावस्य तादृशसंयोगेन हेतौ सत्त्वाद् भवत्यतिव्याप्तिः ।

## ❀ दीपिका ❀

ननु हेतुसमानाधिककरणत्वस्य साध्याभावविशेषणत्वे समवायसम्बन्धावच्छिन्न-वह्न्यभावस्य वह्न्यवयवत्वादिरूपहेतुसामानाधिकरण्यविरहेण न तत्रातिव्याप्तिरित्याह-**नन्विति**।तादृशाभावम्=समवायेन वह्निसामान्याभावम्।उक्तहेतौ=वह्न्यवयवत्वहेतौ। **पर्वते** इति । एवं च वह्निमान् पर्वतवह्न्यवयवसंयोगादित्यादौ वह्न्यवयवान्तर्भावेण व्यभिचारिणि अतिव्याप्तिः स्यात्, यदि साध्याभावीयप्रतियोगितायां साध्यता-वच्छेदकसम्बन्धावच्छिन्नत्वं न निवेश्येत । पर्वतावच्छेदेन समवायेन वह्न्यभावस्य वह्न्यवयवावच्छेदेन च संयोगेन वह्न्यभावस्य हेतुसमानाधिकरणतया तदुभयघटित-वह्न्यभावकूटाधिकरणनित्यरूपादि-निरूपित-समवायसम्बन्धावच्छिन्नवृत्तित्वसामान्या-भावस्य घटादौ प्रसिद्धस्य पर्वतवह्न्यवयवसंयोगात्मके हेतौ सत्त्वादित्याह-**अत्रेति**। तादृशसंयोगे=पर्वतवह्न्यवयवसंयोगे ।

अत्रेदमवधेयम्—केवलपर्वतसंयोगस्य केवलावयवसंयोगस्य च हेतुत्वे तत्त-त्संयोगाश्रयजलीयपरमाण्वादिकमादाय अतिव्याप्त्यभावात्, उभयमतसाधारण्याय तादृशहेत्वनुसरणम् । एवं पर्वतवह्न्यवयवसंयोगस्य हेतुत्वे वह्नेः समवायेन संयोगेन वा साध्यत्वमित्यत्र विनिगमकाभावेनोभयोरपि प्रत्येकं साध्यतावच्छेदकत्वम्, विनिगमनाविरहेण एकशेषस्य कर्तुमशक्यत्वात् फलतो विशेषाभावाच्चेति ।

❀ जागदीशी ❀

यत्तु संयोगेन वह्नेः साध्यत्वे वह्न्यवयवत्वस्य विरुद्धत्वाद्धेतौ साध्यसामानाधिकरण्यविशेषणादेव तद्वारयितुं शक्यते इत्यतः पर्वतेत्यादि-हेत्वन्तरमिति । तत्तुच्छम्, वह्न्यवयवेपि वह्न्यन्तरस्य संयोगेन वृत्तेर्विरोधविरहात्, तादात्म्येन साध्यत्वानुरोधात् साध्यसम्बन्धितामात्रस्यैव सामानाधिकरण्ये प्रवेश्यत्वाच्चेति भावः । सम्बन्धद्वयेति । पर्वतस्य संयोगावच्छिन्नवह्न्यभावानधिकरणत्वाद् वह्न्यवयवस्य समवायावच्छिन्नवह्न्यभावानधिरणत्वादिति भावः । नातिव्याप्तिरिति । प्रागुक्तरीत्या साध्याभावकूटाधिकरणनित्यरूपादौ हेतुताघटकसंयोगसम्बन्धेन वृत्त्यप्रसिद्ध्या वह्निमान् धूमादित्यादावव्याप्तिर्वेत्यपि द्रष्टव्यम् । अत्र च वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वमते एवेदमुक्तम् । तेन धनी चैत्रत्वादित्यादौ स्वामित्वादिसम्बन्धेन साध्यतायां नाव्याप्तिः । साध्यतावच्छेदकसम्बन्धातिरिक्तसमानाधिकरणसम्बन्धानवच्छिन्नप्रतियोगिताकसाध्याभावो ग्राह्य इति तु न युक्तम्, धनी द्रव्यत्वादित्यादौ व्यधिकरणसम्बन्धावच्छिन्नसाध्याभावस्यैव तादृशत्वेनातिव्याप्तिप्रसङ्गात् ।

❀ दीपिका ❀

हेत्वन्तरानुसरणे बीजमुपपादयतां मतं दूषयितुमुपन्यस्यति—**यत्त्विति** । **विरोधविरहादिति** । एवञ्च हेतौ साध्यसामानाधिकरण्यविवक्षायां वह्न्यवयवत्व-हेतावतिव्याप्तिवारणमशक्यमिति भावः ।

ननु वह्न्यवयवे वह्न्यन्तरप्रतियोगिकसंयोगस्य वृत्त्यनियामकतया कथं तेन सम्बन्धेन हेतौ साध्यसामानाधिकरण्यमित्यत आह—**तादात्म्येनेति** । तथा च तादात्म्येन प्रमेयवतः साध्यत्वे धूमादिहेतौ वृत्त्यनियामकतादात्म्यादिसम्बन्धेन साध्यसामानाधिकरण्यविरहेणाव्याप्तिभियावश्यं साध्यसामानाधिकरण्यघटकतया साध्यसम्बन्धित्वस्यैव निवेशनीयतया वह्न्यन्तरप्रतियोगिकसंयोगेनापि वह्न्यवयवे वह्न्यन्तरसम्बन्धित्वानपायादिति तत्त्वम् ।

प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे वह्निमान् धूमादित्यादावव्याप्तिरपीत्याह—**प्रागुक्तरीत्येति** । संयोगसम्बन्धावच्छिन्नवह्न्यभाव-समवायसम्बन्धावच्छिन्नवह्न्यभावद्वयघटितसाध्याभावकूटमादायेत्यर्थः ।

तथा च तादृशसाध्याभावकूटाधिकरण-नित्यरूपादि-निरूपित-हेतुतावच्छेदकीभूतसंयोगसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्धया तत्राव्याप्तिरिति भावः।

ननु साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावविवक्षणे धनी चैत्रत्वादित्यादौ वृत्त्यनियामकस्वामित्वादिसम्बन्धेन साध्यतायां स्वामित्वादिसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धयाऽव्याप्तिरित्यत आह—**अत्र चेति**। तेन = वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वं स्वीकृत्यैव लक्षणकरणेन।

यत्तु सर्वं वाक्यं सावधारणमिति न्यायेन साध्यतावच्छेदकसम्बन्धेनैव साध्याभावो बोध्य इति लाभेन साध्यतावच्छेदकसम्बन्धातिरिक्तसमानाधिकरणसंसर्गानवच्छिन्नप्रतियोगिताकसाध्याभावो ग्राह्य इत्यर्थः पर्यवसन्नः। तादृशसाध्याभावश्च साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताको व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकश्चेति वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वेपि न क्षतिः, धनी चैत्रत्वादित्यादौ व्यधिकरणस्वरूपादिसम्बन्धावच्छिन्नप्रतियोगिताकाभावमादायैव लक्षणसमन्वयादिति मतं दूषयितुमुपन्यस्यति—**साध्यतावच्छेदकसम्बन्धातिरिक्तेति**। तन्मतं दूषयति—**न युक्तमिति**। अयम्भावः—तथा सति व्यधिकरणधर्मावच्छिन्नाभावानङ्गीकारेपि व्यधिकरणसम्बन्धावच्छिन्नसाध्याभावकूटाधिकरणवृत्तित्वस्य व्यधिकरणसम्बन्धेनाभावमादाय सर्वत्र लक्षणसमन्वयसम्भवे प्रतियोग्यवृत्तिश्चेति ग्रन्थानुत्थितिप्रसङ्गः। अपि च धनी द्रव्यत्वादित्यादौ व्यभिचारिणि स्वामित्वादिसम्बन्धेन साध्यतायां व्यधिकरणसम्बन्धावच्छिन्नस्यैव निरुक्तसाध्याभावत्वादतिव्याप्तिश्चेत्याह—**धनी द्रव्यत्वादिति**। तादृशत्वेन = निरुक्तसाध्याभावत्वेन।

❀ दीधितिः ❀

**तथा स्वव्यापकीभूतसाध्यतावच्छेदकव्यापकप्रतियोगिताकोपि।**

❀ जागदीशी ❀

ननु साध्याभावो यदि साध्यतावच्छेदकरूपेण विवक्षितः तदा प्रमेयवान् वाच्यत्वादित्यादावव्याप्तिः, प्रमेयत्वावच्छिन्नप्रतियोगित्वाप्रसिद्धेः। न च साध्यतावच्छेदकातिरिक्तसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकाभाव एव साध्याभावो वक्तव्यः, तथा चावृत्तिगगनादिना प्रमेयादेरभावः सुलभ इति वाच्यम्, घ्राणग्राह्यगुणवान् द्रव्यत्वादित्यादावति-

व्याप्तिप्रसङ्गात्, तादृशगुणत्वस्य घ्राणग्राह्यगन्धत्वापेक्षया गुरुत्वेन प्रतियोगितानवच्छेदकतया व्यधिकरणधर्मावच्छिन्नाभावानामेव तादृशाभावत्वादत आह—तथेति। स्वम् = प्रतियोगिता।

## ❀ दीपिका ❀

स्वव्यापकीभूतेत्यादिदीधितिग्रन्थोत्थितौ बीजमाह—**नन्विति। प्रमेयत्वावच्छिन्नप्रतियोगित्वाप्रसिद्धेरिति।** न च प्रमेयत्वेन घटत्वपटत्वोभयाभावसत्त्वेनोक्ताप्रसिद्धिप्रदर्शनमसाम्प्रतमिति वाच्यम्, विषयत्वापेक्षया प्रमेयत्वस्य गुरुतया गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेन तदप्रसिद्धितादवस्थ्यात्। अप्रसिद्धिमुद्धर्तुं शङ्कते—**न चेति।** वाच्यमित्यनेनान्वयः। अत्र धर्मविधया साध्यतावच्छेदकातिरिक्तधर्मनिष्ठावच्छेदकत्वानिरूपकत्वनिवेशे गुरुधर्मसाध्यतावच्छेदकस्थले तादृशनिरूपकव्यक्तीनां विशिष्य निवेशस्यावश्यकत्वेन व्यधिकरणधर्मनिष्ठावच्छेदकतानिरूपकव्यक्तित्वावच्छिन्नाभावस्यापि तादृशकूटान्तर्गतत्वेन गौरवमतः **समानाधिकरणेति। अभावः सुलभ इति।** तथाच प्रमेयवान् वाच्यत्वादित्यत्र साध्यतावच्छेदकातिरिक्तसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकं गगनेन प्रमेयाभावमादाय लक्षणसङ्गतिः, गगनस्य वृत्तित्वरूपधर्मत्वाभावादिति भावः। निरुक्तविवक्षितार्थं निराकरोति—**घ्राणग्राह्येति।** अतिव्याप्तौ हेतुमाह—**तादृशगुणत्वस्येति।** घ्राणग्राह्यगुणत्वस्येत्यर्थः। तादृशाभावत्वात् = निरुक्तसाध्याभावत्वात्। तथा च त्वदुक्तरीत्या घटत्वेन घ्राणग्राह्यगुणाभावस्यैव साध्याभावतया तदधिकरण—द्रव्यनिरूपितहेतुतावच्छेदकीभूतसमवायसम्बन्धावच्छिन्नवृत्तित्वाभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव वृत्तिमद्वृत्तितया तस्य च द्रव्यत्वहेतौ सत्त्वेन घ्राणग्राह्यगुणवान् द्रव्यत्वादित्यत्रातिव्याप्तिरिति भावः।

दीधितौ—**स्वव्यापकीभूतेत्यादि।** साध्यतावच्छेदकसमनियतप्रतियोगिताकोभाव इत्यर्थः। साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वे सति साध्यतावच्छेदकव्याप्यत्वे सति साध्यतावच्छेदकव्यापिका या प्रतियोगिता तन्निरूपकाभाव एव साध्याभावपदेन ग्राह्य इति यावत्। अत्रेदं चिन्तनीयम्—निरुक्तसाध्याभावप्रवेशेपि वह्निधूमोभयवान् वह्नेरित्यत्रातिव्याप्तिः, वह्निधूमोभयाभावीयप्रतियोगित्वस्य धूमे एव स्वीकारेण प्रतियोगितायाः साध्यतावच्छेदकसमनियतत्वाभावात्, अन्यथा तादृशप्रतियोगितावच्छेदकं धूमत्वमिति यत् अवच्छेदकत्वनिरुक्तौ जगदीशेनाभिहितम्,

अतिप्रसक्ते धर्मेऽवच्छेदकत्वासम्भवात् तदसङ्गत्यापत्तेः; तथा च व्यधिकरणधर्मा-वच्छिन्नाभावस्यैव लक्षणघटकत्वेनातिव्याप्तिः सुस्पष्टेति।

❀ दीधिति ❀

**तेन यत्र पृथिवीत्वाभावादौ साध्ये तत्तद्विपक्षावृत्तित्वाद्यव-च्छिन्नप्रतियोगिताकाभावकूटाधिकरणमप्रसिद्धं तत्र सद्धेतौ पृथिवी-त्वादौ साध्ये जातित्वाद्यवच्छिन्नाभाववति सामान्यादौ अवर्तमाने द्रव्यत्वप्रकारकप्रमाविषयत्वादौ च नाव्याप्तिरतिव्याप्तिर्वा।**

❀ जागदीशी ❀

प्रतियोगिताव्यापकसाध्यतावच्छेदक इत्यस्य फलमाह—पृथिवीत्वा-भावादाविति। तत्तद्विपक्षो घटादिः, तथा च घटावृत्तित्वावच्छिन्नाभाव-पटावृत्तित्वावच्छिन्नाभावादिघटितसाध्याभावकूटाधिकरणाप्रसिद्ध्या पृथि-वीत्वाभाववान् जलत्वादित्यादिसद्धेतौ नाव्याप्तिः, घटावृत्तित्वावच्छिन्ना-भावप्रतियोगितायाः पटत्वादावपि सत्त्वेन साध्यतावच्छेदकस्य तदव्या-पकतया तादृशाभावानां लक्षणाघटकत्वात्। प्रतियोगिभेदेपि एकधर्मा-वच्छिन्नप्रतियोगिताया एकत्वादिति भावः। सद्धेताविति। नाव्याप्तिरित्य-न्वयः। वह्निमान् धूमादित्यत्र साध्यतावच्छेदकसंयोगसम्बन्धेन विपक्षी-भूततज्जलाद्यवृत्तित्वावच्छिन्नाभावकूटस्य गुणादौ, द्रव्यं पृथिवीत्वादित्यत्र च विपक्षीभूतरूपरसादिप्रत्येकासमवेतसामान्याभावकूटस्य जात्यादौ अधिकरणतासत्त्वात्तदप्रसिद्धिनिबन्धनाव्याप्तेरुक्तस्थले विरहात्तदुभयं नोदाहृतम्।

❀ दीपिका ❀

प्रथमदल( साध्यतावच्छेदकव्याप्यत्व )निवेशफलमाह दीधितौ—**यत्र पृथि-वित्वाभावादाविति। तत्र सद्धेताविति।** तत्र साध्ये यः सद्धेतुर्जल-त्वादिः तत्रेत्यर्थः। एवञ्च साध्यतावच्छेदकव्यापकप्रतियोगिताकत्वमात्रनिवेशे पृथि-वीत्वाभाववान् जलत्वादित्यादौ साध्यतावच्छेदकीभूतपृथिवीत्वाभावत्वव्यापकीभूत-प्रतियोगिताकस्य घटावृत्त्यभाव-पटावृत्त्यभावघटितस्य साध्याभावकूटस्याधिकर-णाप्रसिद्ध्याव्याप्तिः, साध्यतावच्छेदकव्याप्यप्रतियोगिताकत्वस्य निवेशे तु घटावृत्त्य-भावीयप्रतियोगितायाः पटत्वादावपि सत्त्वेन तत्र पृथिवीत्वाभावत्वस्यासत्त्वेन तस्याः

प्रतियोगितायाः साध्यतावच्छेदकव्याप्यत्वाभावान्न निरुक्ताभावस्य लक्षणघटकत्व-मित्याह—**तथा च घटावृत्तित्वावच्छिन्नेति** । तदव्यापकतया=निरुक्ताभावीय-प्रतियोगिताव्यापकत्वाभावेन । तादृशाभावानाम्=घटावृत्तित्वावच्छिन्नाभावानाम् । ननु प्रतियोगिभेदेन प्रतियोगिताया नानात्वेन साध्यतावच्छेदकस्य निरुक्ताभावीय-प्रतियोगित्वाव्यापकत्वमित्यत आह—**प्रतियोगिभेदेपीति** । ननु प्रथमदलाप्रवेशे वह्निसाध्यके धूमादिहेतौ साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकव्यापक-स्य तत्तद्ध्रदावृत्तित्वावच्छिन्नाभावकूटस्याधिकरणताया गुणादौ प्रसिद्धत्वेपि तन्नि-रूपितहेतुतावच्छेदकीभूतसंयोगसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्धयाव्याप्तिसम्भवे स्थला-न्तरानुसरणमनुचितमित्यत आह—**वह्निमानित्यादि** । तथा च प्रतियोगिता-व्यापकत्वनिवेशेपि साध्याभावकूटवति हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्धया सत्तावान् जातेरित्यादौ अव्याप्तेर्वक्ष्यमाणतया साध्याभावकूटाधिकरणाप्रसिद्धिनिब-न्धनाव्याप्तिदोषवारणमेव प्रयोजनमिति भावः ।

### ❀ जागदीशी ❀

ननु यावतामैकाधिकरण्यं तावत्समुदायस्य विवक्षायां नोक्ताव्याप्ति-रत आह—पृथिवीत्वादाविति । साधनसमानाधिकरणत्वेन साध्याभावस्य च विशेषणीयत्वे जातित्वावच्छिन्नाभावमादाय नातिव्याप्तिसम्भव इत्यादि-पदमुपात्तम् । तथा च जलासमवेतत्वावच्छिन्नाभावस्य तेजोसमवेतत्वा-वच्छिन्नाभावस्य च साधनसमानाधिकरणत्वात्तदुभयघटितसाध्याभाव-कूटाधिकरणजात्यादौ प्रकृतहेतोरसत्त्वादतिव्याप्तिरिति भावः ।

### ❀ दीपिका ❀

अथ ऐकाधिकरण्यापन्नसाध्याभावकूटाधिकरणनिरूपितवृत्तित्वाभावस्य प्रवेशेन पृथिवीत्वाभाववान् जलत्वादित्यादौ नाव्याप्तिः, घटावृत्तित्वावच्छिन्नाभाव-पटावृत्ति-त्वावच्छिन्नाभावयोरैकाधिकरण्याभावेन कूटानन्तर्गतत्वादित्याह—**ननु यावता-मिति** । अस्यानुगमस्तु आधेयतासम्बन्धेन यत्किंचिदधिकरणविशिष्टसाध्याभाव-व्यापकाधिकरणवृत्तित्वाभावा यावन्त इत्यादि । अधिकरणे साध्याभावव्यापकता च सामानाधिकरण्यसम्बन्धेन । यत्किंचिदधिकरणमादाय एकवृत्तित्वाभावः, एवमपर-यत्किंचिदधिकरणमादाय तादृशवृत्तित्वाभावः एवं रीत्या यावन्तो वृत्तित्वाभावास्तद्व-त्त्वमिति ध्येयम् । **पृथिवीत्वादावितीति** । तथा च साध्यतावच्छेदके प्रतियोगि-ताव्यापकत्वानिवेशे पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ जलान्तर्भावेण व्यभि-

चारिणि अतिव्याप्तिः, जातित्वावच्छिन्नाभावस्य साध्यतावच्छेदकीभूतपृथिवीत्वत्व-व्यापकप्रतियोगिताकत्वेन कूटान्तर्गततया तदधिकरणे सामान्यादौ द्रव्यत्वप्रकारक-प्रमाविषयत्वरूपहेतोरसत्त्वात् । प्रतियोगिताव्यापकत्वनिवेशे तु न दोषः, साध्यता-वच्छेदकीभूतपृथिवीत्वत्वस्य जात्यभावीयप्रतियोगिताव्यापकत्वाभावात्, जलत्वादि-जातौ व्यभिचारात् ।

ननु हेतुसमानाधिकरणत्वेन साध्याभावविशेषणीयत्वे जातित्वावच्छिन्नाभावस्य हेतुसामानाधिकरण्यविरहेण न जात्यभावमादाय पूर्वोक्तस्थलेतिव्याप्तिरित्याह—**साध-नसमानेति । आदिपदमुपात्तमिति ।** जातित्वाद्यवच्छिन्नेत्यत्रेति शेषः । एवं च पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यत्रैव जलासमवेतत्वावच्छिन्नाभाव-तेजोसम-वेतत्वावच्छिन्नाभावादेः साधनसमानाधिकरणत्वेन साध्यतावच्छेदकव्यापकप्रतियोगि-ताकतया च तदुभयघटितसाध्याभावकूटाधिकरण-सामान्यादिनिरूपितवृत्तित्वाभाव-स्य हेतौ सत्त्वादतिव्याप्तिरिति प्रतियोगिताव्यापकत्वं साध्यतावच्छेदके निवेशनीय-मित्याह—**तथा च जलासमवेतेति ।**

## ❀ जागदीशी ❀

**द्रव्यत्वस्य समवायेन हेतुत्वे तादृशसाध्याभावकूटवति जात्यादौ हेतुता-वच्छेदकीभूतसमवायसम्बन्धेन वृत्त्यप्रसिद्ध्यैव नातिव्याप्तिः स्यादत उक्तं-** द्रव्यत्वप्रकारकेति । **सामान्यादौ च स्वरूपसम्बन्धेन वृत्तिर्वाच्यत्वादावेव सुलभा ।** प्रमाविशेष्यत्वादाविति । **नातिव्याप्तिरित्यन्वयः । भ्रमात्मकतादृश-प्रतीतिविषयत्वं जात्यादावपीत्यतः—**प्रमेति । **अत्र प्रतियोगितां प्रति व्याप-कत्वं साध्यतावच्छेदकताघटकसम्बन्धेनैव ग्राह्यम् । तेन नित्यज्ञानवतः तादात्म्येन साध्यतायामीश्वरत्वादिहेतौ घटान्यभेदस्य पटान्यभेदस्य च द्वयोर्विषयतासम्बन्धेन प्रतियोगिताव्यापकीभूतनित्यज्ञानात्मकसाध्यता-वच्छेदकव्यापकप्रतियोगिताकयोरेकाधिकरणाप्रसिद्धावपि नाव्याप्तिः, न वा तादृशे एव साध्ये द्रव्यत्वादिप्रकारकप्रमाविषयत्वादित्यत्र पृथिव्यादौ साधनसमानाधिकरणस्य पृथिव्यादिनवद्रव्याणां प्रत्येकभिन्नद्रव्यभेद-कूटस्याधिकरणे गुणादौ हेतोरसत्त्वेप्यतिव्याप्तिः ।**

## ❀ दीपिका ❀

अथ पृथिवी द्रव्यत्वादित्यत्राप्यतिव्याप्तिसम्भवे द्रव्यत्वप्रकारकप्रमाविषयत्वपर्य-न्तानुधावनं व्यर्थमित्याशङ्क्याह—**द्रव्यत्वस्य समवायेनेति । तादृशसाध्या-**

भावेति। साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावेत्यर्थः। तथा च साध्याभावकूटाधिकरणसामान्यादिनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वस्याप्रसिद्ध्या तत्र नातिव्याप्तिः। प्रमाविषयत्वपर्यन्तानुसरणे तु तादृशसाध्याभावकूटाधिकरणसामान्यादिनिरूपितहेतुतावच्छेदकीभूतस्वरूपसम्बन्धावच्छिन्नवृत्तित्वस्य वाच्यत्वादौ सौलभ्येन तादृशवृत्तित्वाभावस्य हेतौ सत्त्वाद् भवत्यतिव्याप्तिरिति सरलोभिप्रायः। नन्वेवमपि द्रव्यत्वप्रकारकज्ञानविषयत्वस्य स्वरूपेण हेतुत्वे फलसम्भवे तद्वति तत्प्रकारकज्ञानरूपप्रमापर्यन्तानुसरणव्यर्थमित्यत आह—**भ्रमात्मकतादृशेति**। तथा च साध्याभावकूटाधिकरणसामान्यादि-निरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्वस्यैव द्रव्यत्वप्रकारकभ्रमात्मकज्ञानीयविषयत्वे सत्त्वान्नातिव्याप्तिः स्यादतः प्रमापर्यन्तानुसरणमिति भावः।

ननु तादात्म्येन नित्यज्ञानवतः साध्यत्वे 'नित्यज्ञानवद्वान् ईश्वरत्वादि'त्यादौ अव्याप्तिः, विषयतासम्बन्धेन साध्यतावच्छेदकीभूतनित्यज्ञानस्य घटान्यादौ सत्त्वेन साध्यतावच्छेदकीभूतनित्यज्ञानसमनियतप्रतियोगिताकस्य घटान्यभेद-पटान्यभेदद्वयघटितसाध्याभावकूटस्याधिकरणाप्रसिद्धेरित्यत आह—**अत्र प्रतियोगितां प्रतीति**। तथा च साध्यतावच्छेदकताघटकसमवायसम्बन्धेन साध्यतावच्छेदकीभूतनित्यज्ञानस्य घटान्यादावसत्त्वेन न निरुक्तभेदानां लक्षणघटकत्वमिति भावः। तेन = साध्यतावच्छेदकताघटकसम्बन्धेन प्रतियोतिताव्यापकत्वग्रहणेन।

ननु नित्यज्ञानवतः तादात्म्येन साध्यतास्थले नित्यपदं व्यर्थमिति चेदत्रोच्यते—प्रतियोगिताव्यापकसाध्यतावच्छेदकं यदि स्ववृत्तियत्किंचित्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वसम्बन्धेन साध्यतावच्छेदकाभाववत्प्रतियोगित्वमुच्यते, तदा विषयतासम्बन्धेन स्ववृत्तिप्रतियोगिताकाभाववद्वृत्तित्वसम्बन्धेन ज्ञानस्य घटान्यभेदीयप्रतियोगितायां सत्त्वात् घटान्यभेदे तादृशसाध्यतावच्छेदकाभाववत्प्रतियोगिताकत्वविरहेण लक्षणाघटकतया नाव्याप्तिरतो नित्यपदम्। तदुपादाने तु विषयतासम्बन्धावच्छिन्नस्ववृत्तिप्रतियोगिताकाभाववद्वृत्तित्वसम्बन्धस्य नित्यज्ञानस्य व्यधिकरणसंसर्गत्वेन घटान्यभेदादेरुक्तसम्बन्धेन नित्यज्ञानात्मकसाध्यतावच्छेदकाभाववत्प्रतियोगिताकतया लक्षणघटकेनाव्याप्तिरिति। परे तु ज्ञानत्वावच्छिन्नं प्रति कार्यकारणभावविरहेण जन्यनित्यज्ञानसाधारणज्ञानत्वस्यानुगतस्याभावात् नित्यपदोपादानम्, तदुपादाने तु नित्यज्ञानव्यक्तेस्तद्व्यक्तित्वेन साध्यतावच्छेदकतेत्याहुः।

एवं प्रतियोगितायां व्याप्यत्वमपि 'अयमभावप्रतियोगी'ति व्यवहारनियामक-

स्वरूपसम्बन्धेन प्राह्यम् । इतरथा वह्निमान् धूमादित्यादौ सर्वस्या एव प्रतियोगितायाः कालिकादिसम्बन्धेन कालादिवृत्तितया कस्या अपि प्रतियोगिताया न वह्नित्वादिकं व्यापकमिति तादृशाभावाप्रसिद्ध्याऽव्याप्त्यापत्तेरिति ।

ननु साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्त्वबुद्धेः संसर्गविधया प्रतिबन्धकतावच्छेदकसम्बन्धेन वृत्तिमतामेव साध्याभावानां प्रवेश्य-त्वाद् घटत्वात्मकघटान्यभेदादेस्तादृशस्वरूपसम्बन्धेन वृत्तित्वाप्रसिद्धया लक्षणा-घटकत्वान्न तादृशकूटमादाय निरुक्तातिव्याप्तिरित्यत आह—**न वेति**। तादृशे एव = नित्यज्ञानवति एव । तथा च साध्यतावच्छेदकताघटकसम्बन्धेन प्रतियोगिता-व्यापकत्वाग्रहणे पृथिव्यादिप्रत्येकभिन्नद्रव्यभेदस्य पृथिव्यादौ हेतुसमानाधिकरणस्य विषयतासम्बन्धेन नित्यज्ञानात्मकसाध्यतावच्छेदकव्यापकप्रतियोगिताकतयातिव्याप्तिः स्यादिति भावः । यद्यपि पृथिवीभिन्नभेद-घटादिभिन्नभेदानामपि साध्याभावकूटा-न्तर्गततया तेषामेकाधिकरणाप्रसिद्धयैव नातिव्याप्तिः । न च यावतामैकाधिकरण्यं तावत्समुदायविवक्षणे नाप्रसिद्धिरिति वाच्यम् , तस्याग्रे निवेशनीयत्वेपि तस्येदानी-मनुसन्धाने रूपाभाववान् वायुत्वादित्यादावव्याप्तिदानस्यासत्त्वापत्तेः, तथापि आदिपदेन नित्यज्ञानवतः समवायेन साध्यत्वे तादृशहेतौ तत्तद्द्रव्यभिन्नसमवेत-स्याभावादिकमादायातिव्याप्तिर्बोध्या, जात्यादावेव तादृशकूटाधिकरणत्वसम्भवात् । अत एव द्रव्यत्वहेतुमुपेक्ष्य स्वरूपसम्बन्धेन द्रव्यत्वप्रकारकप्रमाविषयत्वस्योपादा-नम् । अथात्मभिन्नद्रव्यभेदस्य साध्यतावच्छेदकव्यापकप्रतियोगिकत्वाभावात् पृथिव्या-दिनवद्रव्याणामित्यादिग्रन्थासङ्गतिरिति चेन्न, जीवभिन्नद्रव्यं नेत्यभावान्तर्भाव्य नव-द्रव्याणामभावसत्त्वादिति ध्येयम् ।

## ❀ जागदीशी ❀

नचैवं वह्निधूमोभयवान् धूमादित्यत्राव्याप्तिः, प्रतियोगितामात्रस्यैव प्रत्येकपर्यवसिततया तां प्रति पर्याप्त्याख्यसाध्यतावच्छेदकताघटक-सम्बन्धेन कस्याप्यव्यापकतया निरुक्तसाध्याभावाप्रसिद्धेरिति वाच्यम्, एकविशिष्टापरत्वानतिरिक्तस्य उभयत्वस्य सार्वभौममते पर्याप्तिभिन्न-सम्बन्धेनैव साध्यतावच्छेदकत्वात्, साध्यतावच्छेदकपदेन साध्यनिष्ठ-प्रतियोगित्वस्योपलक्षणत्वात् साध्यनिष्ठप्रतियोगित्वसम्बन्धेनैव वा साध्य-तावच्छेदकप्रतियोगिताव्यापकत्वस्योक्तत्वादिति भावः ।

❀ दीपिका ❀

अथ साध्यतावच्छेदकताघटकसम्बन्धेन प्रतियोगितां प्रति व्यापकत्वग्रहणे वह्निधूमोभयवान् धूमादित्यत्राव्याप्तिः, उभयाभावीयप्रतियोगितया वह्नौ धूमे च प्रत्येकपर्यवसिततया साध्यतावच्छेदकतावच्छेदकीभूतपर्याप्तिसम्बन्धेनोभयत्वस्योभयस्मिन् सत्त्वेन प्रत्येकावृत्तितयाऽव्यापकत्वात् इत्याशङ्कते—**न चैवमिति**। एवम् = साध्यतावच्छेदकताघटकसम्बन्धेन व्यापकत्वग्रहणे। अव्याप्तौ हेतुमाह—**प्रतियोगितामात्रस्यैवेति**। तां प्रति = प्रतियोगितां प्रति। **निरुक्तसाध्याभावेति**। साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावेत्यर्थः। अव्याप्तिं निराकरोति—**एकविशिष्टेति**। तथा च सार्वभौममते वह्निविशिष्टधूमत्वस्य धूमविशिष्टवह्नित्वस्य च वह्निधूमोभयत्वरूपत्वमिति साध्यतावच्छेदकतावच्छेदकसमवायसम्बन्धेन साध्यतावच्छेदकस्य निरुक्तप्रतियोगिताव्यापकत्वमक्षतमेवेति भावः। **साध्यतावच्छेदकपदेनेति**। साध्यतावच्छेदकसमनियतेत्यत्रेति शेषः। तथा च साध्यनिष्ठप्रतियोगितासमनियतप्रतियोगिताकाभावस्यैव साध्याभावपदार्थत्वेन वह्निधूमोभयाभावीयप्रतियोगितायाः साध्यनिष्ठप्रतियोगितासमनियतत्वेन नाव्याप्तिरिति भावः। **साध्यनिष्ठप्रतियोगित्वसम्बन्धेनेति**। तथा च साध्यनिष्ठप्रतियोगित्वसम्बन्धेन साध्यतावच्छेदिका या प्रतियोगिता तद्व्यापकत्वस्य ग्रहणेन वह्निधूमोभयाभावमादाय लक्षणसमन्वय इति भावः। नव्यास्तु साध्यतावच्छेदकनिष्ठसाध्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नव्यापकतानिरूपितव्याप्यत्वाभावपर्याप्तिसम्बन्धनिष्ठावच्छेदकतानिरूपकत्वनिरूपितावच्छेदकताश्रयत्वसम्बन्धावच्छिन्नं यत्साध्यतावच्छेदकवृत्तित्वं तत्प्रतियोगिताकत्वोभयप्रतियोगिताकाभावविशिष्टा या साध्यतावच्छेदकव्यापकप्रतियोगिता तत्काभाव एव साध्याभावपदेन विवक्षणीयः। तेन नोक्तानुपपत्तिरित्याहुः

❀ दीधितिः ❀

**नापि अभावत्वादिना अभावादौ साध्ये तत्तत्साध्याभावकूटाधिकरणाप्रसिद्ध्याऽव्याप्तिरित्याहुः।**

❀ जागदीशी ❀

साध्यतावच्छेदकव्यापिका प्रतियोगितेत्यस्य फलमाह—नापीति। घटत्वाभावत्वेन साध्ये साध्याभावकूटवत्त्वं घटस्यैव सुलभमत उक्तम्—अभावत्वादिनेति। आदिना प्रमेयत्वादेरुपग्रहः। तथा च अभाववान् प्रमे-

यवान् वा घटत्वादित्यत्र साधनसमानाधिकरणस्य तत्तद्घटान्यत्वाभाव-कूटस्याधिकरणाप्रसिद्ध्याऽव्याप्तिः स्यात्, अतः साध्यतावच्छेदकेति। साध्यतावच्छेदकीभूताभावत्वव्यापकप्रतियोगिताकत्वाभावादेव तत्तद्घटा-न्यत्वाभावानां लक्षणाघटकत्वादिति भावः।

## ❀ दीपिका ❀

दीधितौ—**तत्तत्साध्येति।** घटत्वाभाव-पटत्वाभावादिरूपसाध्यस्य यः साध्य-तावच्छेदकव्याप्यप्रतियोगिताको घटत्व-पटत्वादिरूपोभावस्तत्समुदायाधिकरणस्या-प्रसिद्धेरित्यर्थः।

**अव्याप्तिः स्यादिति।** अयमाशयः—द्वितीय( साध्यतावच्छेदकव्यापक-त्व )दलस्याप्रवेशे साध्यतावच्छेदकव्याप्यप्रतियोगिताकाभाव एव साध्याभावपदार्थो वाच्यः। एवञ्च अभाववान् घटत्वादित्यत्र हेतुसमानाधिकरणस्य तत्तद्घटभे-दाभावकूटस्य साध्यतावच्छेदकीभूताभावत्वव्याप्यप्रतियोगिताकत्वेन लक्षणघटकतया तादृशकूटाधिकरणस्यैकस्य कस्यचिदसम्भवेनाव्याप्तिः। तत्प्रवेशे तु तत्तद्घटभेदा-भावीयप्रतियोगिता न साध्यतावच्छेदकव्यापिका, पटाभावादौ व्यभिचारादिति न निरुक्ताभावानां लक्षणघटकत्वमिति। न च यावतामभावानामेकाधिकरणत्वसम्भव-स्तादृशाभावकूटाधिकरणं यद्यत् तावदन्यतमवृत्तित्वत्वसमनियतप्रतियोगिताकोभावो विवक्षणीयः, घटवृत्तित्वत्वावच्छिन्नाभावश्चोपदर्शितस्थले न तथा, जगत एव तावद-न्तर्गतत्वात्, अपि तु घटत्वादिना जगद्वृत्तित्वसामान्याभाव एव वृत्तिमद्वृत्तिस्त-थाविधोभावः, तावदधिकरणान्यतमत्वं च तत्तदधिकरणावृत्तिशून्यत्वं न तु तत्तद-धिकरणान्यान्यत्वमिति नाप्रसिद्धिरिति वाच्यम्, एवमपि जातिप्रतियोगिकाभाववान् मेयत्वादित्यादौ जातिमतामेव घटत्व-पटत्वघटिततादृशकूटाधिकरणतया जातिम-द्वृत्तित्वत्वावच्छिन्नाभावस्यापि तादृशतयाव्याप्तेर्दुर्वारत्वादिति।

## ❀ जागदीशी ❀

अत्र स्वन्यूनवृत्तिधर्मानवच्छिन्नाया एव प्रतियोगिताया साध्यताव-च्छेदकसामनैयत्यं वाच्यम्। तेन घटत्वाभावत्वेन पटत्वाभावत्वेन च अभाव-प्रमेयसामान्याभावयोरेकाधिकरणाप्रसिद्धावपि नोक्ताव्याप्तिताद-वस्थ्यम्, घटत्वाभावत्वादेः प्रमेयसामान्यनिष्ठप्रतियोगितान्यूनवृत्तित्वेन तादृशप्रतियोगिताकाभावानां लक्षणाघटकत्वात्। एवं साध्यसामानाधि-करण्यमपि हेतौ वक्तव्यम्। तेन सत्तावत्समवेतत्वसमनियतप्रतियोगिता-

कस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वात् तादृशस्य च यावत एव हेतौ सत्त्वेपि जात्यभाववान् द्रव्यत्वादित्यादिविरुद्धहेतौ नातिव्याप्तिरिति ध्येयम् ।

## ❀ दीपिका ❀

अथैवमपि अभाववान् प्रमेयवान् वा घटत्वादित्यत्राव्याप्तिर्दुरुद्धरा, घटत्वाभाववत्वेन पटत्वाभाववत्वेन च अभावसामान्याभाव-प्रमेयसामान्याभावयोरपि साध्यतावच्छेदकीभूताभावत्वादिसमनियतप्रतियोगिताकतया तादृशाभावकूटाधिकरणस्याप्रसिद्धत्वादित्यत आह—**अत्र स्वन्यूनेति** । तथा च अवृत्तिगगनादिना साध्याभावमादाय लक्षणं सङ्गमनीयम् । **तादृशप्रतियोगिताकेति** । घटत्वाभाववत्वेन पटत्वाभाववत्वेन च अभावादिसामान्याभावानामित्यर्थः । अथैवमपि जात्यभाववान् द्रव्यत्वादित्यादौ विरुद्धहेतावतिव्याप्तिः, जातिरूपसाध्याभावाधिकरणं द्रव्यादि, तन्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वसामान्याभावस्य समवायेन वृत्तिमति अवृत्तेर्लक्षणाघटकतया घटत्वादिव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य तादृशवृत्तित्वाभावस्यैव लक्षणघटकतया तस्य च द्रव्यत्वहेतौ सत्त्वादित्यत आह—**एवं साध्यसामानाधिकरण्यमपीति** । तथा च द्रव्यत्वहेतौ साध्यसामानाधिकरण्यविरहेण नातिव्याप्तिरिति भावः ।

ननु पृथिवीसमवेतवान् मेयत्वादित्यादौ पृथिवीसमवेतत्वादिकं गुरुतया न पृथिवीसमवेताद्यभावप्रतियोगितावच्छेदकम्, समवायेन जात्यभावप्रतियोगितायामिव पृथिवीसमवेताद्यभावप्रतियोगितायामपि केवलसमवेतत्वस्यैवावच्छेदकत्वसम्भवात्, समवेतत्वावच्छिन्ना च प्रतियोगिता न साध्यतावच्छेदकीभूतपृथिवीसमवेतत्वादिसमनियता जलत्वादौ व्यभिचारादिति व्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तिरिति चेन्न, 'पृथिवीसमवेतमि'ति धीविशेष्यत्वावच्छिन्नप्रतियोगिताकाभावः साध्यतावच्छेदकसमनियतप्रतियोगिताक इति न तत्रातिव्याप्तिः । अत्र धीः प्रमारूपा ग्राह्या । तेन भ्रमरूपतादृशधीविशेष्यत्वावच्छिन्नप्रतियोगितायां जलत्वादिसाधारणत्वेन न तस्याभावस्य पृथिवीसमवेतत्वसमनियतप्रतियोगिताकत्वक्षतिरित्यवसेयम् ।

इति यतीन्द्रस्वामि-श्रीरामप्रपन्नाचार्यविरचितायां दीपिकायां
कूटघटितसार्वभौमलक्षणव्याख्यानं समाप्तम् ।



❀ दीधितिः ❀

तन्न, पृथिवीत्वद्रव्यत्वोभयवान् द्रव्यत्वादित्यादौ तदुभयान्यतरत्वावच्छिन्नाभाववति द्रव्यत्वादेरवृत्तेरतिव्याप्तेः ।

❀ जागदीशी ❀

यद्यपि घटवृत्तित्वविशिष्टवाच्यत्वाभावस्य घटान्यवृत्तित्ववाच्यत्वाभावस्य च द्वयोरेकाधिकरणाप्रसिद्धया वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः। न च घटादिवृत्तित्वविशिष्टवाच्यत्वत्वं न प्रतियोगितावच्छेदकम्, तदपेक्षया लघोर्घटवृत्तित्वविशिष्टत्वस्यैव तथात्वात्, तादृशविशिष्टत्वाद्यवच्छिन्नाभावानां च साध्यतावच्छेदकसमव्याप्तप्रतियोगिताकत्वाभावादेव व्युदासः, घटवृत्तित्वविशिष्टे वस्तुमात्रे तत्प्रतियोगितासत्त्वादिति वाच्यम्, वाच्यत्वनिष्ठाधेयताविशेषेण घटावच्छिन्नप्रतियोगिताकाभावस्य तादृशसम्बन्धेन घटान्यावच्छिन्नाभावस्य च द्वयोस्तथाप्यधिकरणाप्रसिद्धयाव्याप्तितादवस्थ्यात। न चाधेयताविशेषेण घटादेः प्रतियोगितावच्छेदकत्वे मानाभावः, तस्य त्वयाप्यवश्यं वाच्यत्वात्, अन्यथा घटवृत्तित्वविशिष्टवाच्यत्ववान् द्रव्यत्वादित्यादावतिव्याप्त्यापत्तेः, गुरुतरतादृशविशिष्टवाच्यत्वत्वावच्छिन्नाभावस्याप्रसिद्धया घटवृत्तित्वविशिष्टत्वावच्छिन्नाभावस्य च साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वाभावेन व्यधिकरणधर्मावच्छिन्नाभावस्यैव घटवृत्तित्वविशिष्टवाच्यत्वाद्यभावस्य लक्षणघटकत्वात्, तथापि दूषणमिदं स्फुटतयोपेक्ष्य दूषणान्तरमाह—पृथिवीत्वेति ।

❀ दीपिका ❀

कूटघटितसार्वभौमलक्षणं दूषयति—तन्नेति । अथ कूटघटितस्य सार्वभौमलक्षणस्य वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः, घटवृत्तित्वविशिष्टवाच्यत्वाभावस्य घटान्यवृत्तित्वविशिष्टवाच्यत्वाभावस्य च साध्यतावच्छेदकीभूतवाच्यत्वत्वसमनियतप्रतियोगिताकतया तदुभयघटितसाध्याभावकूटस्याधिकरणाप्रसिद्धेः। एवञ्च पृथिवीत्वद्रव्यत्वोभयवान् द्रव्यत्वादित्यादावतिव्याप्तिप्रदर्शनेन तन्मतखण्डनं दीधितिकृतोऽसाम्प्रतमित्याशङ्कते—यद्यपीति । तथापीत्यनेन सम्बन्धः । ननु घटवृत्तित्वविशिष्टवाच्यत्वाभावीयप्रतियोगितावच्छेदकं लाघवाद्घटवृत्तित्वविशिष्टत्वमात्रम्, तदवच्छिन्नप्रतियोगिताकाभावश्च न साध्यतावच्छेदकसमनियतप्रतियोगिताकः, घटवृत्तित्वविशिष्टे जलादावपि तदीयप्रतियोगितायाः सत्त्वेन तत्र वाच्यत्वत्वरूपसाध्यतावच्छेदकस्याभावादिति तादृशाभावमादाय

केवलान्वयिनि अव्याप्तिविरहेणातिव्याप्त्यभिधानं नासङ्गतमित्याशङ्कते—**न चेति ।** वाच्यमिति परेणान्वयः । तदपेक्षया = घटवृत्तित्वविशिष्टवाच्यत्वस्यापेक्षया । तथात्वात् = तादृशविशिष्टाभावीयप्रतियोगितावच्छेदकत्वात् । **तादृशविशिष्टत्वेति ।** घटादिवृत्तित्वविशिष्टत्वेत्यर्थः । **तत्प्रतियोगितेति ।** घटादिवृत्तित्वविशिष्टत्वावच्छिन्नाभावीयप्रतियोगितेत्यर्थः । वाच्यं ज्ञेयत्वादित्यत्राव्याप्तिं द्रढयति—**वाच्यत्वनिष्ठाधेयताविशेषेणेति ।** वाच्यत्वानुयोगिकाधेयतासम्बन्धेनेत्यर्थः । **घटावच्छिन्नेति ।** घटविशिष्टेत्यर्थः । तादृशसम्बन्धेन = वाच्यत्वानुयोगिकाधेयतासम्बन्धेन । एवं च वाच्यत्वानुयोगिकाधेयतासम्बन्धेन वाच्यत्वस्यैव घटावच्छिन्नत्वेन घटान्यावच्छिन्नत्वेन च तादृशाभावद्वयस्य साध्यतावच्छेदकसमनियतप्रतियोगिताकतया तदुभयघटितसाध्याभावकूटाधिकरणत्वाप्रसिद्ध्याऽव्याप्तितादवस्थ्यमिति भावः ।

ननु वाच्यत्वानुयोगिकाधेयतासम्बन्धेन घटादेर्निरुक्ताभावीयप्रतियोगितावच्छेदकत्वकल्पनामपेक्ष्य लाघवात् शुद्धाधेयत्वसम्बन्धेनैव घटेवच्छेदकत्वात् तादृशाप्रतियोगिताव्यापकत्वस्य साध्यतावच्छेदके वाच्यत्वत्वे विरहात्, प्रतियोगितायाः घटत्वाधिकरणतायां सत्त्वात्तत्र वाच्यत्वत्वस्यासत्त्वेन व्यभिचारान्नाव्याप्तिरिति चेन्न, अनुगताधेयतात्वानङ्गीकर्तृमते तादृशान्यतमाधेयत्वसम्बन्धैर्घटादेरेवावच्छेदकत्वकल्पनापेक्षया वाच्यत्वानुयोगिकत्वविशिष्टाधेयतयावच्छेदकत्वकल्पने लाघवानवकाशादिति ध्येयम् ।

ननु घटाद्यवच्छिन्नाभावीयप्रतियोगितावच्छेदकत्वस्य वाच्यत्वानुयोगिकाधेयतासम्बन्धेन घटादौ कल्पने न किमपि प्रमाणमिति कथं तादृशाभावमादायाव्याप्तिरित्याशङ्कते—**न चेति ।** मानाभाव इत्यनेनान्वयः । आधेयताविशेषेण = वाच्यत्वानुयोगिकाधेयतासम्बन्धेन । समाधत्ते—**तस्येति ।** तादृशसम्बन्धेन घटादेरवच्छेदकत्वस्येत्यर्थः । अनङ्गीकारे दोषमाह—**अन्यथेति ।** तादृशसम्बन्धेन घटादेरवच्छेदकत्वानङ्गीकारे इत्यर्थः । **अतिव्याप्त्यापत्तेरिति ।** तथा च घटवृत्तित्वविशिष्टवाच्यत्ववान् द्रव्यत्वादित्यादौ तादृशसाध्याभावीयप्रतियोगितावच्छेदकत्वस्य लाघवाद् घटवृत्तित्वविशिष्टत्वे एव कल्पनेन घटवृत्तित्वविशिष्टत्वावच्छिन्नाभावस्य च घटवृत्तित्वविशिष्टजलादौ व्यभिचारेण साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वाभावेन लक्षणाघटकतया घटत्वेन घटवृत्तित्वविशिष्टवाच्यत्वाभावस्यैव लक्षणघटकतया तादृशाभावाधिकरणवृत्तित्वाभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव वृत्तिमद्वृत्तित्वेन तस्य च द्रव्यत्वहेतौ सत्त्वात् । वाच्यत्वानुयोगिकाधेयतासम्बन्धेन

घटादेरवच्छेदकत्वाङ्गीकारे तु तेन सम्बन्धेन घटावच्छिन्नाभावाधिकरण-जलादि-निरूपितवृत्तित्वस्यैव द्रव्यत्वे सत्त्वेन नातिव्याप्तिरिति तत्त्वम्। ननु न चेत्यादिना विशेषसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावे मानाभावमाशङ्क्य अतिव्याप्तेस्तत्र मानत्वेनोपस्थानमसङ्गतम्, न हि अतिव्याप्तिप्रमाणेन पदार्थव्यवस्थापनं युक्तमिति चेन्न, कम्बुग्रीवादिमान्नास्तीति प्रतीत्या गुरुधर्मावच्छिन्नाभाववद् गुरुसम्बन्धावच्छिन्नाभावो नव्यैरभ्युपगम्यते, तन्मताभिप्रायेणायं ग्रन्थः। अन्यथा शब्दस्य गुरुसम्बन्धावच्छिन्नाभावाङ्गीकर्तृमताभिप्रायेण लक्षणानङ्गीकारे इत्यर्थः।

दीधितौ—**तदुभयेति**। पृथिवीत्वद्रव्यत्वैतदुभयेत्यर्थः। **अतिव्याप्तिरिति**। तथा च सार्वभौमलक्षणस्य पृथिवीत्वद्रव्यत्वोभयवान् द्रव्यत्वादित्यत्र पृथिवीत्वद्रव्यत्वोभयान्यतराभावस्य पृथिवीत्वद्रव्यत्वोभयत्वरूपसाध्यतावच्छेदकसमनियतप्रतियोगिताकतया लक्षणघटकत्वेन तादृशान्यतराभाववति गुणादौ द्रव्यत्वस्यावृत्तित्वाद्तिव्याप्तिरिति।

❀ दीधितिः ❀

**अपि च इदं पृथिव्यन्यत्वविशिष्टद्रव्यत्ववद् द्रव्यत्वादित्यादौ द्रव्यत्वत्वाद्यवच्छिन्नाभावकूटाधिकरणगुणाद्यवृत्तित्वस्य द्रव्यत्वे सत्त्वादतिव्याप्तिः, द्रव्यत्वत्वाद्यवच्छिन्नप्रतियोगितायाः पृथिव्यन्यत्वविशिष्टद्रव्यत्वसमव्याप्तत्वात्।**

❀ जागदीशी ❀

ननु सार्वभौमानां मते विरुद्धयोरुभयत्वस्यातिरिक्तत्वेपि समानाधिकरणयोरेकविशिष्टापरत्वमेवोभयत्वम्। तथा च पृथिवीत्वद्रव्यत्वोभयत्वमपि पृथिवीत्वविशिष्टद्रव्यत्वत्वं द्रव्यत्वविशिष्टपृथिवीत्वत्वमेव (वा) साध्यतावच्छेदकीभूतं पर्यवसितम्, इति तत्समनियतप्रतियोगिताकत्वाभावादेव तदुभयान्यतरत्वावच्छिन्नाभावमादाय नातिव्याप्तिः; तत्प्रतियोगिताया पृथिवीत्वेपि सत्त्वेन निरुक्तसाध्यतावच्छेदकस्य तदव्यापकत्वादत आह—अपि चेति। उद्देश्यविधेयभावस्थले समानलिङ्गकत्वस्यातन्त्रत्वात् पृथिव्याम् अन्यत्वविशिष्टद्रव्यत्वस्य साध्यताभ्रमं निराकर्तुं पक्षमुल्लिखति—इदमिति। पृथिवीति। पृथिव्यन्यत्वे सति द्रव्यान्यासमवेतसकलद्रव्यसमवेतवदित्यर्थः।

## ❀ दीपिका ❀

पृथिवीत्वद्रव्यत्वोभयवान् द्रव्यत्वादित्यत्रातिव्याप्तिं निराकुरुते—**नन्विति**। विरुद्धयोः = घटत्व-पटत्वयोः। **तत्समनियतेति**। साध्यतावच्छेदकसमनियतेत्यर्थः। **तदुभयेति**। पृथिवीत्व-द्रव्यत्वोभयेत्यर्थः। तत्प्रतियोगितायाः = पृथिवीत्व-द्रव्यत्वोभयान्यतरत्वावच्छिन्नाभावीयप्रतियोगितायाः। निरुक्तसाध्यतावच्छेदकस्य = पृथिवीत्वविशिष्टद्रव्यत्वत्वरूपस्य। तदव्यापकत्वात् = निरुक्तान्यतराभावीयप्रतियोगिताव्यापकत्वाभावात्।

ननु पृथिवीत्वद्रव्यत्वोभयत्वरूपसाध्यतावच्छेदकस्य द्रव्यत्वमात्रवृत्तितया द्रव्यत्वाभावमादायातिव्याप्तिसम्भवे पृथिव्यन्यत्वविशिष्टद्रव्यत्वरूपस्थलान्तरानुसरणं व्यर्थमिति चेन्न, पृथिवीत्वद्रव्यत्वोभयवान् इत्यत्र द्रव्यत्वत्वं सकलद्रव्यसमवेतत्वमात्रम्, न तु द्रव्येतरावृत्तित्वे सति सकलद्रव्यवृत्तित्वम्, प्रयोजनाभावात्। तथा च सकलद्रव्यसमवेतत्वस्य सत्तायामपि सत्त्वेन तत्र द्रव्यत्वाभावीयप्रतियोगिताया असत्त्वेन द्रव्यत्वाभावस्य लक्षणाघटकत्वात्। न च सकलद्रव्यनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वविशिष्टाभाव एव लक्षणघटकोऽस्तु, स च गुणे एवास्तीत्यतिव्याप्तिसंभवे स्थलान्तरानुसरणं व्यर्थमिति वाच्यम्, अव्याप्यवृत्तिधर्मावच्छिन्नाभावस्य व्याप्यवृत्तित्वे द्रव्यमित्याकारकज्ञानीयप्रकारत्वावच्छिन्नाभावे एव पर्य्यवसानसम्भवेन तादृशाभावस्यालीकत्वात्, ईश्वरज्ञानरूपतद्व्यक्तिनिरूपिततद्व्यक्तित्वविशिष्टप्रकारत्वावच्छिन्नाभावे वा पर्यवसानसम्भवाच्चेति स्थलान्तरानुसरणमिति दिक्।

ननु सर्वत्र पक्षनिर्देशस्यानावश्यकत्वेन दीधितौ 'इदं' पदं व्यर्थमिति चेन्न, पृथिव्यामन्यत्वविशिष्टद्रव्यत्वस्य साध्यताभ्रमं निराकर्तुं तन्निर्देशस्यावश्यकत्वात्। न च पृथिवीत्यस्य स्त्रीलिङ्गतया समानलिङ्गकत्वाभावेन कथं तत्र पक्षत्वभ्रम इति वाच्यम्, उद्देश्यविधेयभावस्थले समानलिङ्गकत्वस्यातन्त्रत्वात्। अतएव 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' 'पितरो देवता' इत्यादीनामुपपत्तिरित्याह—**उद्देश्यविधेयेति**। दीधितौ—**द्रव्यत्वत्वावच्छिन्नेति**। शुद्धद्रव्यत्वत्वाद्यवच्छिन्नेत्यर्थः। तथा च विशिष्टस्य शुद्धानतिरिक्तत्वेन द्रव्यत्वत्वाद्यवच्छिन्नाभावस्य साध्यतावच्छेदकीभूतपृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वसमनियतप्रतियोगिताकत्वेन लक्षणघटकतया तदधिकरणीभूतगुणादिनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वसामान्याभावस्य गुणादौ प्रसिद्धस्य द्रव्यत्वात्मकहेतौ सत्त्वे कूटघटितलक्षणस्यातिव्याप्तिरिति भावः।

### ❀ जागदीशी ❀

न च सकलद्रव्यवृत्तित्वान्तर्भावेण द्रव्यत्वस्य साध्यत्वे द्रव्यान्यासमवेतत्वावच्छिन्नाभावस्य तादृशसाध्यतावच्छेदकसमनियतप्रतियोगिताकत्वाभावाद् गुरुतरसकलद्रव्यवृत्तित्वघटितद्रव्यत्वत्वावच्छिन्नात्यन्ताभावस्याप्रसिद्धत्वाद् अग्रे द्रव्यत्वत्वावच्छिन्नाभावमादायातिव्याप्तेरसङ्गत्यापत्तिरिति वाच्यम्, द्रव्यत्वत्वादीत्यत्र द्रव्यत्वत्वपदेन द्रव्यमित्याकारकतद्बुद्धिप्रकारत्वस्याग्रे वक्तव्यत्वात्। तस्य च द्रव्यान्यासमवेतत्वमपेक्ष्यापि लघुत्वेन प्रतियोगितावच्छेदकत्वसम्भवादिति भावः। द्रव्यत्वत्वादीति। आदिना पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वस्य पृथिवीवृत्तित्वविशिष्टद्रव्यत्वत्वस्य च द्वयोरवच्छेदकयोः परिग्रहः।

### ❀ दीपिका ❀

अथ द्रव्यान्यासमवेतत्वे सति सकलद्रव्यसमवेतत्वं प्रकृते साध्यतावच्छेदकम्, द्रव्यत्वाभावीयप्रतियोगितावच्छेदकं च लाघवाद् द्रव्यान्यासमवेतत्वमात्रम्, न तु सकलद्रव्यवृत्तित्वघटितम्, गुरुत्वात्। एवं च द्रव्यान्यासमवेतत्वावच्छिन्नाभावीया प्रतियोगिता रूपादावपि वर्तते तत्र च सकलद्रव्यवृत्तित्वघटितसाध्यतावच्छेदकस्यासत्त्वेन द्रव्यत्वाभावस्य साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वाभावेन कथं द्रव्यत्वाभावमादाय पृथिव्यन्यत्वविशिष्टद्रव्यत्वसाध्यके द्रव्यत्वहेतौ पृथिव्यन्तर्भावेण व्यभिचारिणि अतिव्याप्तिरित्याशङ्कते—**न चेति**। वाच्यमित्यनेनान्वयः। **तादृशसाध्यतावच्छेदकेति**। सकलद्रव्यसमवेतत्वघटितेत्यर्थः। अतिव्याप्तिं द्रढयति—**द्रव्यत्वत्वादीति**। **तस्य चेति**। द्रव्यमित्याकारकबुद्धिप्रकारत्वस्य चेत्यर्थः। तथा च द्रव्यमित्याकारकबुद्धीयप्रकारत्वावच्छिन्नाभावस्य साध्यतावच्छेदकसमनियतप्रतियोगिताकस्याधिकरण-गुणादि-निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वसामान्याभावस्य द्रव्यत्वे सत्त्वाद् भवत्यतिव्याप्तिरिति भावः।

ननु द्रव्यान्यासमवेतत्वापेक्षया द्रव्यमित्याकारकबुद्धिप्रकारत्वस्य लघुत्वकथनं जगदीशस्यासङ्गतम्, प्रकारतायाः किञ्चित्सम्बन्धावच्छिन्नविषयतारूपत्वात्, सम्बन्धस्य विशिष्टधीजनकत्वादिरूपत्वादिति चेन्न, प्रकारतारूपतद्व्यक्तिमान्नास्तीत्यभावे एव ग्रन्थकर्तुस्तात्पर्यात्। प्रकारतात्वस्याखण्डोपाधितायाः सत्प्रतिपक्षे रत्नकोशकारमते भट्टाचार्येणोक्तत्वात्, विशिष्टधीजनकत्वादिघटितविशेष्यत्वविशेषणत्वान्यविषयतारूपसम्बन्धत्वस्यापि सिद्धान्तलक्षणे जगदीशेनोक्तत्वात्। न च

प्रकारतायाः ज्ञानसमानकालीनतया प्रकारत्वावच्छिन्नाभावस्याव्याप्यवृत्तित्वेन द्रव्ये एव सत्त्वेन प्रकारत्वावच्छिन्नाभावप्रतियोगितावच्छेदकं यदि द्रव्यान्यासमवेतत्वं स्यात्तदा द्रव्यवृत्त्यभावप्रतियोगितावच्छेदकं स्यादित्यापत्तिसम्भवे द्रव्यान्यासमवेतत्वस्य प्रतियोगितावच्छेदकत्वशङ्कैव नास्तीति प्रकारताया लघुत्वाभिधानं पुनरप्यसङ्गतमेवेति वाच्यम्, अतिप्रसङ्गाद्यनापादकत्वाभाववत् लघुत्वाभावस्य स्वातन्त्र्येण प्रतियोगितावच्छेदकत्वाभावप्रयोजकत्वात् । यादृशकार्यं प्रति उभयोरेव प्रयोजकत्वं तयोरन्यतरासत्त्वकथनेनैव चारितार्थ्यात् । अव्याप्यवृत्तिधर्मावच्छिन्नाभावस्य व्याप्यवृत्तित्वे तु अतिप्रसङ्गशङ्कैव नास्तीति ध्येयम् ।

## ❀ दीधितिः ❀

**किंच रूपाभावसाध्यकसद्धेतौ साध्याभावसमुदायनिविष्टसकलरूपव्यक्त्यधिकरणाप्रसिद्धिः ।**

## ❀ जागदीशी ❀

ननु साध्यतावच्छेदकान्यसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिताकाभाव एव साध्याभावपदार्थो वाच्यः । तथा च विशिष्टद्रव्यत्वस्य साध्यतायां द्रव्यत्वसामान्याभावस्यातथात्वान्नातिप्रसङ्गः, गुरुधर्मस्य प्रतियोगितावच्छेदकत्वोपगमाच्च तद्रूपेण साध्यतायामपि नातिव्याप्तिः । वस्तुतस्तु प्रतियोगितायाः साध्यतावच्छेदकस्य च स्वावच्छिन्नवत्तासम्बन्धेनैव परस्परव्यापकत्वं वाच्यम् । अतः कथितस्थले द्रव्यत्वाद्यभावमादाय नातिव्याप्तिः, तत्प्रतियोगित्वावच्छिन्नं प्रति विशिष्टद्रव्यत्वस्वेनाव्यापकत्वात् । प्रतियोगितायाः स्वावच्छिन्नवत्त्वन्तु स्वावच्छेदकसम्बन्धेनैव वाच्यम्, न तु साध्यतावच्छेदकसम्बन्धेन । तेनायं तद्रूपान्यत्वविशिष्टरूपत्ववान् रूपत्वादित्यादौ तद्रूपान्यरूपान्यतमत्वाभावस्यापि निरुक्तसाध्याभावत्वात्तमादाय नातिव्याप्तिः, अन्यथा तद्रूपान्यत्वविशिष्टरूपत्वाद्यभावस्य प्रतियोगिनस्तद्रूपेपि समवायेन सत्त्वात् तादृशस्य लक्षणाघटकतया तत्रातिव्याप्त्यापत्तेः ।

## ❀ दीपिका ❀

किंचेत्यादिग्रन्थावतरणाय शङ्कते—**ननु साध्यतेति** । साध्यतावच्छेदकातिरिक्तः स्वसमानाधिकरणो यो धर्मस्तदनवच्छिन्नप्रतियोगिताकाभाव इत्यर्थः । अतथात्वात् = साध्यतावच्छेदकातिरिक्तस्वसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिता-

कत्वाभावात् । एवं च साध्यतावच्छेदकातिरिक्तसमानाधिकरणधर्मः द्रव्यमित्याकारकज्ञानीयप्रकारत्वरूपः, तदवच्छिन्नप्रतियोगिताकत्वेन तादृशप्रकारत्वावच्छिन्नाभावमादाय नातिव्याप्तिरिति भावः । न चैवं कम्बुग्रीवादिमद्वान् द्रव्यत्वादित्यत्र साध्यतावच्छेदकभिन्नघटत्वावच्छिन्नप्रतियोगिताकत्वेन कम्बुग्रीवादिमदभावस्य लक्षणाघटकत्वात् कम्बुग्रीवादिमत्त्वस्य गुरुतया प्रतियोगितानवच्छेदकत्वादिति व्यधिकरणधर्मावच्छिन्नसाध्याभावमादायातिव्याप्तिरिति वाच्यम्, गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमङ्गीकृत्यैव लक्षणकरणादित्याह—**गुरुधर्मेति** । ताद्रूप्येण = गुरुधर्मेण, कम्बुग्रीवादिमत्त्वादिनेति यावत् ।

गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वपक्षेपि पृथिव्यन्यत्वविशिष्टद्रव्यत्वसाध्यकस्थले नातिव्याप्तिरित्याह— वस्तुत इति । कथितस्थले = पृथिव्यन्यत्वविशिष्टद्रव्यत्वसाध्यकस्थले । **अव्यापकत्वादिति** । तथा च द्रव्यत्वाभावीयप्रतियोगितायाः स्वावच्छिन्नवत्त्वसम्बन्धेन पृथिव्यां वर्तमानत्वेन तत्र स्वावच्छिन्नवत्त्वसम्बन्धेन पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वरूपसाध्यतावच्छेकस्यासत्त्वेन व्यापकत्वाभावेन न द्रव्यत्वाभावमादायातिव्याप्तिरिति भावः । अथ प्रतियोगितायाः स्वा(प्रतियोगित्वा)वच्छिन्नाधिकरणत्वस्य साध्यतावच्छेदकसम्बन्धेन ग्रहणे तद्रूपान्यत्वविशिष्टरूपत्ववान् रूपत्वादित्यादौ तद्रूपान्तर्भावेण व्यभिचारिणि अतिव्याप्तिः, स्वावच्छिन्नप्रतियोग्यधिकरणत्वस्य समवायेन तद्रूपेपि सत्त्वेन तेन सम्बन्धेन तद्रूपान्यत्वविशिष्टरूपत्वाभावीयप्रतियोगिताया अपि तद्रूपे सत्त्वेन तत्र च स्वावच्छिन्नवत्त्वसम्बन्धेन साध्यतावच्छेदकस्य तद्रूपान्यत्वविशिष्टरूपत्वत्वस्यासत्त्वेन साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वाभावेन तद्रूपान्यत्वविशिष्टरूपत्वसामान्याभावस्य लक्षणाघटकत्वाद् व्यधिकरणधर्मावच्छिन्नसाध्याभावस्यैव लक्षणघटकत्वादित्यत आह— **प्रतियोगिताया इति** । स्वावच्छिन्नवत्त्वम् = प्रतियोगित्वावच्छिन्नाधिकरणत्वम् । **स्वावच्छेदकेति** । प्रतियोगितावच्छेदकेत्यर्थः । तेन = प्रतियोगितावच्छेदकसम्बन्धेनैव स्वावच्छिन्नाधिकरणत्वस्य ग्रहणेन । निरुक्तसाध्याभावत्वात् = साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वात् । **नातिव्याप्तिरिति** । तथा च तद्रूपान्यरूपान्यतमत्वाभावीयप्रतियोगित्वावच्छिन्नवत्त्वस्य स्वरूपेण तद्रूपान्यरूपे एव सत्त्वेन तत्र स्वावच्छिन्नवत्त्वसम्बन्धेन साध्यतावच्छेदकस्यापि सत्त्वेन साध्यतावच्छेदकसमनियतप्रतियोगिताकस्य तद्रूपान्यरूपान्यतमत्वाभावस्य लक्षणघटकतया तादृशाभावाधिकरणीभूत–तद्रूप–निरूपितवृत्तित्वस्यैव रूपत्वहेतौ सत्त्वान्नातिव्याप्तिरिति भावः । अन्यथा = प्रतियोगितावच्छेदक-

सम्बन्धेन स्वावच्छिन्नाधिकरणत्वस्याविवक्षायाम्। तादृशस्य = तद्रूपान्यत्वविशिष्टरूपत्वाभावस्य। तत्र = तद्रूपान्यत्वविशिष्टरूपत्ववान् रूपत्वादित्यादौ। ननु साध्यतावच्छेदकसम्बन्धेन स्वावच्छिन्नवत्त्वोक्तौ तादृशसाध्याभावाप्रसिद्ध्यैव नातिव्याप्तिरिति कथमतिव्याप्तिसङ्गतिरिति चेन्न, तद्रूपान्यत्वविशिष्टरूपत्ववान् तद्व्यक्तित्वादित्यत्र तादृशसाध्याभावाप्रसिद्ध्याव्याप्तिवारणाय प्रतियोगिताव्यापकसाध्यतावच्छेदकमित्यस्य स्वावृत्तित्व-व्यधिकरणधर्मावच्छिन्नाभावीयान्यत्वोभयाभाववत्त्वसम्बन्धेन साध्यतावच्छेदकविशिष्टप्रतियोगित्वमर्थः। स्वावृत्तित्वघटकवृत्तित्वं तु साध्यतावच्छेदकसम्बन्धेन, भेदप्रतियोगितावच्छेदकत्वन्तु स्वावच्छिन्नवत्तासम्बन्धेन। अत्र स्वपदं साध्यतावच्छेदकपरम्। तथा च तद्रूपान्यत्वविशिष्टरूपत्ववान् तद्व्यक्तित्वादित्यत्र घटत्वेन तद्रूपान्यत्वविशिष्टरूपत्वाभावमादाय लक्षणसमन्वयः। उक्तस्थले च व्यधिकरणधर्मावच्छिन्नसाध्याभावस्यैव लक्षणघटकतयातिव्याप्तेस्तादवस्थ्यादिति ध्येयम्।

## ❀ जागदीशी ❀

एवञ्च वृत्त्यनियामकसम्बन्धेन गुरुरूपेण वा साध्यतास्थले तयोः प्रतियोगितावच्छेदकत्वाभावेपि न क्षतिः, न वा घटत्वेन वाच्यत्वाभावीयं वाच्यत्वनिष्ठं यत्प्रतियोगित्वं तस्यैव घटत्वेन पटाभावात्मकतादृशाभावीयपटनिष्ठप्रतियोगितया सममभेदेपि केवलान्वय्यादावव्याप्तिरत आह—किंचेति।

ननु विशिष्टस्यातिरिक्तत्वमते द्रव्यत्वादिसामान्याभावस्य विशिष्टसाध्यतावच्छेदकसमनियतप्रतियोगिताकत्वाभावादेव तमादाय नातिव्याप्तिरत आह—किंचेतीति प्राञ्चः।

सद्धेतौ = वायुत्वादौ। अप्रसिद्धिरिति। कालस्य सकलरूपवत्त्वेपि साध्यताग्रहविरोधिताघटकेन समवायसम्बन्धेन तदनधिकरणत्वादिति भावः।

## ❀ दीपिका ❀

**एवं चेति**। प्रतियोगितायाः साध्यतावच्छेदकस्य च परस्परं स्वावच्छेदकवत्त्वसम्बन्धेन व्यापकत्वग्रहणे सतीत्यर्थः। तयोः = गुरुधर्म-वृत्त्यनियामकसम्बन्धयोः। **न क्षतिरिति**। नाव्याप्त्यतिव्याप्त्योः प्रसङ्ग इत्यर्थः। अन्यथा धनी चैत्रत्वादित्यत्र स्वामित्वसम्बन्धेन साध्यतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसा-

ध्याभावाप्रसिद्ध्याव्याप्तिः, कम्बुग्रीवादिमद्वान् द्रव्यत्वादित्यादित्यादौ पूर्वोक्तरीत्याऽतिव्याप्तिः स्यादिति। वस्तुतस्तुकल्पाश्रयणे तु संयोगेन घनाभावस्य कम्बुग्रीवादिमदभावस्य च लक्षणघटकतया न दोष इति।

**न वेति।** अस्याव्याप्तिरित्यनेनान्वयः। तथा च वस्तुतस्तुकल्पानाश्रयणे समनियताभावैक्यमते प्रतियोगितायाः पटेपि सत्त्वेन तत्र साध्यतावच्छेदकीभूतवाच्यत्वत्वस्यासत्त्वेन साध्यतावच्छेदकसमनियतप्रतियोगिताकसाध्याभावाप्रसिद्ध्या वाच्यं ज्ञेयत्वादित्यादावव्याप्तिः स्यात्। वस्तुतस्तुकल्पे तु स्वावच्छिन्नवत्त्वसम्बन्धेन वाच्यत्वत्वस्य पटादावपि सत्त्वेन नाव्याप्तिरिति भावः।

दीधितौ—**रूपाभावसाध्यकेति।** रूपत्वावच्छिन्नप्रतियोगिताकाभावसाध्यकेत्यर्थः। तथा च रूपाभाववान् वायुत्वादित्यादौ त्यत्र साध्याभावकूटान्तर्गतनिखिलरूपव्यक्त्यधिकरणस्याप्रसिद्ध्याव्याप्तिरिति भावः।

ननु कालिकसम्बन्धेन सकलरूपव्यक्त्यधिकरणं काल एवेति नाप्रसिद्धिनिबन्धनाव्याप्तिरित्यत आह—**कालस्येति।** तदनधिकरणत्वात्=रूपानधिकरणत्वात्। एवं च प्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताबुद्धिं प्रति सम्बन्धविधया प्रतिबन्धकतावच्छेदको यस्तेनैव सम्बन्धेन साध्याभावकूटाधिकरणताया उक्ततया प्रकृते प्रतिबन्धकतावच्छेदकीभूतसमवायसम्बन्धेन रूपाधिकरणत्वस्य कालेसत्त्वेनाप्रसिद्धिनिबन्धनाव्याप्तिर्दुर्वारैवेति भावः।

## ❀ दीधितिः ❀

**यावतामभावानामैकाधिकरण्यं सम्भवति तावतां समुदाये विवक्षितेपि इदं पृथिवीवृत्तिगुणशून्यं सत्तान्यपृथिवीसमवेतशून्यं वा वायुत्वात् रूपवदन्यत्वाद्वेत्यादावतिव्याप्तिः, तादृशसाध्याभावस्तोमस्य नियमतो रूपादिघटितत्वेन तद्वति हेतोरवृत्तेः।**

## ❀ जागदीशी ❀

शङ्कते—यावतामिति। तथा च व्यधिकरणधर्मावच्छिन्नाभावैरेकाधिकरणतापन्नस्य तद्रूपस्याधिकरणे वृत्तित्वप्रसिद्ध्यैव नाव्याप्तिरिति भावः। विवक्षितेपीति। अपिना तदविवक्षायां वक्ष्यमाणातिव्याप्तिः सूचिता। ननु यावतां मिथः सामानाधिकरण्यं तावत्समुदायो विवक्षितः, किं वा यावतां साध्याभावानामभावान्तरेण सामानाधिकरण्यं तावत्समुदायो-

भिप्रेतः, प्रथमे इदमित्यादि। अत्रेदमिति पृथिव्या विशेषणम्, न तु पक्षनिर्देशः, तथा सति घटतद्वायुवृत्तिद्वित्व-कुड्यतद्वायुवृत्तिद्वित्वानामेव तद्वायौ मिथः सामानाधिकरण्यापन्नसाध्याभावानामधिकरणे तद्वायौ वृत्तिमत्त्वादेव वायुत्वादिहेतावतिव्याप्त्यनुपपत्तेः। एतत्पृथिवीसमवेतप्रतियोगिकाभावस्य साध्यत्वे वायुत्वादेः सद्धेतुत्वात् समवेतत्वापेक्षया गुरुत्वेन एतत्पृथिवीसमवेतत्वावच्छिन्नाभावस्य चाप्रसिद्धस्यैव साध्यत्वायोगाद् गुणपदम्।

## ❀ दीपिका ❀

**नाव्याप्तिरिति।** अयमाशयः—साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावसमानाधिकरणनिरुक्तसाध्याभावानां समुदायो निवेश्यते। एवं च तादृशसाध्याभावस्तद्घटवृत्तितद्रूपव्यक्तिस्तत्समानाधिकरणा व्यधिकरणधर्मावच्छिन्नाभावाश्च न तु रूपव्यक्त्यन्तरमिति तादृशसाध्याभावसमुदायाधिकरणं तद्घटादिरेवेति न रूपाभाववान् वायुत्वादित्यादावप्रसिद्धिनिबन्धनाव्याप्तिरिति। तदविवक्षायामपि = यावतामैकाधिकरण्यं तावत्समुदायस्याविवक्षणेपि। **वक्ष्यमाणेति।** इदं पृथिवीवृत्तिगुणशून्यं वायुत्वादित्यादावित्यर्थः। **प्रथमे इदमित्यादीति।** अत्र कल्पे स्ववृत्तिसाध्याभावत्वव्यापकं यद्यदधिकरणवृत्तित्वं तत्तदधिकरणवृत्तिसाध्याभावत्वव्यापकाधेयताकं यद्यत्तावदन्यतमवृत्तित्वाभावः, यत्किंचिद्व्यक्तिवृत्तिसाध्याभावत्वव्यापकसमुदायत्वावच्छिन्नसमानाधिकरणसाध्याभावसमुदायत्वावच्छिन्नाधिकरणतावद्वृत्तित्वाभावो वा कूटघटितलक्षणस्य तात्पर्यम्। अन्यतमत्वं च तत्तदधिकरणावृत्तिधर्मशून्यत्वम्। अतो न केवलान्वयिनि अप्रसिद्धिः। वायौ पृथिवीवृत्तिद्वित्व-संयोगादिसत्त्वाद्वायुत्वादेरुक्तसाध्यव्यभिचारिता। अत्र गुणशून्यत्वमात्रस्य साध्यत्वे वायवीयस्पर्शादिरपि निरुक्तसाध्याभावः तद्घटितनिरुक्तसाध्याभावकूटवद्वृत्तित्वाभावस्य यावदन्तर्गतस्य वायुत्वादावभावान्नातिव्याप्तिसम्भव इति पृथिवीवृत्तित्वोपादानम्।

अथैवमपि घटतद्वायुगतद्वित्व-कुड्यतद्वायुगतद्वित्वादिरूपपृथिवीवृत्तिगुणाभावाभावानां वायावैकाधिकरण्यसम्भवेन तद्घटितकूटस्यापि लक्षणघटकत्वेन तद्वति वायौ हेतोर्वृत्त्या नातिव्याप्तिसम्भवः। न च कपिसंयोगी सत्त्वादित्यादावतिव्याप्तिवारणाय साध्याभावाधिकरणतायां निरवच्छिन्नत्वस्यावश्यं निवेशनीयतया कपिसंयोगाभाववान् मेयत्वादित्यादावव्याप्तिवारणायावश्यं साध्याभावोपि व्याप्यवृत्तित्वेन विशेषणीयः। एवं च निरुक्तद्वित्वादिरूपसाध्याभावानामुत्पत्तिकालेसत्त्वेन कालिकाव्याप्यवृत्तितया न

लक्षणघटकत्वमिति वाच्यम्, प्राचीनमते द्वित्वादिमति तत्प्रागभावादिकालावच्छेदेना-त्यन्ताभावासत्त्वात् स्वाधिकरणयत्किंचित्व्यक्तिनिष्ठात्यन्ताभावाप्रतियोगित्वरूपव्याप्य-वृत्तित्वस्य द्वित्वादेरपि सत्त्वादित्यत आह—**अत्रेदमितीति**। एवं च इयं चासौ पृथिवीति कर्मधारयसमासो बोध्यः। तथा च पृथिवीत्वं व्यक्तिविशेषपरिचायकतयैव निविष्टम्, एतद्वृत्तिगुणशून्यत्वस्यैव साध्यत्वात्। तेन एतद्वृत्तिगुणत्वापेक्षया एतत्पृ-थिवीवृत्तिगुणत्वस्य गुरुतया प्रतियोगितानवच्छेदकत्वेपि न साध्याभावाप्रसिद्धिरिति ध्येयम्। एतद्वृत्तिश्च समवायेन बोध्या। तेन वायुस्पर्शादेः कालिकेनैतद्वृत्तित्वसम्भवेपि नोक्तरीत्यातिव्याप्तिवारणम्। **गुणपदमिति**। अयमाशयः—गुणपदानुपादाने एतत्पृथिवीवृत्तिसमवेतप्रतियोगिकाभावस्य साध्यत्वे विशिष्टोभयाभावादिकमादाय वायुत्वादेः सद्धेतुत्वमेव। पृथिवीसमवेतत्वावच्छिन्नाभावो गुरुधर्मस्य प्रतियोगितान-वच्छेदकतयापृथिवीसमवेतत्वावच्छिन्नत्वेनाभिमतायां केवलसमवेतत्वस्यैवावच्छेदक-त्वसंभवेन पृथिवीसमवेतत्वस्याभावप्रतियोगितानवच्छेदकत्वात्। न च पृथिवीसम-वेतत्वावच्छिन्नाया जलत्वादिव्यावृत्तप्रतियोगिताया अतिप्रसक्तसमवेतत्वस्य नावच्छेद-कत्वसम्भव इति वाच्यम्, समवेतत्वावच्छिन्नप्रतियोगितातोतिरिक्ताया जलत्वादि-व्यावृत्तप्रतियोगिताया एवासिद्धेः। गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वेपि पृथिवी-समवेतत्वावच्छिन्नाभावसाध्यके नातिव्याप्तिसंभवः, तादृशाभावस्य समवेतत्वावच्छि-न्नाभावसमनियततया तदभिन्नत्वेन समवेतमात्रस्यैव पृथिवीसमवेतत्वावच्छिन्नाभा-वाभावतया वायुत्वादेरपि साध्याभावत्वादिति। गुणपदोपादाने तु पृथिवीसमवेत-गुणत्वावच्छिन्नाभावश्च गुणादिसाधारणतया न समवेतत्वावच्छिन्नाभावसमनियत इति नोक्तदोषावसरः।

ननु तत्पृथिवीवृत्तिगुणशून्यत्वस्य साध्यत्वेपि तत्पृथिवीवायुवृत्तिद्वित्व-तत्पृथि-वीवृत्तिरूप-घटादिवृत्तिरूपान्यतमाद्यात्मकसाध्याभावकूटाधिकरणाप्रसिद्ध्यातिव्याप्त्य-भावस्तदवस्थ एवेति चेन्न, यावतां मिथः सामानाधिकरण्यमित्यादिना वस्तुविशिष्ट-कूटत्वावच्छिन्नाधिकरणमेव साध्याभावकूटाधिकरणपदवाच्यमिति तात्पर्यम्। कूटत्वे वस्तुवैशिष्ट्यं च स्वविशिष्टसाध्याभावत्वव्यापकाधिकरणवृत्तिसाध्याभावत्वावच्छिन्नानु-योगिताकपर्याप्तिप्रतियोगित्वसम्बन्धेन। तथा च तादृशरूपाद्यन्यतमवृत्तिकूटत्वं न धर्तव्यमिति प्रचुरतरं विभावनीयम्।

### ❁ जागदीशी ❁

ननु एतत्पृथिवीवृत्तिगुणत्वावच्छिन्नाभावसाध्यकमपि वायुत्वादिकं सद्धेतुरेव, प्रलये परमाणौ उत्पत्तिकाले चावयविनि वायौ तत्सत्त्वादतः

साध्यान्तरमाह—सत्तान्येति। अत्र पृथिवीपदं तत्पृथिवीपरम्, अन्यथा प्रागुक्तद्वित्वादिव्यक्तीनां पृथिवीत्वस्य च मिथः सामानाधिकरण्यापन्नसाध्याभावतया तत्कूटाधिकरणाप्रसिद्ध्यैवातिव्याप्त्यसम्भवापत्तेरिति ध्येयम्।

## ❀ दीपिका ❀

सत्तान्यपृथिवीसमवेतशून्यत्वरूपसाध्यान्तरानुसरणे बीजमाह—**नन्विति**। सद्धेतुत्वमेव दर्शयति—**प्रलये इति**। तत्सत्त्वात्=एतत्पृथिवीवृत्तिगुणशून्यत्वस्य विद्यमानत्वात्। तथा च प्रलयावच्छेदेन वायुपरमाणौ उत्पत्तिकालावच्छेदेन चावयविनि वायौ एतत्पृथिवीवृत्तिगुणसामान्याभावस्य सत्त्वेन तत्र च वायुत्वहेतोरपि सत्त्वेन सद्धेतुत्वमिति भावः। न च ध्वंसप्रागभावयोरत्यन्ताभावेन समं विरोधेन कथं परमाणौ अवयविनि च गुणशून्यत्वात्मकोत्यन्ताभाव इति वाच्यम्, ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वस्य नवीनैरनभ्युपगमात्।

**सत्तान्येतीति**। ननु सत्तान्यपृथिवीसमवेतशून्यत्वसाध्यकस्थलेपि घटतद्वायुवृत्तिद्वित्व-कुड्यतद्वायुवृत्तिद्वित्वादीनां पृथिवीत्वस्य च मिथः सामानाधिकरण्यापन्नानां साध्याभावतया तत्कूटाधिकरणाप्रसिद्ध्यैव नातिव्याप्तिरित्यत आह—**अत्र पृथिवीपदमिति**। एवञ्च पृथिवीत्वं व्यक्तिविशेषपरिचायकतयैव निविष्टम्, सत्तान्यैतत्समवेतशून्यत्वस्यैव साध्यत्वात्। ननु तद्रूपादिघटितमिथःसामानाधिकरण्यापन्नतादृशसाध्याभावसमुदायाधिकरणं पृथिवी, तथा च तादृशसमुदायाधिकरणप्रसिद्ध्या तदवृत्तित्वेनातिव्याप्तिसम्भवादेतत्पृथिवीपरतया व्याख्यानमफलमिति चेन्न, साधनसमानाधिकरणत्वेन साध्याभावस्य निवेशात् तद्रूपादिघटितसमुदायवारणसम्भवेनाप्रसिद्ध्यभिधानस्य सङ्गतेः। न चैवं सति पृथिवीत्वघटितसमुदायाभिधानमयुक्तमिति वाच्यम्, पृथिवीत्वपदस्य पृथिवीसमवेतदर्शितद्वित्वत्रित्वानाश्रयतदनाश्रयवाय्वन्तरसाधारणचतुष्ट्वादिपरत्वेन विवक्षणादिति। अन्यथा पृथिवीपदस्यैतत्पृथिवीपरत्वे।

केचित्तु पूर्वोक्तरीत्या घटवायुगतद्वित्व-पटवायुगतद्वित्वादिकमादाय वायोरपि तादृशाभावकूटाधिकरणतेत्यतिव्याप्त्यनुपपत्तेस्तत्पृथिवीपरमिति। नचैवमपि घटवायुसंयोगविभाग-पटवायुसंयोगविभागादीनामपि पृथिवीपर्याप्ततया तद्घटितकूटाधिकरणत्वं वायोरस्त्येवेति वाच्यम्, साध्याभावे व्याप्यवृत्तित्वविशेषणेनैव वारणात्। न चैवमपि द्वित्वादीनामपि तेनैव वारणात्पूर्वासङ्गतिरिति वाच्यम्, एतत्साध्यस्य प्राचीननवीनोभयमतसाधारण्येन प्राचीनमते तेषां व्याप्यवृत्तितया तन्मतमादाय सङ्गतेरित्याहुः।

नव्यास्तु अत्र पृथिवीपदं पृथिवीसामान्यपरमेव, घट-पट-वायुद्वित्वादेः स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वेन व्याप्यवृत्तित्वविशेषणेनैव व्यावृत्तत्वादित्याहुः।

## ❀ जागदीशी ❀

अत्रापि तत्पृथिवीसमवेतप्रतियोगिकाभावस्य केवलान्वयितया तत्र वायुत्वादेः सद्धेतुत्वात् समवेतत्वापेक्षया गुरुत्वादेव तत्पृथिवीसमवेतत्वावच्छिन्नाभावस्य चाप्रसिद्धया साध्यत्वायोगात् सत्तान्यपदम्।

न च सत्तान्यैतत्पृथिवीसमवेतत्वावच्छिन्नाभावोऽप्यप्रसिद्धः, द्रव्यत्वत्वस्यैव तदवच्छेदकत्वादिति वाच्यम्, सकलद्रव्यवृत्तित्वादिघटितस्य द्रव्यत्वत्वस्यैव तादृशसमवेतत्वापेक्षया गुरुत्वेनानवच्छेदकत्वादिति भावः।

## ❀ दीपिका ❀

सत्तान्यविशेषणफलमाह—**अत्रापीति**। केवलान्वयितया = स्वसमानाधिकरणात्यन्ताभावाप्रतियोगितया सर्वत्र विद्यमानतयेति यावत्। विशिष्टाभावोभयाभावादिकमादाय वायावपि तत्सत्त्वेन वायुत्वस्य सद्धेतुत्वमिति भावः। **सत्तान्यपदमिति**। एवं च सत्तान्यत्वस्य साध्यांशे प्रवेशे नानुपपत्तिः, सत्तान्यतत्पृथिवीसमवेताभावस्यैव साध्यत्वात्, तादृशसमवेताभावश्च न समवेतत्वमात्रावच्छिन्नप्रतियोगिताकाभावसमनियतः गुणादौ व्यभिचारादिति नोक्ताप्रसिद्धिरिति भावः। तत्पदप्रवेशेपि शङ्कते—**नचेति**। द्रव्यत्वत्वस्यैवेत्येवकारेण सत्तान्यैतत्पृथिवीसमवेतत्वस्य प्रतियोगितानवच्छेदकत्वं सूचितम्। तदवच्छेदकत्वात् = सत्तान्यैतत्पृथिवीसमवेताभावप्रतियोगितावच्छेदकत्वात्। समाधत्ते—**सकलेति**। **तादृशेति**। सत्तान्यैतत्पृथिवीत्यर्थः। एवं च द्रव्येतरावृत्तित्वे सति सकलद्रव्यवृत्तित्वरूपद्रव्यत्वत्वापेक्षया सत्तान्यैतत्पृथिवीसमवेतत्वस्यैव लघुशरीरत्वेनावच्छेदकतया न तादृशसमवेतत्वावच्छिन्नाभावोऽप्रसिद्ध इति भावः।

ननु द्रव्यत्वत्वस्य तादृशसमवेतत्वापेक्षयागुरुत्वेपि द्रव्यान्यासमवेतत्वस्य लघुत्वेन पुनरपि सत्तान्यैतत्पृथिवीसमवेतत्वावच्छिन्नाभावस्याप्रसिद्धया तादृशाभावसाध्यकव्यभिचारिणि अतिप्रसङ्गोपादानमनुचितमिति चेन्न, सत्तान्यैतत्पृथिवीसमवेतत्वपदस्य सत्तान्यनिष्ठैतत्पृथिवीनिरूपितत्वोपलक्षितसमवायसम्बन्धावच्छिन्नवृत्तित्वपरतया उपलक्षणपदार्थस्याभावप्रतियोगितानवच्छेदकत्वमते द्रव्यान्यासमवेतत्वापेक्षया तस्य गुरुत्वाभावेन तदापत्त्ययोगादिति दिक्।

## ❀ जागदीशी ❀

सत्तान्यसमवेतत्वावच्छिन्नाभावस्याप्रसिद्धत्वात् समवेतत्वावच्छिन्नाभावस्य च साध्यत्वे समवेतमात्रस्यैव तदभावतया मिथः सामानाधिकरण्यापन्नसमवेतकूटवति वायौ हेतोः सत्त्वादेव नातिव्याप्तिः। अतः पृथिवीपदम्। ननु वायुत्वस्योक्तसाध्यसामानाधिकरण्याभावादेव न तत्रातिव्याप्तिरतो हेत्वन्तरमाह—रूपवदिति। अयन्तु हेतुर्गुणादौ साध्यसमानाधिकरणः। रूपात्यन्ताभावस्य पृथिव्यामुत्पत्तिकालावच्छेदेन सत्त्वात्तत्रातिव्याप्त्यसंभवाद् रूपवदन्यत्वानुधावनम्। रूपवद्भेदस्यापि तदानीं पृथिव्यामुपगमे त्वाह—इत्यादाविति। आदिना वायुरूपान्यतरत्वादेः परिग्रहः। तादृशेति। मिथः सामानाधिकरण्यापन्नेत्यर्थः।

## ❀ दीपिका ❀

अथैवमपि साध्यांशे पृथिवीपदोपादानं व्यर्थम्, सत्तान्यसमवेताभावस्यैव साध्यत्वसम्भवादित्यत आह—**सत्तान्येति**। तथा च सत्तान्यसमवेतत्वापेक्षया समवेतत्वस्यैव सत्तान्यसमवेताभावप्रतियोगितावच्छेदकतया सत्तान्यसमवेतत्वावच्छिन्नाभावस्याप्रसिद्धत्वेन साध्यत्वं न सम्भवति, सत्तान्यसमवेतप्रतियोगिकाभावस्य साध्यत्वे तु विशिष्टाभावोभयाभावादिकमादाय वायुत्वस्य सद्धेतुत्वमेवेति भावः। नन्वेवमपि समवेतत्वावच्छिन्नाभावस्यैव साध्यत्वमास्तामित्यत आह—**समवेतत्वावच्छिन्नाभावस्य चेति**। तदभावतया=साध्याभावतया। तथा च समवेतात्मकसाध्याभावकूटाधिकरणीभूतवायुनिरूपितवृत्तित्वस्यैव वायुत्वहेतौ सत्त्वेन नातिव्याप्तिरित्यतः पृथिवीपदमिति भावः।

रूपवदन्यत्वादिति हेत्वन्तरानुसरणे बीजमाह—**नन्विति**। **उक्तसाध्येति**। सत्तान्यैतत्पृथिवीसमवेतशून्यत्वरूपसाध्येत्यर्थः। एवं च विरुद्धहेतावतिव्याप्तिवारणाय हेतौ साध्यसामानाधिकरण्यस्यावश्यं निवेशनीयतया सत्तान्यैतत्पृथिवीसमवेतद्वित्वादेः शून्यत्वस्य वायावसत्त्वेन वायुत्वहेतौ साध्यसामानाधिकरण्यविरहादेव नातिव्याप्तिरिति हेत्वन्तरानुसरणमिति भावः। गुणादौ सत्तान्यैतत्पृथिवीसमवेतशून्यत्वस्य रूपवदन्यत्वहेतोश्च वर्तमानतयास्ति हेतौ साध्यसामानाधिकरण्यमित्याह—**अयन्तु हेतुरिति**। रूपवदन्यत्वहेतुरित्यर्थः। ननु रूपात्यन्ताभावस्य हेतुत्वेपि अतिव्याप्तिसम्भवे भेदपर्य्यन्तानुधावनं व्यर्थमिति चेत्तत्राह—**रूपात्यन्ताभावस्येति**।

तथा च रूपात्यन्ताभावस्याव्याप्यवृत्तित्वेन उत्पत्तिकालीनपृथिव्यां साध्याभावकूटाधिकरणीभूतायां रूपात्यन्ताभावहेतोः सत्त्वान्नातिव्याप्तिः सम्भवतीति रूपवद्भेदानुसरणम्। रूपवद्भेदस्य च व्याप्यवृत्तित्वेन न कदापि पृथिव्यां वर्तमानत्वमिति भावः। तदानीम्=उत्पत्तिकाले। **अन्यतरत्वादेः परिग्रह इति।** तथा च सत्तान्यैतत्पृथिवीसमवेताभाववान् वायुरूपान्यतरत्वादित्यादौ रूपान्तर्भावेण हेतौ साध्यसामानाधिकरण्यस्य साध्याभावकूटाधिकरण-पृथिवीनिरूपितवृत्तित्वाभावस्य च सत्त्वेन भवति कूटघटितलक्षणस्यातिव्याप्तिरिति भावः।

अतिव्याप्तिं सङ्गमयति दीधितौ—**तादृशसाध्याभावेति।** एवं च मिथः सामानाधिकरण्यापन्नसाध्याभावकूटस्य रूपादिघटितत्वेन तादृशकूटाधिकरणीभूतपृथिवीनिरूपितवृत्तित्वाभावस्य वायुत्वादिहेतौ सत्त्वादतिव्याप्तिरिति भावः।

### ❀ दीधितिः ❀

**वस्तुतो निखिलानामेव रूपाणां तादृशाभावसहस्रसमानाधिकरणत्वात् समानाधिकरणयावदभावाधिकरणाप्रसिद्धिर्दुर्वारैव इति।**

### ❀ जागदीशी ❀

द्वितीये त्वाह—वस्तुत इति। तादृशाभावेति। **व्यधिकरणधर्मावच्छिन्नसाध्याभावेत्यर्थः।** सहस्रेति। **अवच्छेदकभेदेनाभावभेदमभ्युपेत्योक्तम्।**

### ❀ दीपिका ❀

अथ यावतां साध्याभावानामभावान्तरेण सामानाधिकरण्यमिति द्वितीयकल्पे साध्याभावसमानाधिकरणसाध्याभावत्वव्यापकाधेयताकत्वमेवार्थो वाच्यः। तथा च सत्तान्यैतत्पृथिवीसमवेतशून्यं वायुत्वादित्यादौ घटत्वादिव्यधिकरणधर्मावच्छिन्नसाध्याभावसमानाधिकरणसाध्याभावत्वं निखिलरूपाणामक्षतमिति तादृशसाध्याभावत्वव्यापिका न केनापि अधिकरणेन निरूपिताधेयतेति तादृशाधिकरणाप्रसिद्ध्यैव नातिव्याप्तिरित्यत आह दीधितौ—**वस्तुत इति।** तथा च तुल्ययुक्त्या रूपाभाववान् वायुत्वादित्यादौ तादृशाधिकरणाप्रसिद्ध्याव्याप्तिरिति भावः।

ननु समनियताभावानामैक्यात् सकलव्यधिकरणधर्मावच्छिन्नाभावानामैक्येन

सहत्त्वाभावाद् दीधितौ सहत्त्वोक्तिरसङ्गता। न च समनियताभावानामैक्यमताभिप्रायेण तदुक्तिरिति वाच्यम्, तथा सत्युक्तावतरणस्यासङ्गतत्वापत्तेरित्यत आह—अवच्छेदकभेदेनेति। अधिकरणभेदेनेत्यर्थः। तथा च व्यधिकरणधर्मावच्छिन्नाभावः, तत्तत्क्षणवृत्तित्वविशिष्टरूपसामान्याभावत्वावच्छिन्नाभावः, द्रव्यत्वादिविशिष्टरूपसामान्याभावत्वावच्छिन्नाभावश्चाभिमतः। एवं चैतादृशसहत्वेऽयस्य नासङ्गतिरिति तत्त्वम्।

❀ दीधितिः ❀

किञ्च हेतुतावच्छेदकसम्बन्धेन या साध्याभाववति वृत्तिस्तदभावो वक्तव्यः, अन्यथा धूमादावव्याप्तिः, साध्यतावच्छेदकसम्बन्धेन साध्याभाववति महाकाले वृत्तिमन्मात्रस्यैव वृत्तेर्व्यभिचारिणि अतिप्रसङ्गो वा। तथा च सत्तादिसाध्यके संयोगेन समवायेन वा हेतौ अव्याप्तिः, साध्याभाववति तेन सम्बन्धेन वृत्तेरप्रसिद्धेः।

❀ जागदीशी ❀

ननु यावतामेकव्यक्तिवृत्तित्वं तावत्समुदायस्याधिकरणोक्तौ नाप्रसिद्धिर्न वा प्रागुक्तातिव्याप्तिः, किंच सत्तान्यपृथिवीसमवेतशून्यस्याभावो द्रव्यत्वमेव लाघवात्, न तु सत्तान्यपृथिवीसमवेतमात्रम्, बहूनां तथात्वे गौरवाद् अतः परस्परसामानाधिकरण्यापन्नतादृशद्रव्यत्वादिस्वरूपसाध्याभावस्तोमवति हेतोः सत्त्वादेव नोक्तातिव्याप्तिरिति यदि ब्रूयात्तदा दोषान्तरमाह—किंचेति।

❀ दीपिका ❀

किंचेत्यादिदीधितिग्रन्थावताराय बीजमाह—नन्विति। तथा च स्ववृत्तिसाध्याभावत्वव्यापकं यद्यदधिकरणवृत्तित्वं तत्तदधिकरणवृत्तिसाध्याभावत्वव्यापकस्ववृत्तिताकाधिकरणमेव साध्याभावकूटाधिकरणमित्यस्यार्थः। धूमवान् वह्नेरित्यादौ महानसादिकं न तथा, अयोगोलकवृत्तितायास्तद्वृत्तिसाध्याभावत्वव्यापकत्वात्, अयोगोलकादिवृत्तिसाध्याभावत्वस्य च समानाधिकरणधर्मावच्छिन्नसाध्याभावसा-

धारणतया तद्वृत्तित्वाव्याप्यत्वादिति अयोगोलकाद्येव तादृशं स्वमिति नातिव्याप्तिः। तादृशयत्किंचिदधिकरणह्रदादिवृत्तित्वाभावस्य वह्न्यादौ सत्त्वेपि न क्षतिः, तादृशं यद्यत्स्वं तावदन्यतमवृत्तित्ववत्त्वसमनियतप्रतियोगिताकाभावनिवेशात्। अन्यतमत्वं च तत्तद्वृत्तिशून्यत्वम्, न तु तत्तदन्यान्यत्वम्। अतो न केवलान्वयिसाध्यके- प्रसिद्धिः। रूपसामान्याभाववान् वायुत्वादित्यादौ च सकलरूपवतामेव तथात्वम्, स्ववृत्तिताया एव तत्तद्घटादिवृत्तिसाध्याभावत्वव्यापकत्वादतो नाव्याप्तिः। सत्तान्य- पृथिवीसमवेतशून्यं वायुत्वादित्यादौ तादृशाधिकरणं वाय्वादिरेवेति तन्निरूपितवृ- त्तित्वस्यैव वायुत्वादिहेतौ सत्त्वान्नातिव्याप्तिरिति भावः।

नवीनास्तु ननु व्यासज्यवृत्तिसाध्याभावमात्रवृत्तिधर्मावच्छिन्नाधिकरणत्वमेव साध्याभावकूटाधिकरणत्वम्। जगत एव साध्याभावत्वावच्छिन्नाधिकरणतया व्यभि- चारिणि अतिव्याप्तिवारणाय व्यासज्यवृत्तित्वं धर्मविशेषणम्। न च तथापि जगत एव व्यधिकरणधर्मावच्छिन्नसाध्याभावमात्रवृत्तिधर्मावच्छिन्नाधिकरणतया दोष एवेति वाच्यम्, आधेयतावच्छेदकतादृशधर्मन्यूनवृत्तिसद्व्याप्यं यद्यत्तदन्यत्वेन धर्मस्य विशेषणात्। हेत्वभावसाधारणसाध्याभाववृत्तिधर्मावच्छिन्नाधिकरणत्वस्य हेतुशून्ये एव सत्त्वेन तद्वृत्तित्वाभावस्य हेतौ सत्त्वादतिव्याप्तिरतो मात्रेति। रूपाभावसाध्यके च तद्रूप-व्यधिकरणधर्मावच्छिन्नसाध्याभावीयत्वादिरेव तादृशो धर्मः। तस्य रूपा- न्तरसाधारणत्रित्वादिन्यूनवृत्तित्वेपि तादृशत्रित्वावच्छिन्नस्य क्वचिदप्यवृत्तेस्तस्याधेय- तानवच्छेदकतयाधेयतावच्छेदकीभूततादृशधर्मन्यूनवृत्तित्वविरहादिति नोक्ताप्रसिद्धि- रतः किञ्चेत्याहुः। केचित्तु समवायसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावस्य दैशिकविशेषणतासम्बन्धेन साध्यत्वे सत्तावदन्यत्वादिसद्धतौ साध्याभावस्य प्रमे- यात्मकतया तदितराप्रसिद्ध्या साध्याभावमात्रवृत्तिधर्माप्रसिद्ध्याव्याप्त्या नवीनमतस्य चिन्तनीयतामाहुः, तन्न समीचीनम्, मात्रशब्दस्य पर्याप्तिप्रवेशे एव तात्पर्येण साध्याभावपर्याप्ततादृशधर्मावच्छिन्नाधिकरणत्वस्यैव निवेशेन तद्घट-व्यधिकरणधर्मा- वच्छिन्नसाध्याभावोभयत्वादेरेव तादृशधर्मत्वात्।

प्रकारान्तरेणातिव्याप्तिं निराकुरुते—**किंच सत्तान्येति**। तथात्वे=साध्या- भावत्वे। एवं च सत्तान्यपृथिवीसमवेताभावाभावस्य लाघवेन द्रव्यत्वस्वरूपतया तदधिकरणीभूतवायुनिरूपितवृत्तित्वस्यैव हेतौ सत्त्वेन सत्तान्यपृथिवीसमवेतशून्यं वायुत्वादित्यादौ नातिव्याप्तिरिति भावः।

## ❀ जागदीशी ❀

यत्तु सत्तान्यपृथिवीसमवेतशून्यत्वस्य रूपसामान्याभावस्य चाभावोनुगतप्रतीतिबलादतिरिक्त एवेति तद्वति हेतोः सत्त्वासत्त्वाभ्यां नोक्तातिव्याप्त्यव्याप्त्योः सम्भव इति किंचेति। तन्मन्दम्। इदानीमेतदभावस्यातिरिक्तत्वमङ्गीकृत्य दोषनिरासे भूतत्वमूर्त्तत्वान्यतरत्वावच्छिन्नाभावाभावस्याव्यतिरिक्तत्वादग्रे भूतत्वमूर्त्तत्वेत्यादिनातिव्याप्त्यभिधानस्य सन्दर्भविरोधापत्तेः।

## ❀ दीपिका ❀

प्रकारान्तरेण पूर्वोक्तदोषमुद्धर्तुर्मतन्दूषयितुमुपन्यस्यति—**यत्त्विति**। **अतिरिक्त एवेति**। तथा च सत्तान्यसमवेतशून्यत्वाभावाधिकरणीभूतवायुनिरूपितवृत्तित्वस्यैव हेतौ सत्त्वान्नातिव्याप्तिः। रूपाभाववान् वायुत्वादित्यादौ रूपाभावाभावस्याधिकरणीभूतपृथिवीनिरूपितवृत्तित्वाभावस्य हेतौ सत्त्वेनाव्याप्तिश्च नेति भावः।

एतन्मतदूषणे हेतुमाह—**सन्दर्भविरोधापत्तेरिति**। अभावाभावस्यातिरिक्ततामभ्युपेत्याव्याप्त्यतिव्याप्त्योर्निरासे भूतत्वमूर्त्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यत्रापि भूतत्वमूर्त्तत्वान्यतराभावाभावस्य भूतत्वमूर्त्तत्वातिरिक्तस्याधिकरणं गगनादि तन्निरूपितवृत्तित्वस्यैव स्पर्शवदन्यत्वहेतौ सत्त्वेनातिव्याप्तिविरहेण 'तथापि भूतत्वमूर्त्तत्वान्यतरत्वेनाभावे साध्ये' इत्यादिदीधितिग्रन्थस्यासङ्गतत्वं स्यादिति भावः। दीधितौ—**किंचेत्यादि**। तथा च साध्याभावकूटाधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभावो व्याप्तिरिति फलितम्। अन्यथा=निरुक्तवृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे। धूमादौ=वह्निमान् धूमादित्यादौ। तथा च—वह्निमान् धूमादित्यादौ वह्न्यभावकूटाधिकरणं धूमावयवः, तन्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाभावस्य संयोगेन वृत्तिमति परमाणौ वर्तमानस्य धूमहेतावसत्त्वेनाव्याप्तिः। तन्निवेशे तु साध्याभावकूटाधिकरणीभूतधूमावयवनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वाभावस्य धूमे सत्त्वान्नाव्याप्तिरिति भावः।

## ❀ जागदीशी ❀

साध्याभावकूटाधिकरणवृत्तित्वस्य संयोगसमवायादिप्रत्येकसम्बन्धेन प्रवेशमभिप्रेत्याह—धूमादावव्याप्तिरिति। निर्वह्निसमवेतत्वसामान्याभावस्य यावदन्तर्गतस्य धूमेसत्त्वादिति भावः। सम्बन्धसामान्येन तादृशवृत्तित्वस्य

प्रवेशमभिप्रेत्याह—साध्यतेत्यादि। कालादावित्यादिपदेन दिशः परिग्रहः। व्यभिचारिणि=पृथिवी द्रव्यत्वादित्यादौ, न तु धूमवान् वह्नेरित्यादौ, तत्र हेतुतावच्छेदकसम्बन्धेन वृत्तेविवक्षायामपि अतिव्याप्तिध्रौव्यात् धूमाभावाधिकरणे कालदिगादौ मूर्त्तमात्रस्यैव संयोगसम्बन्धेन वृत्तेः तत्सामान्याभावस्य हेतुताघटकसंयोगसम्बन्धेन यो वृत्तिमाँस्तदवृत्तित्वेन लक्षणाघटकत्वादिति ध्येयम्। सत्तादीत्यादिना समवेतादेः साध्यस्योपग्रहः।

## ❀ दीपिका ❀

ननु हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वानुक्तौ यत्किञ्चित्सम्बन्धेन साध्याभावकूटवद्वृत्तित्वं वक्तव्यम्, सम्बन्धसामान्येन वा, आद्ये वक्ष्यमाणयोरव्याप्त्यतिव्याप्त्योरसङ्गतिः। तथाहि—वह्न्यभावकूटवन्निरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वाभावस्य धूमादौ सत्त्वेन वह्निमान् धूमादित्यादावव्याप्तिदानस्य साध्यतावच्छेदकीभूतसमवायसम्बन्धावच्छिन्नप्रतियोगिताकपृथिवीत्वाभावाधिकरणं महाकालस्तन्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाभावस्यैव वृत्तिमद्रूपादिवृत्तितया तस्य च द्रव्यत्वहेतावसत्त्वेन पृथिवी द्रव्यत्वादित्यत्रातिव्याप्तिदानस्य च दीधितिकृतोसङ्गतत्वापत्तेः। सम्बन्धसामान्येनेति द्वितीयपक्षेतिव्याप्तेः सङ्गतत्वेपि अव्याप्तेरसङ्गतिदुर्वारैवेत्यतः प्रकारान्तरेण विकल्प्य योजयति—**संयोगसमवायादीति**। **निर्वह्निसमवेतत्वेति**। एवं च वह्निसामान्याभावाधिकरणं धूमावयवः तन्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वसामान्याभावस्य वह्न्यादौ प्रसिद्धस्य धूमेसत्त्वेनाव्याप्तिरिति भावः। तादृशवृत्तित्वस्य = साध्याभावकूटवद्वृत्तित्वस्य। दीधितौ—**साध्यतावच्छेदकसम्बन्धेनेति**। एतच्च कालिकसम्बन्धावच्छिन्नसाध्याभावस्य कालादावसत्त्वेपि तस्य यथाविवक्षितसाध्याभाववत्त्वमक्षतमेवेति सूचनाय। तथा च सम्बन्धसामान्येन साध्याभावकूटाधिकरणवृत्तित्वस्य ग्रहणे पृथिवी द्रव्यत्वादित्यादौ समवायसम्बन्धावच्छिन्नपृथिवीत्वाभावाधिकरणं महाकालस्तन्निरूपितसम्बन्धसामान्यान्तर्गतकालिकसम्बन्धावच्छिन्नवृत्तित्वस्य वृत्तिमति सर्वत्रैव सत्त्वेन निरुक्तवृत्तित्वाभावस्य व्यधिकरणधर्मावच्छिन्नस्यैव वृत्तिमदवृत्तेरतस्य च द्रव्यत्वहेतावपि सत्त्वेनातिव्याप्तिरिति भावः। ननु धूमवान् वह्नेरित्यत्रापि धूमाभावकूटाधिकरणकालमादायातिव्याप्तिसम्भवे स्थलान्तरानुधावनं जगदीशस्यानुचितमित्यत आह—**तत्रेति**। धूमवान् वह्नेरित्यत्रेत्यर्थः। तत्सामान्याभावस्य=धूमाभावाधिकरणीभूतकालादिनिरूपित संयोगसम्बन्धावच्छिन्नवृत्तित्वाभावस्य। **लक्षणाघटकत्वादितीति**। तथा च

व्यधिकरणधर्मावच्छिन्नतादृशवृत्तित्वाभावस्यैव लक्षणघटकत्वेन तस्य च वह्निहेतावपि सत्त्वेनातिव्याप्तेस्तादवस्थ्यमिति भावः।

दीधितौ—**तथा चेति**। निरुक्तवृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वे निवेशे चेत्यर्थः। तेन सम्बन्धेन=संयोगेन समवायेन वा। तथा च सत्तावान् धूमात् द्रव्यत्वाद्वेत्यादौ साध्याभावकूटाधिकरणीभूत-सामान्यादि-निरूपितस्य संयोगसम्बन्धावच्छिन्नस्य समवायसम्बन्धावच्छिन्नस्य वृत्तित्वस्याप्रसिद्धयातिव्याप्तिरिति भावः।

❀ दीधितिः ❀

**साधनसमानाधिकरणत्वेन साध्याभावा विशेषणीया इति चेत्? विशेष्यन्ताम्, तथापि भूतत्वमूर्त्तत्वान्यतरत्वेनाभावे साध्ये स्पर्शवदन्यत्वादावतिव्याप्तिः, तादृशसाध्याभावसमुदायवति पृथिव्यादौ तस्यावृत्तेः।**

❀ जागदीशी ❀

शङ्कते—साधनेति। तथा च सद्धेतुस्थले व्यधिकरणधर्मावच्छिन्नसाध्याभावस्यैव साधनसमानाधिकरणत्वात्तत्कूटाधिकरणवृत्तित्वस्यापि तादृशाभावमादायैव लक्षणसङ्गतिः। इत्थं च वृत्तिमद्वृत्तिपदस्य व्यावृत्तिर्व्यतिरेकिण्यपि सम्भवतीति द्रष्टव्यम्। यथा चैवं साध्यतावच्छेदके प्रतियोगिताव्यापकत्वदलस्य सार्थक्यं तथोपपादितं प्रागेव।

❀ दीपिका ❀

अथ द्रव्यत्वसाधनके द्रव्यत्वपृथिवीत्वान्यतराभावशुद्धद्रव्यत्वाभावयोः वायुत्वादिहेतुके रूपाद्यात्मकसाध्याभावस्य सत्तादिसाध्यके संयोगेन समवायेन वा यत्र हेतुता तत्र सत्तात्वावच्छिन्नाभावस्य च साधनवदवृत्तित्वात् साधनसमानाधिकरणत्वेन साध्याभावे विशेषिते न तादृशाभावमादाय पूर्वोक्तस्थलेषु अव्याप्त्यतिव्याप्त्योः सम्भव इत्याशङ्कते दीधितौ—**साधनेति**। एवं च सद्धेतौ व्यधिकरणधर्मावच्छिन्नसाध्याभावानामेव साधनसमानाधिकरणतया तादृशाभावकूटाधिकरणं जगदेव, तन्निरूपितव्यधिकरणधर्मावच्छिन्नवृत्तित्वाभावस्यैव वृत्तिमद्वृत्तितया तस्य च हेतौ सत्त्वान्नाव्याप्तिः। व्यभिचारिणि च साध्यसामान्याभावस्यापि हेतुसमानाधि-

करणत्वेन तादृशसाध्याभावकूटाधिकरणं साध्यशून्यमेव तन्निरूपितवृत्तित्वसामान्याभावस्य हेतावसत्त्वान्नातिव्याप्तिरिति ।

ननु साधनसमानाधिकरणत्वेन साध्याभावे विशेषितेपि सत्तावान् जातेरित्यादावव्याप्तिवारणमशक्यमेव प्रत्येकं साधनसमानाधिकरणाभ्यां द्रव्यत्वविशिष्टसत्ताभावद्रव्यान्यत्वविशिष्टसत्ताभावाभ्यां घटितस्याभावसमुदायस्य सामान्यादावेव सत्त्वेन तत्र च हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्धेरिति चेन्न, साध्यतावच्छेदकावच्छिन्नसाध्यवद्वृत्तिसमानाधिकरणधर्मावच्छिन्नाभावभिन्नत्वेन साध्याभावविशेषणान्निरुक्तविशिष्टाभावादेर्लक्षणाघटकत्वात् । विशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्तात्वावच्छिन्नसत्ताभावसङ्ग्रहायावच्छिन्नान्तम् । वृत्तिर्निरवच्छिन्ना ग्राह्या, अन्यथा संयोगी सत्त्वादित्यादौ संयोगत्वावच्छिन्नसंयोगाभावस्य साध्यवद्वृत्तितया व्यधिकरणधर्मावच्छिन्नसाध्याभावस्यैव लक्षणघटकतयातिव्याप्तेः । सद्धेतौ साधनसमानाधिकरणस्य साध्यवदवृत्त्यन्यस्याप्रसिद्धेः समानाधिकरणधर्मावच्छिन्नेति । तथा च व्यधिकरणधर्मावच्छिन्नसाध्याभाव एव लक्षणघटक इति न कोपि दोष इति ध्येयम् ।

ननु साधनसमानाधिकरणत्वेन साध्याभावे विशेषिते वह्निमान् धूमादित्यादौ समानाधिकरणधर्मावच्छिन्नवह्निसामान्याभावस्य संग्रहो न स्यात्, तादृशाभावस्य हेतुसामानाधिकरण्यविरहादित्यत आह—**तथा चेति ।** हेतुसमानाधिकरणत्वेन साध्याभावे विशेषिते इत्यर्थः । तत्कूटेति । व्यधिकरणधर्मावच्छिन्नसाध्याभावकूटेत्यर्थः । तादृशाभावम्=व्यधिकरणधर्मावच्छिन्नाभावम् । इत्थं च=साध्याभावे हेतुसामानाधिकरण्यनिवेशे च । व्यतिरेकिणि=वह्निमान् धूमादित्यादौ, अपिना केवलान्वयिनः संग्रहः । अयमाशयः—वृत्तिमद्वृत्तिपदाप्रवेशे घटत्वावच्छिन्नवह्न्यभावकूटाधिकरणपर्वतादि-निरूपितवृत्तित्वस्यैव धूमे सत्त्वेनासम्भव इत्यतस्तदुपादानम् । तथा च तादृशवृत्तित्वसामान्याभावस्य हेतुतावच्छेदकसम्बन्धेन वृत्तिमद्वृत्तित्वाभावेन न लक्षणघटकत्वम्, अपि तु व्यधिकरणधर्मावच्छिन्नतादृशवृत्तित्वाभावस्यैवेति न दोष इति ।

अथैवं साध्यतावच्छेदके प्रतियोगिताव्यापकत्वनिवेशो व्यर्थः, घटावृत्तित्वावच्छिन्नाभाव-पटावृत्तित्वावच्छिन्नाभावानां हेतुसामानाधिकरण्यविरहेण लक्षणाघटकतया पृथिवीत्वाभाववान् जलत्वादित्यादावव्याप्तिविरहादित्यत आह—**यथा चैवमिति । तथोपपादितमिति ।** पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादावति-

व्याप्तिः, जातित्वावच्छिन्नाभावस्य साधनसामानाधिकरण्यविरहेण लक्षणाघटकत्वेपि जलासमवेततेजोसमवेताद्यभावानां प्रत्येकं हेतुसमानाधिकरणतया तत्कूटाधिकरणे सामान्यादौ हेतोरवृत्तित्वादित्यस्योपपादितत्वादिति भावः।

## ❀ जागदीशी ❀

यद्यपि हेतुसमानाधिकरणत्वेन साध्याभावानां निवेशे तादृशसाध्याभावकूटवद्वृत्तित्वत्वे प्रतियोगिताऽव्यापकत्वस्योपादानं विफलम्, वह्निमान् धूमादित्यादौ आलोकावृत्तित्वावच्छिन्नाभावमादायाऽव्याप्तिप्रसङ्गस्य तादृशाभावे हेतुसमानाधिकरणसाध्याभावकूटाधिकरणवृत्तितात्वव्यापकप्रतियोगिताकत्वाभावादेव व्युदासात्। न चात्र कल्पे तादृशवृत्तित्वत्वस्य प्रतियोगिताऽव्यापकत्वदलं न देयमेवेति वाच्यम्, तथा सति साधनसमानाधिकरणसाध्याभावकूटाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकस्य द्रव्यवृत्तित्वाभावस्यैव स्पर्शवदन्यत्वहेतावसत्त्वाद् अग्रे भूतत्वमूर्त्तत्वेत्यादिनातिव्याप्तेरसङ्गतत्वापत्तेः, तथापि वृत्तित्व-आलोकान्यत्वोभयत्वावच्छिन्नाभावस्यापि हेतुसमानाधिकरणसाध्याभावकूटाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकस्य धूमहेतावसत्त्वेन तमादायाऽव्याप्तिवारकत्वेन तस्य सार्थक्यम्। न च पर्वतवृत्तित्व-पर्वतान्यवृत्तित्वोभयत्वावच्छिन्नाभावमादायाऽव्याप्तिवारणार्थं व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन प्रतियोगितावश्यं विवक्षणीया, तत एवोक्ताभावस्य व्युदास इति वाच्यम्, पर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयत्वावच्छिन्नाभाववारणाय वृत्तित्वपर्याप्तव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनैव प्रतियोगिताया विशेषणीयत्वात्, तादृशप्रतियोगिताकत्वस्य च वृत्तित्व-आलोकान्यत्वोभयाभावेपि सत्त्वादिति ध्येयम्।

## ❀ दीपिका ❀

अथ साध्याभावे हेतुसामानाधिकरण्यप्रवेशे तादृशकूटाधिकरणवृत्तित्वत्वसमनियतप्रतियोगिताकाभावघटकप्रतियोगिताव्यापकत्वदलस्य वैफल्यमाशङ्कते—**यद्यपीति**। तथापीत्यनेन सम्बन्धः। वैफल्यमेवोपपादयति—**वह्निमानित्यादि**। तादृशाभावे = आलोकावृत्तिसामान्याभावे। तथा च आलोकावृत्तिसामान्याभावीयप्रतियोगिताया आलोकवृत्तित्वेसत्त्वेन तत्र च घटत्वावच्छिन्नवह्न्यभावकूटाधिकरणीभूतालोकनिरूपितवृत्तितात्वस्य सत्त्वेन आलोकावृत्तिसामान्याभावस्य तादृशवृत्तिता-

त्वव्यापकत्वाभावेन लक्षणाघटकत्वेन न तादृशाभावमादायाव्याप्तिवारणाय प्रतियोगिताव्यापकत्वनिवेशः समुचित इति भावः। न चेष्टापत्तिरित्याह—नचेति। अत्र कल्पे = साध्याभावे हेतुसामानाधिकरण्यनिवेशकल्पे। इष्टापत्तिं परिहरति—तथा सतीति। प्रतियोगिताव्यापकत्वाप्रवेशे इत्यर्थः। तथा च भूतत्वमूर्त्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यादौ द्रव्यवृत्तित्वाभावस्य हेतुसमानाधिकरणतादृशान्यतराभावाभावाधिकरणवृत्तितात्वव्यापकप्रतियोगिताकत्वेन लक्षणघटकतया तस्य च द्रव्यवृत्तित्वाभावस्य यावदन्तर्गतस्य हेतावसत्त्वेन तथाऽपीत्यादिना दीधितिकृतोतिव्याप्तिदानमसङ्गतं स्यादिति तत्त्वम्। प्रतियोगिताव्यापकत्वदलं सार्थकयति—तथापीति। तमादाय = वृत्तित्व-आलोकान्यत्वोभयाभावमादाय। तस्य = प्रतियोगिताव्यापकत्वदलस्य। अयमाशयः—तादृशवृत्तितात्वे प्रतियोगिताव्यापकत्वाप्रवेशे वह्निमान् धूमादित्यादावव्याप्तिः, घटत्वावच्छिन्नवह्न्यभावकूटाधिकरणनिरूपितवृत्तितात्वव्यापकप्रतियोगिताकस्य वृत्तित्व-आलोकभेदोभयाभावस्य यावदन्तर्गतस्य धूमेसत्त्वात्। तन्निवेशे तु तादृशवृत्तितात्वे निरुक्तोभयाभावीयप्रतियोगिताव्यापकत्वं नास्ति, निरुक्तोभयाभावीयप्रतियोगिताया आलोकभेदेऽपि सत्त्वेन तत्र निरुक्तवृत्तितात्वविरहादिति न निरुक्तोभयाभावस्य यावदन्तर्गतत्वमिति। अन्यथैव निरुक्तोभयाभावस्य लक्षणाघटकत्वमाशङ्कते—नचेति। वाच्यमित्यनेनान्वयः। तत एव = प्रतियोगितायां व्यासज्यवृत्तिधर्मानवच्छिन्नत्वनिवेशादेव। उक्ताभावस्य = वृत्तित्व-आलोकभेदोभयाभावस्य। व्युदास इति। निरुक्तोभयाभावस्य व्यासज्यवृत्त्युभयत्वावच्छिन्नप्रतियोगिताकत्वादिति शेषः। एवं च तादृशवृत्तितात्वे प्रतियोगिताव्यापकत्वनिवेशो विफल इति भावः। ननु प्रतियोगितायां व्यासज्यवृत्तिधर्मानवच्छिन्नत्वानिवेशे पर्वतवृत्तित्व-पर्वतान्यवृत्तित्वोभयाभावमादायासम्भवसम्भवेऽव्याप्तिकथनमनुचितम् इति चेन्न, तद्धूमप्रतियोगिकसंयोगेन धूमहेतुकस्थले तादृशसम्बन्धेन यो वृत्तिमान् तद्वृत्तियावदभावस्य हेतौ सत्त्वेन लक्षणसमन्वयसंभवादिति। तादृशप्रतियोगिताकस्य = वृत्तित्वपर्याप्तव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकस्य। एवं च पर्वतवृत्तित्व-पर्वतान्यवृत्तित्वोभयाभावस्य वृत्तित्वपर्याप्तोभयत्वावच्छिन्नप्रतियोगिताकत्वेनैव लक्षणाघटकत्वसम्भवेन वृत्तित्व-आलोकभेदोभयाभावस्य च वृत्तित्वपर्याप्तोभयत्वानवच्छिन्नप्रतियोगिताकत्वेन लक्षणघटकतया तादृशोभयाभावमादायाव्याप्तिवारणाय तादृशवृत्तितात्वे प्रतियोगिताव्यापकत्वमवश्यं निवेश्यमिति भावः। वृत्तित्वपर्याप्तव्यासज्यवृत्तीत्यत्र वृत्तित्वपर्याप्तत्वविशेषणं तु अखण्डाभावघटकतया

सार्थकं बोध्यम्। ननु साध्याभावकूटवद्वृत्तित्वत्वेन पर्वतवृत्तित्व-पर्वतान्यवृत्तित्वोभयाभावमादायाव्याप्तिरिति चेन्न, तादृशव्यासज्यवृत्तिधर्मानवच्छिन्नत्वपदेन तादात्म्यसम्बन्धेन तादृशव्यासज्यवृत्तिधर्मविशिष्टान्यत्वस्यैव विवक्षितत्वात्, निरुक्ताभावप्रतियोगित्वस्य प्रतियोग्यंशे प्रकारीभूततादृशधर्मस्वरूपत्वादिति विभावनीयम्।

साध्याभावे हेतुसामानाधिकरण्यप्रवेशेपि कूटघटितलक्षणस्यातिव्याप्तिमाह–दीधितौ—**तथापि भूतत्वेति**। दीधितौ—तस्य = स्पर्शवदन्यत्वहेतोः। एवं च हेतुसमानाधिकरणो यो भूतत्वमूर्त्तत्वोभयघटितसाध्याभावसमुदायस्तदधिकरणं पृथिव्यादिचतुष्टयं तन्निरूपितवृत्तित्वाभावस्य स्पर्शवदन्यत्वहेतौ सत्त्वादतिव्याप्तिरिति भावः।

## ❀ जागदीशी ❀

भूतत्वमूर्त्तत्वान्यतरप्रतियोगिकाभावस्य केवलान्वयित्वात्तत्र साध्ये स्पर्शवदन्यत्वादिकं सद्धेतुरेवेत्यत उक्तम्—अन्यतरत्वेनेति। तादृशेति। हेतुसमानाधिकरणो यो भूतत्वमूर्त्तत्वोभयघटितसाध्याभावस्तोमस्तद्वतीत्यर्थः। पृथिव्यादाविति। आदिना जलतेजोनिलानां परिग्रहः। अत्र भूतत्वं विशेषगुणवत्त्वे सति आत्मभिन्नत्वम्, न तु बहिरिन्द्रियग्राह्यजातीयविशेषगुणवत्त्वम्। मूर्त्तत्वमपि स्पर्शवन्मनोन्यतरत्वं जातिविशेषो वा, न त्ववच्छिन्नपरिमाणवत्त्वम्, तथा सति मनःपरिमाण-शब्दयोरेव साधनसमानाधिकरणतादृशसाध्याभावयोरेकाधिकरण्याप्रसिद्ध्यातिव्याप्त्यसम्भवादिति द्रष्टव्यम्।

## ❀ दीपिका ❀

ननु भूतत्वमूर्त्तत्वान्यतराभावस्य साध्यत्वेपि दोषसम्भवेन्यतरत्वावच्छिन्नपर्यन्तानुधावनं व्यर्थमित्यत आह—**भूतत्वेत्यादि**। तथा च तादृशान्यतर-गुणत्वोभयाभावस्यापि तादृशान्यतरप्रतियोगिकतया तस्य च सर्वत्र विद्यमानत्वेन स्पर्शवदन्यत्वे सद्धेतुत्वमेवेति व्यभिचारित्वसम्पत्तयेन्यतरत्वेनानुधावनमिति भावः।

ननु भूतत्वं बहिरिन्द्रियग्राह्यजातिमद्विशेषगुणवत्त्वम्, मूर्त्तत्वं च अवच्छिन्नपरिमाणवत्त्वम्। एवं च हेतुसमानाधिकरणसाध्याभावकूटान्तर्गतमनःपरिमाण-शब्दयोरेकाधिकरण्याप्रसिद्ध्यैव नातिव्याप्तिरित्यत आह—**अत्र भूतत्वमिति**।

एवं च स्पर्शवन्मनोन्यतरत्वरूपमूर्त्तत्वस्य आत्मभिन्नत्वविशेषितविशेषगुणवत्त्वरूपभूतत्वस्य चैकाधिकरणं पृथिव्यादिचतुष्टयमेव प्रसिद्ध्यतीति भावः। तथा सति=बहिरिन्द्रियग्राह्यजातिमद्विशेषगुणवत्त्वस्य भूतत्वपदार्थत्वे अवच्छिन्नपरिमाणवत्त्वस्य मूर्त्तत्वपदार्थत्वे चाभ्युपगम्यमाने सति।

❀ दीधितिः ❀

**किंच महाकालान्यत्वादिसाध्यके व्यभिचारिणि कालिकविशेषणताविशेषेण हेतावतिव्याप्तिः, तादृशसाध्याभावसमुदायवति महाकाले तेन सम्बन्धेन वृत्तिमन्मात्रस्यैव वृत्तेः।**

❀ जागदीशी ❀

ननु साधनसमानाधिकरणयत्किंचिद्व्यक्तिवृत्तिसाध्याभावकूटस्य निवेशान्नैष दोषः, क्वचिदपि स्पर्शवद्भिन्ने भूतत्वमूर्त्तत्वोभययोरसत्त्वात्। वस्तुतः समनियताभावानामैक्यमते भूतत्वमूर्त्तत्वान्यतरत्वावच्छिन्नाभावो भूतत्वमनस्त्वान्यतरत्वावच्छिन्नस्य मूर्त्तत्वगगनत्वान्यतरत्वावच्छिन्नस्य चाभावः। तथा च मनस्त्वगगनत्वयोरपि भूतत्वमूर्त्तत्वान्यतरत्वावच्छिन्नाभावस्य साध्यस्याभावत्वात् हेतुसमानाधिकरणतदुभयघटितकूटाधिकरणाप्रसिद्ध्यैव नोक्तस्थलेतिव्याप्तिः। अस्तु वा यावन्ति निरुक्तसाध्याभावत्वानि तावतां प्रत्येकावच्छिन्नस्य यदधिकरणं तद्वृत्तित्वाभावा यावन्तो वृत्तिमद्वृत्तयस्तद्वत्त्वमेव व्याप्तिः। तथाच भूतत्वमूर्त्तत्वान्यतराभावाभावत्वावच्छिन्नस्याधिकरणे मनस्येव हेतोः सत्त्वान्नातिव्याप्तिरत आह—किञ्चेति।

❀ दीपिका ❀

अथ 'किं च महाकालान्येत्यादि'-दीधितिग्रन्थावतरणाय पूर्वोक्तामतिव्याप्तिमुद्धरति—**ननु साधनेति**। एवं च कस्मिंश्चिदपि हेत्वधिकरणे गगनादौ भूतत्वमूर्त्तत्वोभयघटितसाध्याभावकूटस्य सत्त्वं नास्ति, अपि तु अन्यतरघटितसाध्याभावकूटस्यैवेति तदधिकरणे गगने मनसि वा स्पर्शवदन्यत्वहेतोः सत्त्वान्नातिव्याप्तिः। समनियताभावैक्यमतमालम्ब्यातिव्याप्तिं निराकरोति—**वस्तुत इति**। **तथा चेति**। भूतत्वमूर्त्तत्वान्यतरत्वावच्छिन्नाभावस्य भूतत्वमनस्त्वान्यतरत्वावच्छिन्ना-

भावस्वरूपत्वे मूर्त्तत्वगगनत्वान्यतरत्वावच्छिन्नाभावस्वरूपत्वे चेत्यर्थः, तेषां समनियतत्वादिति शेषः। **तदुभयेति**। गगनत्वमनस्त्वोभयेत्यर्थः। उक्तस्थले=भूतत्वमूर्त्तत्वान्यतरत्वावच्छिन्नाभाववान् स्पर्शवदन्यत्वादित्यत्र। समनियताभावानामनैक्येपि दोषं निराकरोति—**अस्तु वेति**। **निरुक्तेति**। साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकसमनियतप्रतियोगिताकेत्यर्थः। **तथा चेति**। एतादृशस्य व्याप्तित्वे चेत्यर्थः। एवं च यावत्साध्याभावत्वान्तर्गत-भूतत्वमूर्त्तत्वान्यतराभावाभावत्वावच्छिन्नाधिकरणे गगने मनसि च स्पर्शवदन्यत्वहेतोः सत्त्वान्नातिव्याप्तिरिति भावः।

## ❀ जागदीशी ❀

**ननु भूतत्वमूर्त्तत्वान्यतरत्वावच्छिन्नाभावस्याभावोनुगतव्यवहारादतिरिक्त एव, न तु भूतत्वमूर्त्तत्वोभयस्वरूपः, तथा च साधनसमानाधिकरणतादृशाभाववति गगने मनसि वा हेतोः सत्त्वान्नातिव्याप्तिरत आह—किंचेत्यपि वदन्ति। गुरुचरणास्तु ननु यावन्तो हेतुसमानाधिकरणाः पदार्थाः साध्यवद्वृत्तित्वव्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभाववन्तस्तावत्पदार्थकूटाधिकरणवृत्तित्वाभावा वृत्तिमद्वृत्तयो यावन्तस्तद्वत्त्वं विवक्षितम्। तथा च हेतुसमानाधिकरणयोर्गगनत्वमनस्त्वयोरेव तादृशपदार्थयोरेकाधिकरणाप्रसिद्ध्या नातिव्याप्तिः। निरुक्तोभयाभाववतां घटत्वपटत्वादीनामेकाधिकरणाप्रसिद्ध्या वह्निमान् धूमादित्यादावव्याप्तेर्हेतुसामानाधिकरण्योपादानमित्यतः** किञ्चेतीति प्राहुः।

## ❀ दीपिका ❀

मतान्तरेण किंचेत्यादिदीधितिग्रन्थमवतारयति—**नन्विति**। तथा च गगने मनसि च भूतत्वमूर्त्तत्वोभयाभावसत्त्वेपि तादृशान्यतरत्वावच्छिन्नाभावो नास्तीति प्रतीतिसत्त्वात्तादृशान्यतराभावाभावो न तादृशोभयस्वरूप इति तत्त्वम्। **तादृशाभावेति**। भूतत्वमूर्त्तत्वान्यतराभावाभावेत्यर्थः। तादृशपदार्थयोः=हेतुसमानाधिकरणसाध्यवद्वृत्तित्व व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभाववतोः। एतस्मिन् कल्पे हेतुसामानाधिकरण्यनिवेशफलमाह—**निरुक्तोभयाभावेति**। साध्यवद्वृत्तित्व-व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभावेत्यर्थः। तथा च हेतुसामानाधिकरण्याप्रवेशे घटत्व-पटत्वादीनां कूटान्तर्गततया तत्कूटाधिकरणाप्रसिद्ध्या

वह्निमान् धूमादित्यादावव्याप्तिः। तन्निवेशे तु घटत्व-पटत्वादीनां हेतुसामानाधिकरण्यविरहेण न लक्षणघटकत्वमिति भावः।

अथात्रासंभवसंभवेऽव्याप्तिकथनमसङ्गतमिति चेन्न, स्वरूपसम्बन्धेन साध्यवद्वृत्तित्वोक्तौ तु अभावे स्वरूपसम्बन्धेन वृत्तिमत्त्वविशेषणदानाद् वाच्यं ज्ञेयत्वादित्यत्राव्याप्त्यभावात्। वह्निमान् धूमादित्यादावव्याप्तिस्तु घटाधिकरणत्व-पटाधिकरणत्वमादायैवेति ध्येयम्।

अत्र साध्यवद्वृत्तित्वानुक्तौ धूमसामान्याभावस्य व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वेन लक्षणाघटकतया व्यधिकरणधर्मावच्छिन्नधूमाभावमादाय धूमवान् वह्नेरित्यत्रातिव्याप्तिः। तन्निवेशे तु धूमसामान्याभावस्य साध्यवद्वृत्तित्वाभावप्रयुक्तोभयाभावसत्त्वेन लक्षणघटकत्वमिति। व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोपादानं व्यधिकरणधर्मावच्छिन्नाभावसङ्ग्रहायेति।

अथ साध्यवद्वृत्तित्व-व्यधिकरणधर्मावच्छिन्नाभावभिन्नत्वोभयाभाववत्पदार्थकूटवत्त्वमेव लक्षणं कुतो न कृतम्? कूटवत्ता च हेतौ स्वरूपसम्बन्धेन, सद्धेतुस्थले तादृशोभयाभाववन्तो व्यधिकरणधर्मावच्छिन्नाभावा एव, तत्कूटवत्त्वस्य हेतौ सत्त्वाल्लक्षणसमन्वयः। असद्धेतुस्थले व्यभिचारनिरूपकाधिकरणीभूतायोगोलकादिभेदाभावस्यापि तादृशाभावतया तद्वत्त्वस्य वह्न्यादिहेतावसत्त्वेन नातिव्याप्तिः। तदुभयाभाववत्पदार्थे हेतुसामानाधिकरण्यमपि स्वरूपेण बोध्यम्। तेन घटत्वादिकमादाय नाव्याप्तिः, साध्यवद्वृत्तित्वमपि स्वरूपेण देयमिति चेन्न, गगनाभावभिन्नं गगनाभावात्, वाच्यत्वभिन्नं वाच्यत्वादित्यादावतिव्याप्त्यापत्तेः।

दीधितौ—**महाकालान्यत्वेति। तादृशेति।** साध्यतावच्छेदकसमनियतप्रतियोगिताकेत्यर्थः। तेन=कालिकेन। एवं च महाकालान्यो घटादित्यादौ महाकालभेदाभावात्मकसाध्याभावकूटाधिकरणीभूत महाकाल-निरूपित कालिकसम्बन्धावच्छिन्नवृत्तित्वस्यैव सर्वत्र सत्त्वेन तादृशवृत्तित्वसामान्याभावस्य वृत्तिमद्वृत्तित्वाभावेन लक्षणाघटकतया व्यधिकरणधर्मावच्छिन्नतादृशवृत्तित्वाभावस्य हेतौ सत्त्वेनातिव्याप्तिरिति भावः।

❀ जागदीशी ❀

कालान्यत्वसाध्यकस्य कालिकसम्बन्धेन हेतोर्विरुद्धत्वादेव तत्र नातिव्याप्तिरत उक्तम्—महेति। तथा च महाकालान्यो घटादित्यादावित्यर्थः।

वृत्तिमन्मात्रस्यैवेति। तथा च महाकालवृत्तित्वसामान्याभावस्य वृत्तिमद्वृत्तित्वाभावात्तद्व्यधिकरणधर्मावच्छिन्नाभावस्य च यावत एव हेतौ सत्त्वादतिव्याप्तिरिति भावः।

## ❀ दीपिका ❀

ननु कालभेदस्यापि साध्यतायामतिव्याप्तिसम्भवे महाकालभेदपर्यन्तानुसरणं व्यर्थमित्यत आह—**कालान्यत्वेति**। तथा च कालभेदसाध्यकस्थले घटादेर्विरुद्धत्वेन हेतौ साध्यसामानाधिकरण्यनिवेशेनैवातिव्याप्तिवारणम्। महाकालान्यत्वसाध्यके तु खण्डकालमादाय हेतौ साध्यसामानाधिकरण्यमिति भावः।

## ❀ जागदीशी ❀

अत्र केचित्—सार्वभौममते सामानाधिकरण्यस्याव्याप्यवृत्तित्वात् खण्डकालाद्यवच्छेदेन पटादावेव वृत्तिमति वर्तमानस्य महाकालवृत्तित्वसामान्याभावस्य यावद्धेत्वधिकरणावच्छेदेन हेतावसत्त्वान्नातिव्याप्तिः, वृत्तिमद्वृत्तयो यावन्तस्तादृशवृत्तित्वाभावा यावद्धेत्वधिकरणावच्छेदेन तद्वत्त्वस्य विवक्षितत्वात्। अतएव तद्रूपं गुणत्वादित्यादौ तद्रूपभिन्नसमवेतत्वसमनियतप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वेपि नातिव्याप्तिः, तद्रूपावच्छेदेन गुणत्वादावेव वर्तमानस्य तद्रूपभिन्नसमवेतत्वसामान्याभावस्य हेत्वधिकरणगुणान्तरावच्छेदेन हेतावसत्त्वादित्याहुः। तच्चिन्त्यम्।

## ❀ दीपिका ❀

महाकालान्यो घटादित्यत्रातिव्याप्तिमुद्धर्तुं केषांचिन्मतमाह—**अत्र केचिदिति**। अव्याप्यवृत्तित्वात्=स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वात। तादृशवृत्तित्वाभावाः=साध्यातावच्छेदकसमनियतप्रतियोगिताकाभावकूटवद्वृत्तित्वत्वसमनियतप्रतियोगिताकाभावाः। तद्वत्त्वस्य=तादृशवृत्तित्वाभाववत्त्वस्य। एवं च महाकालान्यो घटादित्यत्र साध्याभावकूटाधिकरणीभूत-महाकालनिरूपितवृत्तित्वाभावस्य खण्डकालावच्छेदेन पटादौ प्रसिद्धस्य यावद्धेत्वधिकरणावच्छेदेन घटादिहेतावसत्त्वेन नातिव्याप्तिः। प्रतीतिबलाद् व्याप्यवृत्तेरपि अवच्छेदकत्वमभ्युपेत्य यावद्धेत्वधिकरणावच्छेदेनेत्यस्य निवेशः, अन्यथा सद्धेतुमात्रे व्यधिकरणधर्मावच्छिन्नतादृशवृत्तित्वाभावस्य व्याप्यवृत्तितया हेत्वधिकरणानवच्छिन्नत्वेनासम्भवः स्यादिति ध्येयम्। अन्येतु

अवच्छिन्नत्व-यावद्धेत्वधिकरणानवच्छिन्नत्वोभयाभावस्य विवक्षणाद् व्याप्यवृत्तेरव-च्छेदकानङ्गीकारेपि न क्षतिः। यावत्पदोपादानाद् द्रव्यं सत्त्वादित्यत्र द्रव्यावच्छेदेन द्रव्यान्यवृत्तित्वाभावस्य सत्त्वेपि न क्षतिः, तस्य यावद्धेत्वाधिकरणानवच्छिन्नत्वा-त्वादित्याहुः।

नन्वत्र कल्पे वह्निमान् धूमादित्यादावव्याप्तिः, धूमावयवावच्छेदेन साध्याभाव-कूटवत्संयुक्तत्वाभावस्य वृत्तिमति धूमादौ प्रसिद्धस्य यावद्धेत्वधिकरणावच्छेदेन हेताव-सत्त्वात्। न च हेतुतावच्छेदकसम्बन्धेन यत्किंचिद्धेत्वधिकरणावच्छिन्नत्वेन साध्या-भावकूटवद्वृत्तित्वाभावस्य विशेषणीयतया तादृशवृत्तित्वाभावो न लक्षणघटक इति वाच्यम्, धूमान्तरसंयुक्तस्वावयवावच्छेदेन वृत्तिमति यत्किञ्चिद्धूमे प्रसिद्धस्य तादृशवृ-त्तित्वसामान्याभावस्य यावद्धेत्वधिकरणावच्छेदेन हेतावसत्त्वादव्याप्तितादवस्थ्यादि-ति चेद् अत्र नव्याः—हेतुतावच्छेदकसम्बन्धेन यत्स्वाधिकरणं तदवच्छेदेन स्वस्मिन् वर्तमाना हेतुसमानाधिकरणसमुदायाधिकरणवृत्तितात्वसमनियतप्रतियोगिताका याव-न्तोभावा यावद्धेत्वधिकरणावच्छेदेन हेतौ तद्वत्त्वस्य विवक्षणान्न दोषः कोपि। स्वपदं वृत्तिमत्त्वेनाभिमतपरमित्याहुः। अतएव = यावद्धेत्वधिकरणावच्छेदेन हेतौ तादृशवृत्तित्वाभाववत्त्वस्य विवक्षणादेव। **नातिव्याप्तिरिति**। अन्यथा तद्रूपं गुण-त्वादित्यत्र तद्रूपत्वाभावकूटाधिकरणनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वस्यैव सम-वायेन वृत्तिमति सत्त्वेन यावदन्तर्गतस्य व्यधिकरणधर्मावच्छिन्नतादृशवृत्तित्वाभावस्य समवायेन वृत्तिमति वर्तमानस्य हेतौ सत्त्वादतिव्याप्तिः। तथा विवक्षणे तु तादृशवृ-त्तित्वसामान्याभावस्य तद्रूपावच्छेदेन गुणत्वादौ प्रसिद्धस्य रसाद्यवच्छेदेन हेता-वसत्त्वान्नातिव्याप्तिरिति भावः।

## ❋ जागदीशी ❋

यत्तु वृत्तिमद्वृत्तय इत्यस्य वृत्तिमद्वृत्तित्व-साध्यवद्वृत्तित्वप्रतियो-गिकत्वोभयानधिकरणत्वमर्थः। तथा च महाकालवृत्तित्वसामान्याभाव-स्यापि साध्यवद्वृत्तित्वप्रतियोगिकत्वविरहेण निरुक्तोभयानधिकरणस्य हेतावसत्त्वान्महाकालान्यो घटादित्यादौ नातिव्याप्तिः। न च महाकालवृ-त्तित्वत्वापेक्षया लघोः कालिकसम्बन्धावच्छिन्नवृत्तित्वत्वस्यैव महाकाल-वृत्तित्वाभावप्रतियोगितावच्छेदकतया महाकालवृत्तित्वसामान्याभावस्य न निरुक्तवृत्तिमद्वृत्तित्वं वृत्तिमदवृत्तेस्तस्य साध्यवद्वृत्तित्वप्रतियोगिकत्वा-

दिति वाच्यम्, यावन्ति कालिकसम्बन्धेन महाकालवृत्तित्वानि तावदन्यतमत्वावच्छिन्नाभावस्य तावद्धर्मिकयत्किंचिद्बुद्धिविशेष्यत्वावच्छिन्नाभावस्य वा निरुक्तोभयानधिकरणस्य हेतावसत्त्वेन तथाप्यतिव्याप्त्यसम्भवात्, कालिकसम्बन्धावच्छिन्नवृत्तित्वत्वमपेक्ष्य तावदन्यतमत्वलक्षणाखण्डभेदस्यैव लाघवेन प्रतियोगितावच्छेदकत्वौचित्यादिति । तन्मन्दम् । तथापि नित्यज्ञानभिन्नं घटत्वादित्यादौ विषयितासम्बन्धेन हेतावतिव्याप्तेर्वज्रलेपत्वात्, नित्यज्ञानविषयत्वसामान्याभावस्याप्रसिद्धत्वात् व्यधिकरणधर्मावच्छिन्नतादृशविषयत्वाभावस्य च यावदेव हेतौ सत्त्वात् ।

## ❀ दीपिका ❀

महाकालान्यो घटादित्यत्रातिव्याप्तिं वारयतामन्येषां मतन्दूषयितुमुपन्यस्यति—**यत्त्विति** । सद्धेतुस्थले व्यधिकरणधर्मावच्छिन्नतादृशवृत्तित्वाभावे साध्यवद्वृत्तित्वप्रतियोगिकत्वसत्त्वेपि वृत्तिमदवृत्तित्वविरहेणोभयानधिकरणत्वसत्त्वाल्लक्षणसमन्वयः। तथा च = वृत्तिमद्वृत्तय इत्यस्य तादृशोभयानधिकरणत्वार्थकत्वे । एवं च महाकालान्यो घटादित्यत्र साध्याभावकूटाधिकरण-महाकाल-निरूपितवृत्तित्वसामान्याभावे वृत्तिमदवृत्तित्वसत्त्वेपि साध्यवद्वृत्तित्वप्रतियोगिकत्वविरहेणोभयानधिकरणत्वसत्त्वेन लक्षणघटकस्य तादृशवृत्तित्वसामान्याभावस्य हेतावसत्त्वान्नातिव्याप्तिरिति भावः । अतिव्याप्तिं शङ्कते—**न चेति** । **निरुक्तेति** । यत्तुमताभिप्रायकेत्यर्थः । तस्य = महाकालवृत्तित्वसामान्याभावस्य । तथा च महाकालभेदाभावकूटाधिकरण-महाकाल-वृत्तित्वाभावे कालिकसम्बन्धावच्छिन्नवृत्तितात्वावच्छिन्नप्रतियोगिताके वृत्तिमदवृत्तित्वस्य साध्यवद्वृत्तित्वप्रतियोगिकत्वस्य च सत्त्वेन न तादृशाभावस्य लक्षणघटकत्वम्, अपि तु व्यधिकरणधर्मावच्छिन्नमहाकालवृत्तित्वाभावस्यैव, तस्य च हेतौ सत्त्वादतिव्याप्तिरिति भावः । समाधत्ते—**यावन्तीति** । एवं च साध्याभावकूटाधिकरणवृत्तितायां यावत्त्वं निवेश्य यावन्ति साध्याभावकूटाधिकरणवृत्तित्वानि तावदन्यतमत्वावच्छिन्नाभावे वृत्तिमदवृत्तित्व-साध्यवद्वृत्तित्वप्रतियोगिकत्वोभयानधिकरणत्वविवक्षणेन महाकालनिरूपितानि यावन्ति कालिकसम्बन्धावच्छिन्नवृत्तित्वानि तावदन्यतमत्वावच्छिन्नाभावस्य घटवृत्तित्वाभावघटितस्य हेतावसत्त्वेन नातिव्याप्तिरिति भावः । लाघवमभिप्रेत्याह—**तद्धर्मिकेति** । ननु तावदन्यतमाभावीयप्रतियोगितावच्छेदकत्वमपि लाघवात् कालिकसम्बन्धावच्छिन्नवृत्तितात्वे एवाभ्युपेयते, तथा च कथमतिव्याप्तिनिरास इत्यत आह—**कालिकसम्बन्धेति** । तन्मतं

दूषयति—तन्मन्दमिति। दूषणमेवाह—तथापीति। एवं च नित्यज्ञानभिन्नं घटत्वादित्यत्र साध्याभावकूटाधिकरणे नित्यज्ञाने विषयितासम्बन्धेन सकलस्यैव वस्तुनः सत्त्वेन ईश्वरज्ञाननिरूपितविषयित्वसम्बन्धावच्छिन्नवृत्तित्वाभावस्य व्यधिकरणधर्मावच्छिन्नस्यैव प्रसिद्धतया तस्य च घटत्वादिहेतावपि सत्त्वेनातिव्याप्तेरनिराकरणादिति तत्त्वम्।

## ❀ जागदीशी ❀

**नव्यास्तु साधनसमानाधिकरणा व्याप्यवृत्तयो यावन्तः साध्याभावाः साध्यसामानाधिकरण्यापन्नतावत्कूटाधिकरणवृत्तित्वाभावो विवक्षितः। तथा च व्यभिचारिमात्र एव साध्यसामान्याभावादिघटितकूटस्य साध्यसामानाधिकरण्याप्रसिद्ध्यानातिप्रसङ्गः। यावन्तस्तादृशाः साध्याभावास्तत्कूटाधिकरणस्य वा साध्यवत्त्वं विवक्षितं लाघवात्। तादृशवृत्तित्वाभावस्य तु यावत्त्वं वृत्तिमद्वृत्तित्वं वानपेक्षितम्, वैयर्थ्यात्। इत्थं च साधनसमानाधिकरणा यावन्तस्तादृशाः साध्याभावाः साध्याश्रयीभूततावत्कूटाधिकरणवृत्तित्वमपि लक्षणं साधीय इति प्राहुः।**

**वस्तुतः पूर्वलक्षण इवात्रापि वृत्तिमद्वृत्तयो यावन्तः साध्याभावकूटवद्वृत्तित्वाभावास्तद्वत्त्वावच्छिन्नाधिकरणतासामान्यकतद्धर्मवत्त्वमेव व्याप्तिर्वाच्या। तत्र च वृत्तिमद्वृत्तित्वं साध्याभाववद्वृत्तित्वं च दैशिकविशेषणतयैव वक्तव्यम्। अतो न कोपि दोषः पदमादधातीत्यवधातव्यमिति दिक्।**

## ❀ दीपिका ❀

नव्यानां मते कूटघटितलक्षणं परिष्कुरुते—**नव्यास्त्विति**। लक्षणसमन्वयश्चेत्थम्—हेत्वधिकरण-महानसादि-वृत्तयो व्याप्यवृत्तयो यावन्तो घटत्वेन वह्न्यभावादयः वह्निसमानाधिकरणतावत्साध्याभावकूटाधिकरणनिरूपितवृत्तित्वाभावो व्यधिकरणधर्मावच्छिन्नप्रतियोगिताको धूमादौ हेतौ वर्तते। धूमवान् वह्नेरित्यादौ व्यभिचारिणि साधनसमानाधिकरणयावदन्तर्गतधूमसामान्याभावे साध्यीभूतधूमसामानाधिकरण्यविरहेण नातिव्याप्तिः। महाकालान्यो घटादित्यत्र घटसमानाधिकरणे महाकालभेदसामान्याभावे महाकालभेदसामानाधिकरण्यविरहेणातिव्याप्तिनिरास इति बोध्यम्। तादृशयावत्साध्याभावे साध्यसामानाधिकरण्यनिवेशापेक्षया साध्याभाव-

कूटाधिकरणे साध्याधिकरणत्वविवक्षणे लाघवमनुस्मृत्याह—यावन्तः तादृशा इति। साधनसमानाधिकरणा व्याप्यवृत्तय इत्यर्थः। नव्यानां मते धूमसमान्याभावे साध्यसामानाधिकरण्यविरहादेवातिव्याप्तिवारणसम्भवे तादृशवृत्तित्वाभावे यावत्त्वं न निवेश्यम्। यावत्त्वानिवेशे च तादृशसाध्याभावकूटाधिकरणनिरूपितव्यधिकरणधर्मावच्छिन्नवृत्तित्वाभावस्य धूमादौ सत्त्वेन वह्निमान् धूमादित्यादावव्याप्त्यनवकाशे वृत्तिमद्वृत्तित्वविशेषणमपि न देयमित्याह—**तादृशवृत्तित्वाभावस्येति।** साध्याश्रयीभूततावत्साध्याभावकूटाधिकरणवृत्तित्वाभावस्येत्यर्थः। एतन्मते निष्कृष्टलक्षणस्वरूपमाह—**इत्थं चेति।** स्वमतमाह—**वस्तुत इति।** पूर्वलक्षणे=कूटाघटितलक्षणे। अत्रापि=कूटघटितलक्षणेपि। समन्वयप्रकारस्तु पूर्वोक्तदिशैव ज्ञेय इति।

❀ दीधितिः ❀

**एतेन साध्यतावच्छेदकाच्छिन्नव्यापकतावच्छेदकरूपावाच्छिन्नप्रतियोगिताकव्याप्यवृत्तिस्वसमानाधिकरणयावदभावाधिकरणवृत्तित्वाभावा वृत्तिमद्वृत्तयो यावन्तस्तद्वत्त्वं व्याप्तिः।**

❀ जागदीशी ❀

एतेनेति। महाकालान्यो घटादित्यादावतिव्याप्तिप्रसङ्गेनेत्यर्थः। परास्तमिति परेणान्वयः। अत्र वाच्यं ज्ञेयत्वात्, सत्तावान् द्रव्यत्वादित्यादौ नानाव्यक्तिवृत्तिसाध्यकसद्धेतौ तद्व्यक्तिवृत्तित्वविशिष्टसाध्याभावस्य तदन्यव्यक्तिवृत्तित्वविशिष्टसाध्याभावस्य च द्वयोः साधनसमानाधिकरणयोरेकाधिकरणाप्रसिद्ध्या साध्याधिकरणयत्किंचिद्व्यक्तिवृत्तिकूटाधिकरणवृत्तित्वसामान्याभावानां हेतावसत्त्वेन वाव्याप्तिरतः प्रतियोगिताकान्तं यावदभावविशेषणम्। विशिष्टसत्तावान् जातेरित्यादौ जातिसमानाधिकरणस्य साध्यीभूतसत्ताव्यापकतावच्छेदकरूपावच्छिन्नाभावस्य व्यधिकरणधर्मावच्छिन्नाभावत्वनियमाद् वृत्तिमद्वृत्तेस्तत्कूटाधिकरणवृत्तित्वाभावस्य यावत एव तत्र हेतौ सत्त्वादतिव्याप्तिरतः साध्यतावच्छेदकावच्छिन्नेति। तथा च गुणान्यत्वाभावकर्मान्यत्वाभावयोरप्युक्तरूपावच्छिन्नप्रतियोगिताकत्वात्तदुभयघटितकूटाधिकरणाप्रसिद्ध्यैव नातिव्याप्तिः।

❀ दीपिका ❀

अन्येषामपि लक्षणान्तरं दूषयितुमुपन्यस्यति-दीधितौ—**साध्यतावच्छेद-**

केत्यादि । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाः स्वसमानाधिकरणा यावन्तोभावाः तावत्साध्याभावाधिकरणवृत्तित्वाभावा वृत्तिमद्वृत्त-यो यावन्तस्तद्वत्त्वं व्याप्तिरित्यर्थः। स्वपदं हेतुपरम् । वह्निमान् धूमादित्यादौ तादृशा-भावा वह्नित्वेन घटाभावादयस्तावदधिकरणनिरूपितव्यधिकरणधर्मावच्छिन्नवृत्तित्वा-भाववत्त्वस्य हेतौ सत्त्वाल्लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ धूमसामान्याभावोपि यावदन्तर्गतस्तदधिकरणीभूतायोगोलकनिरूपितवृत्तित्वसामान्याभावस्य यावदन्त-र्गतस्य हेतावसत्त्वान्नातिव्याप्तिरपि ।

अथ व्याप्यवृत्तिस्वसमानाधिकरणयावदभावघटित एव लक्षणमस्तु यावदभावे प्रतियोगिताक्रान्तविशेषणं व्यर्थमित्यत आह—**अत्र वाच्यं ज्ञेयत्वादिति** । एका-धिकरणाप्रसिद्ध्याव्याप्तिरिति सम्बन्धः । एवं च प्रतियोगिताक्रान्ताप्रवेशे घटवृत्ति-त्वविशिष्टवाच्यत्वाभाव-घटान्यवृत्तित्वविशिष्टवाच्यत्वाभावयोरपि निरुक्तयावदन्तर्गत-योरेकाधिकरणाप्रसिद्ध्याव्याप्तिः । प्रकारान्तरेणाव्याप्तिमाह—**साधनाधिकरणेति** । तत्प्रवेशे तु घटवृत्तित्वविशिष्टवाच्यत्वाभाव-घटान्यवृत्तित्वविशिष्टवाच्यत्वाभावयोर्न यावदन्तर्गतत्वम्, तयोः साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वाभावात्, अपि तु वाच्यत्वत्वेन घटाभावादिरेव लक्षणघटकः तदधिकरणनिरूपितव्यधिकरण-धर्मावच्छिन्नवृत्तित्वाभावस्यैव वृत्तिमद्वृत्तित्वेन तस्य च हेतौ सत्त्वान्नाव्याप्तिः ।

नन्वेवमपि साध्यव्यापकतावच्छेदकरूपावच्छिन्नत्वमेव निवेश्यताम्, साध्यता-वच्छेदकावच्छिन्नत्वप्रवेशो व्यर्थ इत्यत आह—**विशिष्टसत्तावानिति** । एवं च साध्यतावच्छेदकावच्छिन्नत्वाप्रवेशे विशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्ताभावस्य जातिसमानाधिकरणत्वेपि साध्यीभूतसत्ताव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगि-ताकत्वाभावेन न लक्षणघटकत्वम्, अपि तु सत्तात्वेन घटाभावादेरेव, तदधिकरण-निरूपितव्यधिकरणधर्मावच्छिन्नवृत्तित्वाभावस्यैव वृत्तिमद्वृत्तित्वेन तस्य च जाति-हेतौ सत्त्वेनातिव्याप्तिः । तन्निवेशेतिव्याप्तिवारणमाह—**तथा चेति** । साध्यता-वच्छेदकावच्छिन्नत्वनिवेशे चेत्यर्थः । **उक्तरूपेति** । साध्यतावच्छेदकीभूतविशिष्ट-सत्तात्वावच्छिन्नव्यापकतावच्छेदकीभूतगुणान्यत्वत्वादिरूपेत्यर्थः । **तदुभयेति** । गुणान्यत्वाभाव-कर्मान्यत्वाभावोभयेत्यर्थः। विशिष्टसत्तावान् जातेरित्यत्र साध्यव्याप-कतावच्छेदकरूपावच्छिन्नप्रतियोगिताकस्य गुणान्यत्वाद्यभावस्याधिकरणाप्रसिद्ध्याति-व्याप्तिनिरासादादिपदमुपात्तम्, आदिपदेन घटाभाववृत्तित्वविशिष्टवाच्यत्ववान् अभा-

वत्वादित्यादेः सङ्ग्रहः । साध्यव्यापकतावच्छेदकरूपावच्छिन्नव्यधिकरणधर्मावच्छिन्नाभाववद्वृत्तित्वविशिष्टस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वात्तस्य च हेतौ सत्त्वादिति ।

## ❀ जागदीशी ❀

**अत्रापि येन सम्बन्धेन व्यापकता तेन सम्बन्धेनाभावो निवेश्यः । तेन समवायावच्छिन्नवह्न्यभावकूटाधिकरणवृत्तित्वाभावस्य वह्न्यवयवत्वादिनिष्ठस्य हेतावसत्त्वेपि वह्निमान् तत्पर्वतत्वादित्यादौ नाव्याप्तिः, न तु विशेषणताविशेषेणैव साध्यव्यापकत्वं तादृशरूपावच्छिन्नाभावश्च ग्राह्यः, साध्यस्य गुणसामान्यस्याभाव इत्युत्तरग्रन्थविरोधात्, गुणस्य दैशिकविशेषणतासम्बन्धेन गुणाव्यापकत्वात् ।**

## ❀ दीपिका ❀

अथैवमपि वह्निमान् तत्पर्वतत्वादित्यत्राव्याप्तिः, समवायसम्बन्धावच्छिन्नवह्न्यभावघटितकूटाधिकरणीभूततत्पर्वतनिरूपितवृत्तित्वसामान्याभावस्य वह्न्यवयवत्वादौ प्रसिद्धस्य तत्पर्वतत्वहेतावसत्त्वादत आह—**अत्रापीति** । एतल्लक्षणेपीत्यर्थः । साध्यव्यापकतावच्छेदकीभूतसम्बन्धावच्छिन्नप्रतियोगिताकाभावो ग्राह्य इति फलितोर्थः । तेन = व्यापकतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावग्रहणेन ।

ननु स्वरूपेणैव साध्यव्यापकत्वं तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावश्च ग्राह्यः, तावतैव समवायेन वह्न्यभावमादाय वह्निमान् तत्पर्वतत्वादित्यादौ नाव्याप्तिरित्यत आह—**न त्विति । तादृशरूपावच्छिन्नेति** । स्वरूपसम्बन्धावच्छिन्न-साध्यव्यापकतावच्छेदकरूपावच्छिन्नेत्यर्थः । स्वरूपेण साध्यव्यापकत्वे गृह्यमाणे ग्रन्थविरोधमाह—**साध्यस्येति** । ग्रन्थविरोधमुपपादयति—**गुणस्येति** ।

ननु व्यापकतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रवेशे समवायेन वह्न्यभावमादाय वह्निमान् धूमादित्यादावव्याप्तिसम्भवे स्थलान्तरानुधावनं व्यर्थमिति चेन्न, साध्याभावकूटाधिकरणनिरूपितवृत्तित्वाभावस्य तादृशस्य हेतुतावच्छेदकसम्बन्धेन वृत्तिमद्वृत्तित्वाभावात्, व्यधिकरणधर्मावच्छिन्नाभावस्य तादृशत्वेन लक्षणगमनाय संयोगसम्बन्धावच्छिन्नवृत्तित्वाभावस्याव्याप्यवृत्तितयात्र विशेषणदानेप्यवारणाच्चेति ।

## ❀ जागदीशी ❀

यत्तु साध्यतावच्छेदकसम्बन्धेनैव व्यापकत्वम्, तादृशरूपावच्छिन्नाभावश्च निवेश्य इति। तत्तुच्छम्, वृत्त्यनियामकसम्बन्धेन साध्यतायां तदवच्छिन्नप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तिप्रसङ्गात्, धूमवान् वह्नेरित्यादावतिव्याप्तेश्च, संयोगेन द्रव्यस्याव्याप्यवृत्तितया व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकानामेव संयोगसम्बन्धावच्छिन्नद्रव्याभावानां व्याप्यवृत्तित्वात्तत्कूटाधिकरणवृत्तित्वसामान्याभावस्य वृत्तिमद्वृत्तेर्व्यधिकरणधर्मावच्छिन्नाभावस्यैव तथात्वात्, तादात्म्येन प्रमेयव्यापकतावच्छेदकं यत्प्रमेयत्ववाच्यत्वादिकं तेन सम्बन्धेन तदवच्छिन्नाभावाप्रसिद्ध्या तादात्म्येन प्रमेयसाध्यके सद्धेतावव्याप्तेरसकृदावेदितत्वाच्च।

न च द्रव्यं घटादित्यत्र कालिकसम्बन्धेन हेतावतिव्याप्तिः, साधनसमानाधिकरणद्रव्यत्वाभावकूटस्य कालिकसम्बन्धेनाधिकरणे महाकाले हेतुतावच्छेदकसम्बन्धेन वृत्तिमन्मात्रस्यैव वृत्तेर्व्यधिकरणधर्मावच्छिन्नाभावस्यैव तथात्वादिति वाच्यम्, दैशिकविशेषणतया तादृशयावदभावाधिकरणत्वादिति भावः।

## ❀ दीपिका ❀

साध्यतावच्छेदकसम्बन्धेन साध्यव्यापकत्वस्य, साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य च ग्रहणे वह्निमान् तत्पर्वतत्वादित्यत्र समवायेन वह्न्यभावमादाय नाव्याप्तिरिति मतं दूषयितुमुपन्यस्यति—**यत्त्विति**। **तादृशरूपावच्छिन्नेति**। साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यव्यापकतावच्छेदकरूपावच्छिन्नेत्यर्थः। तन्मतं दूषयति—**तत्तुच्छमिति**। **तदवच्छिन्नेति**। वृत्त्यनियामकसम्बन्धावच्छिन्नेत्यर्थः। **अव्याप्तिप्रसंगादिति**। तथा च स्वामित्वसम्बन्धेन साध्यतायां धनी चैत्रत्वादित्यत्र स्वामित्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्याऽव्याप्तिरिति भावः। यत्तुमतेतिव्याप्तिबीजमाह—**संयोगेन द्रव्यस्येति**। **तत्कूटाधिकरणेति**। व्यधिकरणधर्मावच्छिन्नसंयोगसम्बन्धावच्छिन्नद्रव्याभावकूटाधिकरणेत्यर्थः। **तथात्वादिति**। हेतुतावच्छेदकसम्बन्धेन वृत्तिमद्वृत्तित्वादित्यर्थः। एवं च संयोगेन द्रव्याभावस्याव्याप्यवृत्तित्वाद्व्याप्यवृत्तित्वघटितलक्षणाघटकतया घटत्वेन द्रव्याभावकूटाधिकरणनिरूपितव्यधिकरणधर्मावच्छिन्नवृत्तित्वाभावस्य वह्नौ हेतौ सत्त्वेन

धूमवान् वह्नेरित्यादावतिव्याप्तिरिति भावः। तादात्म्येन प्रमेयवान् धूमादित्यादावव्याप्तिश्चैतन्मते, साध्यतावच्छेदकीभूततादात्म्यसम्बन्धेन प्रमेयव्यापकतावच्छेदकीभूतप्रमेयत्व-वाच्यत्वाद्यवच्छिन्नतादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्धेरित्याह—**तादात्म्येनेति**। तेन = तादात्म्येन। **तदवच्छिन्नेति**। प्रमेयत्व-वाच्यत्वाद्यवच्छिन्नेत्यर्थः।

**न चेति**। वाच्यमिति परेणान्वयः। तथात्वात्=वृत्तिमद्वृत्तित्वात्। तथा च व्यधिकरणधर्मावच्छिन्नतादृशवृत्तित्वाभावस्य घटादौ हेतौ सत्त्वेन द्रव्यं घटादित्यत्रातिव्याप्तिरिति भावः। अतिव्याप्तिं निराकुरुते—**दैशिकविशेषणतयेति**। स्वरूपसम्बन्धेनेत्यर्थः। **तादृशेति**। साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकव्याप्यवृत्ति-हेतुसमानाधिकरणेत्यर्थः। एवं च स्वरूपेण द्रव्यत्वाभावकूटाधिकरणीभूत-गुणादिनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तित्वसामान्याभावस्यात्मगगनादौ प्रसिद्धस्य घटादावसत्त्वेन नातिव्याप्तिरिति भावः।

❀ जागदीशी ❀

**तद्घटभिन्नं घटत्वादित्यादौ साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकयावदभावाधिकरणीभूततद्घटवृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावो घटत्वेपीत्यतिव्याप्तिरत उक्तं यावन्त इति।**

❀ दीपिका ❀

तादृशवृत्तित्वाभावे यावत्त्वनिवेशफलमाह—**तद्घटभिन्नमिति**। एवं च यावत्त्वानिवेशे तद्घटभिन्नं घटत्वादित्यत्र तद्घटभेदाभावाधिकरणीभूततद्घटवृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावस्य घटत्वे सत्त्वादतिव्याप्तिः। तन्निवेशे तु यावदन्तर्गतस्य तद्घटनिरूपितवृत्तित्वसामान्याभावस्य घटत्वहेतावसत्त्वेन नातिव्याप्तिरिति भावः।

न च दैशिकविशेषणतया तद्घटभिन्नत्वाभावस्याधिकरणाप्रसिद्ध्यैव नातिव्याप्तिः कथं यावत्त्वविशेषणमिति वाच्यम्, तथापि तद्घटान्यत्वप्रकारकप्रमाविशेष्यत्वाभावस्यापि यावदन्तर्गतस्य साध्याभावस्य तादृशसम्बन्धेन तदधिकरणीभूततद्घटवृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावस्य घटत्वहेतौ सत्त्वादतो यावन्त इति मान्याः।

❀ दीधितिः ❀

**केवलान्वयिनः संयोगाद्यभावस्याभावाः संयोगादयो न**

व्याप्यवृत्तयः, एवं साध्यस्य गुणसामान्यस्याभावो द्रव्यत्वाधिकरणे उत्पत्तिकालावच्छेदेन वर्तमानोपि न व्याप्यवृत्तिः।

## ❀ जागदीशी ❀

धूमवान् वह्नेरित्यादौ नातिव्याप्तिः, तत्र तत्तदयोगोलकावृत्तित्वावच्छिन्नाभावकूटाधिकरणाप्रसिद्धेः। वह्निमान् संयोगसामान्याभाववान् वा धूमादित्यादावव्याप्तिः, साधनसमानाधिकरणस्य साध्यव्यापकतावच्छेकीभूतसंयोगसामान्याभावत्वावच्छिन्नप्रतियोगिताकस्य वह्निसंयोगकूटस्याधिकरणाप्रसिद्धेरतो व्याप्यवृत्तिपदमित्याह—केवलेत्यादिना। केवलान्वयिन इत्यनेन साध्यव्यापकत्वमाविष्कृतम्। संयोगादीत्यादिना वह्निसंयोगत्वाद्यवच्छिन्नाभावसंग्रहः। तेन प्राचां मते द्रव्ये संयोगसामान्याभावस्यासत्वेपि न क्षतिः। दैशिकाव्याप्यवृत्तिसाध्यके प्रयोजनमुक्त्वा कालिकाव्याप्यवृत्तिसाध्यके तदाह—एवमिति। ननु तादृशरूपावच्छिन्नप्रतियोगिताकानां वास्तवाभावानामेव लक्षणघटकत्वात् संयोगात्मकाभावमादाय नाव्याप्तिरत उक्तम्—एवमितीत्यपि केचित्। न व्याप्यवृत्तिरिति। तथा च गुणसामान्याभावस्य साधनसमानाधिकरणत्वेपि व्याप्यवृत्तित्वाभावादेव गुणवान् द्रव्यत्वादित्यादौ नाव्याप्तिः, अन्यथा गुणसामान्याभावस्यापि साधनसमानाधिकरणसाध्याभावतया तद्घटितकूटाधिकरणसमवेतत्वसामान्याभावस्य वृत्तिमति नित्यैकत्वादौ प्रसिद्धस्य द्रव्यत्वहेतावसत्वादव्याप्तिरेव स्यादिति भावः।

## ❀ दीपिका ❀

साधनसमानाधिकरणयावदभावे व्याप्यवृत्तित्वानिवेशे धूमवान् वह्नेरित्यत्र नातिव्याप्तिः, यावदन्तगतस्य तत्तदयोगोलकावृत्तित्वावच्छिन्नाभावकूटस्याधिकरणाप्रसिद्धेः, किन्तु संयोगसामान्याभाववान् वह्निमान् वा धूमादित्यादावव्याप्तिः, हेतुसमानाधिकरणसंयोगत्वावच्छिन्नप्रतियोगिताकाभावस्य वह्निसंयोगकूटस्याधिकरणाप्रसिद्धेः। व्याप्यवृत्तित्वनिवेशे तु निरूक्ताभावस्याव्याप्यवृत्तित्वाल्लक्षणाघटकत्वेन नाप्रसिद्धिनिबन्धनाव्याप्तिरित्यभिप्रेत्याह—**धूमवान् वह्नेरित्यादि**। तेन = आदिपदेन संयोगाभावस्य ग्रहणेन। **तथा चेति**। अभावे व्याप्यवृत्तित्वनिवेशे चेत्यर्थः। अन्यथा = व्याप्यवृत्तित्वानिवेशे। **तद्घटितेति**। गुणसामान्याभावघटितेत्यर्थः।

❀ दीधितिः ❀

**उक्तरूपावच्छिन्नप्रतियोगिताकाः क्वचिदप्रसिद्ध्यादिसम्पादकाः पुनरभावा न साधनसमानाधिकरणाः।**

❀ जागदीशी ❀

स्वसमानाधिकरणेत्यस्य व्यावृत्तिमाह—उक्तरूपेति। साध्यव्यापकतावच्छेदकरूपावच्छिन्नेत्यर्थः। क्वचिदिति। वह्निमान् धूमादित्यादौ घटपटाद्यात्मकतत्तद्विपक्षावृत्तित्वावच्छिन्नाभावकूटस्यापि निरुक्ताभावतया तदधिकरणाप्रसिद्धिनिबन्धनाव्याप्तिवारणार्थमेव स्वसमानाधिकरणेत्युक्तमिति भावः। तद्घटभिन्नं पटत्वादित्यादौ वाच्यं ज्ञेयत्वादित्यादौ च साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावकूटवत्त्वं तद्घट एव प्रसिद्धमतस्तत्राव्याप्त्यसम्भवात् क्वचिदित्युक्तम्। अत्र च हेत्वधिकरणयत्किंचिद्व्यक्तौ दैशिकविशेषणतया वर्तमानत्वमेव हेतुसमानाधिकरणत्वं बोध्यम्। तेन पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ जले तेजसि च साधनसमानाधिकरणस्य जलावृत्त्यभावस्य तेजोवृत्त्यभावस्य च निरुक्तरूपावच्छिन्नप्रतियोगिताकत्वात् तदुभयघटितकूटवज्जात्यादौ हेतोरवृत्तित्वेपि नातिव्याप्तिः, हेत्वधिकरणजलादिप्रत्येकनिष्ठं यत्तादृशकूटं तदधिकरणजलादौ हेतोः सत्त्वादिति भावः।

❀ दीपिका ❀

निरुक्ताभावतया=साध्यव्यापकतावच्छेदकरूपाच्छिन्नप्रतियोगिताकव्याप्यवृत्त्यभावतया। स्वसामानाधिकरण्यप्रवेशे तु घटावृत्त्यभाव-पटावृत्त्यभावादीनां धूमसामानाधिकरण्यविरहान्न यावदन्तर्गतत्वमिति भावः। क्वचिदप्रसिद्ध्यादिसम्पादका इति दीधितिग्रन्थे क्वचित्पदस्वारस्यं सूचयति—**तद्घटभिन्नमिति**। ननु घटावृत्तित्वावच्छिन्नाभाव-मठावृत्तित्वावच्छिन्नाभावादीनां घटत्वमठत्वस्वरूपाणां यावदन्तर्गतानां कथं कूटाधिकरणत्वं तद्घट एव प्रसिद्धम्, साध्यवन्निष्ठस्य स्वप्रतियोगिमत्ताबुद्धिविरोधिताघटकसम्बन्धेन निवेशे तेषां यावदनन्तर्गत्वेपि स्वरूपसम्बन्धेन निवेशेनैवोपपत्तौ तादृशसम्बन्धेन निवेशे प्रयोजनाभावादिति चेन्न, यावदभावे स्वातन्त्र्येण स्वरूपेण वृत्तिमत्त्वनिवेशेनापि वारणसम्भवादिति ध्येयम्। ननु हेतुसामानाधिकरण्य-

निवेशेपि पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ जले तेजसि च हेतुसमानाधिकरणस्य जलावृत्त्यभावस्य तेजोवृत्त्यभावस्य च यावदन्तर्गततया तदुभयघटितकूटाधिकरण-जात्यादिनिरूपितवृत्तित्वाभावस्य हेतौ सत्त्वेनातिव्याप्तिरित्यत आह— **अत्र चेति**। तेन = निरुक्तहेत्वधिकरणत्वविवक्षणेन। **निरुक्तरूपेति**। साध्यव्यापकतावच्छेदकीभूतजलावृत्तित्वादिरूपेत्यर्थः। अतिव्याप्तिवारणप्रकारमाह— **हेत्वधिकरणेति**। ननु जलावृत्तिर्नास्ति तेजोवृत्तिर्नास्तीत्याद्यभावमादायाधिकरणाप्रसिद्धयातिव्याप्त्यभावाद्ग्रन्थासङ्गतिरिति चेन्न, यद्यत्सम्बन्धेन व्यापकत्वं तत्तत्सम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावकूटनिवेशापेक्षया लाघवेन साध्यव्यापकताघटकीभूतयत्किंचित्सम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावकूटवत्त्वं विवक्षितम्। तथा च पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ साध्यव्यापकताघटकीभूतसमवायेन साध्याभावकूटाधिकरणवृत्तित्वाभावस्य हेतौ सत्त्वादतिव्याप्तिरतस्तन्निवेशः। न च स्पन्दो महाकालत्वादित्यादौ कालिकसम्बन्धमादायातिव्याप्तिरिति वाच्यम्, हेत्वधिकरणयत्किंचिद्व्यक्तौ दैशिकविशेषणतया वर्तमानसाध्याभावप्रतियोगितावच्छेदकत्वस्य साध्यव्यापकताघटकसम्बन्धे निवेशादतिव्याप्तिविरहात्। केचित्तु कालिको न व्यापकताघटकसम्बन्धः, भाविभूतस्पन्देषु व्यभिचारादिना ग्रन्थकृतैवोक्तत्वादित्याहुः। न च यत्किंचित्त्वघटिततयाननुगम इति वाच्यम्, हेत्वधिकरणवृत्तिसाध्याभावप्रतियोगितावच्छेदकसाध्यव्यापकताघटकसम्बन्धविशिष्टत्वं व्याप्तिरित्यनुगमसम्भवात्। वै० च स्वावच्छिन्नतादृशसाध्याभावकूटाधिकरणनिरूपितवृत्तित्वाभावकूटवत्त्वसम्बन्धेनेति संक्षेपः।

### ❁ दीधितिः ❁

**उक्तसमुदायाधिकरणवृत्तित्वतदभाववृत्तिमत्त्वानि पूर्वोक्तरीत्या प्रत्येतव्यानीत्यादिकमपास्तम्।**

### ❁ जागदीशी ❁

उक्तसमुदायेति। तादृशाभावकूटवद्वृत्तित्वं हेतुतावच्छेदकसम्बन्धेन ग्राह्यम्। तेन द्रव्यभिन्नं सत्त्वादित्यादौ साधनसमानाधिकरणसाध्याभावकूटाधिकरणे महाकाले वृत्तिमन्मात्रस्यैव कालिकसम्बन्धेन वृत्तावपि नातिव्याप्तिः। तादृशवृत्तित्वाभावस्तादृशवृत्तित्वत्वसमनियतप्रतियोगिताको ग्राह्यः।

तेन पर्वतवृत्तित्वादिसामान्याभावस्य वृत्तित्वालोकान्यत्वोभयत्वावच्छिन्नाभावस्य च हेतावसत्त्वेपि वह्निमान् धूमादित्यादौ वाच्यं ज्ञेयत्वादित्यादौ नासम्भवः। अधिकमभिहितं प्राक्। वृत्तिमद्वृत्तय इत्यत्रापि वृत्तिमत्त्वं हेतुतावच्छेदकसम्बन्धेनैव ग्राह्यम्। तेन संयुक्तसामान्याभावस्यापि तादृशस्य समवायेन वृत्तिमति जात्यादौ प्रसिद्धस्य हेतावसत्त्वेपि वह्निमान् धूमादित्यादौ नाव्याप्तिरित्यर्थः। साध्यवत्ताधीविरोधिताघटकसम्बन्धेन कूटाधिकरणतायाः पूर्वमुक्तायाः प्रकृतलक्षणाघटकत्वात्तन्नोक्तम्। इत्यादिकमिति। आदिपदेन गुरोः प्रतियोगितावच्छेदकत्वमते तादृशवृत्तित्वत्वावच्छिन्नाभावा वृत्तिमद्वृत्तयो यावन्तस्तद्वत्त्वमित्यादेः सूचनम्।

## ❀ दीपिका ❀

अथ द्रव्यभिन्नं सत्त्वादित्यत्रातिव्याप्तिः, सत्त्वसमानाधिकरणद्रव्यत्वात्मकसाध्याभावकूटाधिकरणमहाकाल-निरूपितकालिकसम्बन्धावच्छिन्नवृत्तित्वसामान्याभावस्याप्रसिद्ध्या व्यधिकरणधर्मावच्छिन्नतादृशवृत्तित्वाभावस्य लक्षणघटकस्य सत्त्वहेतौ सत्त्वादित्यत आह—**तादृशाभावेति**। साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताक-स्वसमानाधिकरण-व्याप्यवृत्त्यभावेत्यर्थः। तेन=तादृशवृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशनेन। **नातिव्याप्तिरिति**। तथा च तादृशसाध्याभावकूटाधिकरण-महाकाल-निरूपितहेतुतावच्छेदकीभूतसमवायसम्बन्धावच्छिन्नवृत्तित्वाभावस्य रूपादौ प्रसिद्धस्य सत्त्वहेतावसत्त्वान्नातिव्याप्तिरिति भावः। ननु वह्निमान् धूमादित्यादावसम्भवः, व्यधिकरणधर्मावच्छिन्नवह्न्यभावकूटाधिकरण-पर्वतनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वसामान्याभावस्य मीनादौ प्रसिद्धस्य धूमहेतावसत्त्वादित्यत आह—**तादृशवृत्तित्वाभाव इति**। तादृशसाध्याभावकूटाधिकरणवृत्तित्वाभाव इत्यर्थः। तेन=तादृशवृत्तितात्वसमनियतप्रतियोगिताकत्वार्थकरणेन। **नासम्भव इति**। एवं च पर्वतवृत्तित्वसामान्याभावस्य वृत्तित्वालोकान्यत्वोभयाभावस्य न लक्षणघटकत्वम्, तादृशवृत्तित्वत्वस्य जलादिवृत्तितायां सत्त्वेन तत्र निरुक्ताभावीयप्रतियोगिताया असत्त्वेन तादृशवृत्तित्वत्वव्यापकप्रतियोगिताकत्वाभावात्, निरुक्तोभयाभावीयप्रतियोगिताया आलोकभेदेपि सत्त्वेन तत्र निरुक्तवृत्तितात्वस्यासत्त्वेन निरुक्तोभयाभावस्य तादृशवृत्तितात्वव्याप्यप्रतियोगिताकत्वाभावादिति भावः। अथैवमपि वह्निमान् धूमादित्यादावव्याप्तिः, व्यधिकरणधर्मावच्छिन्नवह्न्यभाव-

कूटाधिकरणनिरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वसामान्याभावस्य जात्यादौ प्रसिद्धस्य धूमहेतावसत्त्वादित्यत आह—वृत्तिमद्वृत्तय इति। तेन = हेतुतावच्छेदकसम्बन्धेन वृत्तिमत्त्वविवक्षणेन। तादृशस्य = तादृशवृत्तितात्वसमनियतप्रतियोगिताकस्य।

❀ चिन्तामणिः ❀

**तद्विशिष्टज्ञानस्याभावधीहेतुत्वात्। अन्यथा निर्विकल्पादपि घटो नास्तीति प्रतीत्यापत्तेः। गवि शशशृङ्गाभावप्रतीतेरसिद्धेः, शशशृङ्गं नास्तीति च शशे शृङ्गाभाव इत्यर्थः।**

इति व्यधिकरणधर्मावच्छिन्नाभावमूलम्।



❀ दीधितिः ❀

**तद्विशिष्टेति।** विशेषणतावच्छेदकविशिष्टज्ञानस्य विशिष्टवैशिष्ट्यप्रत्ययहेतुत्वात्, अभावप्रत्ययो हि घटत्वादिविशिष्टस्य घटादेः प्रतियागित्वमवगाहमानो विशेषणस्यापि घटत्वादेस्तदवच्छेदकत्वमवगाहते, न स्वातन्त्र्येण, घटो नास्तीत्येव प्रतीतेः। तदिहाभावप्रत्ययो यदि व्यधिकरणेन धर्मेण विशिष्टं प्रतियोगिनं नावगाहते, नावगाहते एव तदा तस्यापि प्रतियोगितावच्छेदकत्वम्, अथावगाहते तर्हि भ्रम एव, नहि ततोर्थसिद्धिरिति भावः।

❀ जागदीशी ❀

अभावबुद्धौ प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य हेतुतायाः स्वयमनङ्गीकाराद्भावमाह—विशेषणेति। ननु घटत्वेन पटो नास्तीति बुद्धौ घटत्वविशिष्टवैशिष्ट्यावगाहित्वमेवासिद्धमत आह—अभावेत्यादिना। स्वातन्त्र्येणेति। न घटत्वादेः प्रतियोगिवृत्तित्वमविषयीकृत्येत्यर्थः। तद्धर्मावच्छिन्नप्रतियोगित्वसंसर्गाभावप्रत्ययस्य तादृशसम्बन्धेन तद्धर्मविशिष्टवैशि-

ष्ट्यावगाहित्वनियमादिति भावः। ननु तद्घटत्वेन घटो नास्तीत्याकारके समानाधिकरणधर्मावच्छिन्नाभावप्रत्यक्षे व्यभिचारान्नोक्तनियम इत्यत आह—घटो नास्तीत्येवेति। तथा च विशेषधर्मेण सामान्याभावोप्यसिद्ध एवेति तद्व्यक्तित्वेन घटो नास्तीति प्रतीतेर्घटे तद्व्यक्तित्वाभावमात्रावगाहित्वादेव न व्यभिचारः, अन्यथा सामान्यरूपेण विशेषाभावस्यापि स्वीकारापत्तेः, वाच्यत्वेन घटो नास्तीत्यपि प्रत्ययप्रसङ्गादिति भावः। प्रकृते योजयति—तदिहेति। इह=घटत्वेन पटो नास्तीत्यभिलापस्थले। तस्य=व्यधिकरणधर्मस्य। अवगाहत इति। व्यधिकरणधर्मेण विशिष्टं प्रतियोगिनमित्युक्तेनान्वयः। नहि तत इति। प्रमाया एवार्थसाधकत्वादिति भावः।

## ❀ दीपिका ❀

प्रतियोग्यवृत्तिश्चेति परममूलस्य पूर्वोक्तानुमाने अभावज्ञाने प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्य हेतुत्वमेवानुकूलतर्क इत्यभिप्रायेणाह—परममूले—**तद्विशिष्टेति**। प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्य प्रतियोगिविशेषिताभावलौकिकप्रत्यक्षत्वावच्छिन्नं प्रति हेतुत्वादित्यर्थः। ननु तादृशहेतुत्वे मानाभाव इत्यत आह—**अन्यथेति**। तादृशहेतुत्वानङ्गीकारे इत्यर्थः। ननु अभावप्रत्यक्षमात्रे प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानं न हेतुः, ह्रदत्वादिना अभावप्रत्यक्षे व्यभिचारात्। नाप्यभावत्वप्रकारकाभावप्रत्यक्षे, मानाभावादित्यतः तद्विशिष्टेति ग्रन्थस्य भावमाह—दीधितौ—**विशेषणतावच्छेदकेति**। यथा समवायि वाच्यत्ववदिति विशिष्टवैशिष्ट्यावगाहिबोधे वाच्यत्वं समवायीति ज्ञानं हेतुस्तथा समवायित्वेन वाच्यत्वं नास्तीति बोधेपि तद्धेतुः, अभावबोधस्य विशिष्टवैशिष्ट्यावगाहिबोधत्वादिति भावः। ननु समवायित्वेन वाच्यत्वं नास्तीति बोधस्य विशेष्ये विशेषणमिति न्यायेनैव विषयताशक्तित्वमभ्युपेयते, न तु विशिष्टवैशिष्ट्यबोधत्वमिति वाच्यत्वं समवायीति ज्ञानं विनापि ततो बोधोत्पत्तौ बाधकाभाव इति चेन्न, विशेष्ये विशेषणमिति रीत्या नाभावबोधः, अननुभवात्। न चानुभवो विवादग्रस्त इति वाच्यम्, प्रतियोगिज्ञानाभावदशायां तत्सत्त्वेभावत्वावच्छेदेन घटीयत्वादिबाधकाले वा इन्द्रियसम्बद्धविशेषणतारूपसामग्रीबलात् नेत्याकारकप्रतियोग्यमिश्रिताभावप्रत्यक्षवारणाय इन्द्रियसम्बद्धविशेषणताया एव घटत्वादिविशिष्टवैशिष्ट्यावगाह्यभावलौकिकप्रत्यक्षत्वमेव कार्यतावच्छेदकं वाच्यम्। एवं च विशेष्ये विशेषणमिति रीत्या नाभावधीः, सामग्र्यभावादित्याशयात्।

नन्नु समवायितया वाच्यत्वं नास्तीत्यादौ भ्रमरूपमेव वाच्यत्वं समवायीति ज्ञानं सम्भवति, एवं च तादृशाभावधीविषयतया व्यधिकरणधर्मावच्छिन्नाभावसिद्धिः निष्प्रत्यूहा। न च वाच्यत्वं न समवायीति विशेषदर्शनदशायां न भ्रमात्मकं ज्ञानं सम्भवतीति तत्कालीनायाः समवायितया वाच्यत्वं नास्तीति बुद्धेः वाच्यत्वादौ समवायित्वाभावविषयकत्वस्यावश्यकत्वे भ्रमकालीनाया अपि तादृशबुद्धेः स एव विषयोऽस्तु कृतं व्यधिकरणधर्मावच्छिन्नाभावेनेति वाच्यम्, तादृशभ्रमदशायां समवायितया वाच्यत्वं नास्तीति बोधस्याप्रसिद्धत्वमेवेत्याह—**घटत्वविशिष्टेति**। दीधितौ-विशेषणस्य = विशेषणप्रतियोगिघटादिनिरूपितविशेषणतापन्नस्य घटत्वादेः। तदवच्छेदकत्वम् = प्रतियोगितावच्छेदकत्वम्। **अवगाहत इति**। प्रतियोगितया भासमानघटादिनिरूपितविशेषणतावच्छिन्ना या स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नघटत्वादिनिष्ठप्रकारता तच्छाली भवतीत्यर्थः। न स्वातन्त्र्येणेत्यत्र घटत्वादेः प्रतियोगितावच्छेदकत्वमवगाहते इत्यनुषङ्गः। तथा च तादृशसम्बन्धावच्छिन्नघटत्वादिप्रकारताप्रतियोगिनिरूपितप्रकरत्वानवच्छिन्ना न भवतीत्यर्थः। नियमस्वरूपमाह—**तद्धर्मावच्छिन्नेति। संसर्गाभावेति**। अन्योन्याभावभिन्नाभावेत्यर्थः। निरुक्तनियमे व्यभिचारमाशंकते—**ननु घटत्वेनेति**। दीधितौ—**घटो नास्तीत्येवेति**। अभावांशे स्वातन्त्र्येण घटत्वादिवैशिष्ट्योल्लेखरहिताया एवेत्यर्थः। **प्रतीतेरिति**। अनुभवादिति शेषः। ननु विशेषरूपेण सामान्याभावानङ्गीकारे तद्व्यक्तित्वेन घटो नास्तीति प्रतीतिः कथमुपपद्येतेत्यत आह—**तद्व्यक्तित्वेनेति**। अन्यथा = निरुक्तनियमानङ्गीकारे। इष्टापत्तावनिष्टमाह—**वाच्यत्वेनेति**। स च प्रत्ययो न केषामपि सम्मत इति भावः। दीधितौ-तस्यापि प्रतियोगितावच्छेदकत्वम् = तस्य प्रतियोगितावच्छेदकत्वमपि, तथा च मानाभावेन व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वासिद्धिरिति भावः।

अथ व्यधिकरणधर्मस्य प्रतियोगिविशेषणतयैव व्यधिकरणधर्मावच्छिन्नाभावबुद्धौ भानमुपेयते इत्याशयेनाशङ्कते—**अथावगाहत इति**। समाधत्ते—**तर्हि भ्रम एवेति**। व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वांशेपि भ्रम एवेत्यर्थः। वैशिष्ट्यभाने एवावच्छेदकताया भानादवच्छेदकताया वैशिष्ट्यनियततया तद्बाधे तस्या अपि बाधादिति भावः।

❀ दीधितिः ❀

**यदि पुनरानुभविको लोकानां स्वरसवाही घटत्वेन पटो**

नास्तीत्यादिरनुभवः, तदा तादृशाभावनिवारणं गीर्वाणगुरूणामप्यशक्यमिति मन्तव्यम् ।

इति व्यधिकरणधर्मावच्छिन्नाभावस्य दीधितिः ।

❀ जागदीशी ❀

ननु उक्तव्याप्त्यप्रयोजकत्वाद्धटत्वादेः प्रतियोगिवृत्तित्वमनवगाह्यापि तदवच्छेदकत्वावगाहिप्रत्ययसम्भवाद्व्यधिकरणधर्मावच्छिन्नाभावः सेत्स्यतीत्यत आह—यदि पुनरिति । स्वरसवाही=यथार्थः, स च पटे घटत्वानवगाहने एव सम्भवतीति भावः । घटत्वेन पटो नास्तीत्यादिपदेन घटत्वेन द्रव्यं नास्ति, द्रव्यत्वेन घटो नास्तीत्याद्यनुभवस्योपग्रहः । तुल्ययुक्त्या तदवृत्तिधर्मेण तस्यैव विशेषरूपेण सामान्यस्य सामान्यरूपेण च विशेषस्याभावे बाधकाभावादिति ध्येयम् । घटत्वेन घटो नास्तीति पाठे घटत्वेनेत्यस्य घटत्वत्वविशिष्टेनेत्यर्थः । तेन तद्रूपेण प्रतियोग्यंशे घटत्ववत्तामनवगाह्य जातेः समानाधिकरणधर्मावच्छिन्नाभावप्रत्यक्षे एवोक्तनियमस्य व्यभिचारो दर्शितः । तादृशाभावेति । स्वसमनियतान्यधर्मावच्छिन्नप्रतियोगिताकाभाववारणमित्यर्थः । तेन सामान्यरूपेण विशेषस्य विशेषरूपेण च सामान्यस्याभावः संगृहीतः । यत्तु द्रव्यत्वेन घटो नास्तीति प्रतीतेर्घटत्वाद्यवच्छिन्नाभावेनैवोपपत्तौ सामान्यरूपेण च विशेषाभावादौ मानाभाव इति । तत्प्रागेव दूषितमिति । यदपि संयोगसंसर्गकघटत्वाद्यवच्छिन्नाभावत्वावच्छेदेन लाघवात्तादृशसम्बन्धेन घटत्वावच्छिन्नस्य विरोधित्वकल्पनात् संयोगेन घटादिमति घटत्वादिना पटाद्यभावस्यासम्भव इति कैश्चिदुक्तम् । तदपि मन्दम्, तावतापि गगनत्वादिना घटादेर्वाच्यत्वत्वादिना ज्ञेयत्वादेश्च व्यधिकरणधर्मावच्छिन्नाभावस्य दुर्वारत्वादिति । गगनादेरधिकरणस्य स्वरूपसंसर्गकवाच्यत्वत्वावच्छिन्नाभावस्य चाप्रसिद्ध्या तत्र विरोधस्य कल्पयितुमशक्यत्वादिति दिक् ।

इति व्यधिकरणस्य जागदीशी ।

## ❀ दीपिका ❀

व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वं द्रढयति—**नन्विति**। उक्तव्याप्तौ=प्रतियोगिवृत्तित्वावगाहिन एव प्रतियोगितावच्छेदकत्वमिति नियमे। **तदवच्छेदकत्वेति**। प्रतियोगितावच्छेदकत्वेत्यर्थः। घटत्वेन द्रव्यं नास्तीति प्रतीत्या विशेषरूपेण सामान्याभावस्य द्रव्यत्वेन घटो नास्तीति प्रतीत्या च सामान्यरूपेण विशेषाभावस्य च सिद्धिरिति भावः। तदवृत्तिधर्मेण = प्रतियोग्यवृत्तिधर्मेण। तस्य = प्रतियोगिनः। विशेषरूपेण = घटत्वादिना। सामान्यस्य=द्रव्यादेः। सामान्यरूपेण=द्रव्यत्वादिना। विशेषस्य = घटादेः।

सामान्यरूपेण विशेषाभावमनङ्गीकुर्वतां मतं दूषयितुमुपन्यस्यति—**यत्त्विति**। **प्रागेव दूषितमिति**। तुल्ययुक्त्येत्यादिना ग्रन्थेन, बाधकाभाव एव मानमिति भावः। तादृशसम्बन्धेन = संयोगसम्बन्धेन। विरोधाभावं दर्शयति-गगनादेरधिकरणस्येति।

वस्तुतः दीधितिकृता यदि तदा इति पदाभ्यां तादृशप्रतीतेरानुभाविकत्वे विवादं सूचयता व्यधिकरणधर्मावच्छिन्नाभावस्यापारमार्थिकत्वं ध्वनितमिति नव्याः।

इति यतीन्द्रस्वामिश्रीरामप्रपन्नाचार्यविरचिता जागदीशीव्यधिकरणस्य दीपिकाटीका समाप्ता।



**समाप्तश्चायं ग्रन्थः**

